# DEDICATION

( WITH PERMISSION )

TO

## RAJADHIRAJ SHRI HARISINGHJI SAHIB,

**General Minister, Government of Mewar, Udaipur**

**( Ex-Home Minister, Government of Jaipur )**

The illustrious Lord of Achrol ( Jaipur ) the famous Head of the Balbhadrot scion of the most glorious Kachhawa clan that is the direct descendant of the Great Shri Ram Chandraji the most Luminious Luminary of the solar Race who is on mother's side, the ornament of the Champawat Rathoras-who is glorified with the white flag ( obtained by his heroic ancestor as token of his faithful and devoted Service to his mighty master the Maharaja Man Singh Ist. the Great ) who is a peerless patron of Sanskrit learning and a protector of the Sanatan Dharma, highly remarkable for his Liberality, Justice, Affable demeanour and kind-heartedness etc. etc.

**This Book**

'CHANDRALOKA' ( The light of the moon ) The great authority on Sanskrit Rhetoric by the great Savant Jayadeva-with the Sanskrit commentary the 'PAURNAMASI' ( The full Moon ) and the Hindi Translation, the 'KATHABHATTI',...... is most respectfully dedicated.

by

The Kathabhatta Pandit NAND KISHORE SHARMA Namawal-Sahityacharya-Research Scholar Great Grand Son of the Raj Guru Kathabhatta Pandit Shri Chotti Lalji Namawal of Jaipur.

The Champawatji's Temple, Jaipur City.

The Author

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## व्याख्याविषयेऽभिमतमिदं

### जयपुरराजकीयसंस्कृतकालेजभूतपूर्वाध्यक्षाणां श्रीमतां महामहोपाध्याय–व्याख्यानवाचस्पति–श्रद्धेयवर–

### श्रीगिरिधरशर्मचतुर्वेदमहाभागानाम्



जयपुरराजगुरुश्रीकथाभट्टवंशजेन श्रीनन्दकिशोरशर्मणा साहित्याचार्येण विरचिता चन्द्रालोकस्य संस्कृतभाषामयी टीका पौर्णमासी, हिन्दीभाषामयी च कथाभट्टीया मया विलोकिता। अलङ्कारशास्त्रे प्रविविक्षूणां छात्राणां कृते परमसुपयोगमावहति चन्द्रालोकाभिधो ग्रन्थोऽयमिति नात्र स्तोकोऽपि सन्देहः। तत एव चास्य पठनपाठने प्रायेण सर्वत्रैव सुप्रचलिते। इयं च व्याख्या छात्राणां विशेषेणोपकारिकेति मदीयो विश्वासः। सरलतया ग्रन्थार्थविवरणम्, सङ्क्षिप्योक्तानां विषयाणां ग्रन्थान्तरसाहाय्येन नातिविस्तृतं प्रपूरणम्, उदाहरणेषु समन्वयप्रदर्शनं चेत्याद्या विशेषता अत्रावलोक्यन्ते। सर्वतोऽधिका विशेषेणोल्लेखनीया चेयं विशेषता, यदिह गुणालङ्कारव्यञ्जनालक्षणाभिधादीनां क्रमिकविकासेतिहासः सप्रमाणं तत्तत्प्रकरणे सङ्क्षेपेण निर्दिष्टः। अस्मिन्नितिहासप्रधाने काले ग्रन्थानां टीकानां चैवंविधानां सुमहत्यावश्यकता वर्तत इति नात्र कस्यापि देशकालविदुषो विवादावसरः, तदस्मिन्मार्गे प्रथमं पदमुपन्यस्यतो ग्रन्थकृतः प्रतिभापरिश्रमौ श्लाघ्यौ मन्महे। परिपाटीयमन्यैरपि टीकाकृद्भिरनुस्रियेतेत्याशास्यते। हिन्दीभाषाविवरणं चापि मन्दमतीनां छात्राणामाधिक्येनोपकारमाधास्यति। अहमनयोष्टीकयोः सर्वत्र प्रचारमभिवाञ्छामि, अनेनैवोत्साहेन ग्रन्थनिर्माण–सम्पादननिबद्धपरिकरः सुरभारतीमनवरतमर्चतु नवयुवको ग्रन्थकृदिति हृदयेनाभिलष्यति—

पौष शु० २ सं० १९९२ वि०
जयपुरे } **गिरिधरशर्मा चतुर्वेदः**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# आरम्भभाषणम्

अथ श्रीजयदेवकविविरचितश्चन्द्रालोकाख्यो ग्रन्थः साहित्यविषयप्रविविक्षूणां कृते काव्यप्रकाशादिवत्कृत्स्नविषयप्रतिपादकतया प्रधानतमः काशिकजयपुरादिराजकीयसाहित्यपरीक्षासु पाठ्यत्वेनाध्ययनाध्यापनादिप्रचुरप्रचारोऽसावभिनवया पौर्णमासीसमाख्यया संस्कृतव्याख्यया कथाभट्टीयाख्यया च हिन्दीभाषाव्याख्यया विभूष्य विदुषां छात्राणां च निकट उपह्रियत इत्यस्ति नो भूयानानन्दावसरः। प्रद्योतनभट्टाचार्यविनिर्मितं शरदागमाख्यं बालभट्टापरनामधेयवैद्यनाथपायगुण्डेरचितमपरं रमाभिधानं चेति व्याख्यानद्वयमद्यावधि मुद्रितं नो नेत्रविषयम्। एतयोः प्रथमं शरदागमाख्यं सर्वतः प्राचीनमतिसङ्क्षिप्तं च, द्वितीयं प्रौढं विस्तृतं चेति हिन्दीभाषाविभूषितमभिनवं तदत्रायोजितम्।

## जयदेवः।

(१)पीयूषवर्षापरनामधेयोऽसौ कविरनेकदिनसाध्यसत्रविद्याप्रवीणात् याज्ञिकान्महादेवात्सुमित्रायां जन्म लेभ इति चन्द्रालोकग्रन्थात्प्रतीयते(२)। मातापित्रोर्नामसादृश्यात्प्रसन्नराघवनिर्माताऽप्ययमेव बाधकप्रमाणाभावान्निश्चीयते। अयं कौण्डिन्यगोत्रसमुत्पन्नो विदर्भदेशान्तर्वर्त्तिकुण्डिनपुरनिवासीत्यपि ज्ञायते(३)।

गीतगोविन्दकारो जयदेवस्तु भोजदेवरामादेवीपुत्र इत्यस्ति द्वयोः पार्थक्ये साधकं प्रमाणम्(४)। स्फुटीभवति चास्य कवेर्नव्यन्यायनैपुण्यमपि प्रसन्नराघवनाटकात्। यथा—

---

(१) 'चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कृती' (चन्द्रा० १ म० २)
'जयदेवस्यैव पीयूषवर्ष इति नामान्तरम्'
इति गागाभट्टविरचितराकागमटीकायाम्।

(२) 'महादेवः सत्रप्रमुखमखविद्यैकचतुरः।
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ' (चन्द्रा० १ म० १६)

(३) 'कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः'।
'लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षिजन्मनः।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः'॥ (प्रसन्नरा० १।१४—१५)

(४) 'श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु'।
(गीतगो० १२।११)

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## व्याख्याविषयेऽभिमतमिदं

### जयपुरराजकीयसंस्कृतकालेजभूतपूर्वाध्यक्षाणां श्रीमतां महामहोपाध्याय–व्याख्यानवाचस्पति–श्रद्धेयवर–

## श्रीगिरिधरशर्मचतुर्वेदमहाभागानाम्



जयपुरराजगुरुश्रीकथाभट्टवंशजेन श्रीनन्दकिशोरशर्मणा साहित्याचार्येण विरचिता चन्द्रालोकस्य संस्कृतभाषामयी टीका पौर्णमासी, हिन्दीभाषामयी च कथाभट्टीया मया विलोकिता। अलङ्कारशास्त्रे प्रविविक्षूणां छात्राणां कृते परमंमुपयोगमावहति चन्द्रालोकाभिधो ग्रन्थोऽयमिति नात्र स्तोकोऽपि सन्देहः। तत एव चास्य पठनपाठने प्रायेण सर्वत्रैव सुप्रचलिते। इयं च व्याख्या छात्राणां विशेषेणोपकारिकेति मदीयो विश्वासः। सरलतया ग्रन्थार्थविवरणम्, सङ्क्षिप्योक्तानां विषयाणां ग्रन्थान्तरसाहाय्येन नातिविस्तृतं प्रपूरणम्, उदाहरणेषु समन्वयप्रदर्शनं चेत्याद्या विशेषता अत्रावलोक्यन्ते। सर्वतोऽधिका विशेषेणोल्लेखनीया चेयं विशेषता, यदिह गुणालङ्कारव्यञ्जनालक्षणाभिधादीनां क्रमिकविकासेतिहासः सप्रमाणं तत्तत्प्रकरणे सङ्क्षेपेण निर्दिष्टः। अस्मिन्नितिहासप्रधाने काले ग्रन्थानां टीकानां चैवंविधानां सुमहत्यावश्यकता वर्तत इति नात्र कस्यापि देशकालविदुषो विवादावसरः, तदस्मिन्मार्गे प्रथमं पदमुपन्यस्यतो ग्रन्थकृतः प्रतिभापरिश्रमौ श्लाघ्यौ मन्महे। परिपाटीयमन्यैरपि टीकाकृद्भिरनुस्रियेतेत्याशास्यते। हिन्दीभाषाविवरणं चापि मन्दमतीनां छात्राणामाधिक्येनोपकारमाधास्यति। अहमनयोष्टीकयोः सर्वत्र प्रचारमभिवाञ्छामि, अनेनैवोत्साहेन ग्रन्थनिर्माण–सम्पादननिबद्धपरिकरः सुरभारतीमनवरतमर्चतु नवयुवको ग्रन्थकृदिति हृदयेनाभिलष्यति—

पौष शु० २ सं० १९९३ वि०
जयपुरे } गिरिधरशर्मा चतुर्वेदः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# आरम्भभाषणम्

अथ श्रीजयदेवकविविरचितश्चन्द्रालोकाख्यो ग्रन्थः साहित्यविषयप्रविविक्षूणां कृते काव्यप्रकाशादिवत्कृत्स्नविषयप्रतिपादकतया प्रधानतमः काशिकजयपुरादिराजकीयसाहित्यपरीक्षासु पाठ्यत्वेनाध्ययनाध्यापनादिप्रचुरप्रचारोऽसावभिनवया पौर्णमासीसमाख्यया संस्कृतव्याख्यया कथाभट्टीयाख्यया च हिन्दीभाषाव्याख्यया विभूष्य विदुषां छात्राणां च निकट उपहियत इत्यस्ति नो भूयानानन्दावसरः। प्रद्योतनभट्टाचार्यविनिर्मितं शरदागमाख्यं बालभट्टापरनामधेयवैद्यनाथपायगुण्डेरचितमपरं रमाभिधानं चेति व्याख्यानद्वयमद्यावधि मुद्रितं नो नेत्रविषयम्। एतयोः प्रथमं शरदागमाख्यं सर्वतः प्राचीनमतिसङ्क्षिप्तं च, द्वितीयं प्रौढं विस्तृतं चेति हिन्दीभाषाविभूषितमभिनवं तदत्रायोजितम्।

## जयदेवः।

(१)पीयूषवर्षापरनामधेयोऽसौ कविरनेकदिनसाध्यसत्रविद्याप्रवीणात् याज्ञिकान्महादेवात्सुमित्रायां जन्म लेभ इति चन्द्रालोकग्रन्थात्प्रतीयते(२)। मातापित्रोर्नामसादृश्यात्प्रसन्नराघवनिर्माताऽप्ययमेव बाधकप्रमाणाभावान्निश्चीयते। अयं कौण्डिन्यगोत्रसमुत्पन्नो विदर्भदेशान्तर्वर्त्तिकुण्डिनपुरनिवासीत्यपि ज्ञायते(३)।

गीतगोविन्दकारो जयदेवस्तु भोजदेवरामादेवीपुत्र इत्यस्ति द्वयोः पार्थक्ये साधकं प्रमाणम्(४)। स्फुटीभवति चास्य कवेर्नव्यन्यायनैपुण्यमपि प्रसन्नराघवनाटकात्। यथा—

---

(१) 'चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती' (चन्द्रा० १ म० २)
'जयदेवस्यैव पीयूषवर्ष इति नामान्तरम्'
इति गागाभट्टविरचितराकागमटीकायाम्।

(२) 'महादेवः सत्रप्रमुखमखविद्यैकचतुरः।
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ' (चन्द्रा० १ म० १६)

(३) 'कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः'।
'लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षिजन्मनः।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः'॥ (प्रसन्नरा० १।१४—१५)

(४) 'श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु'।
(गीतगो० १२।११)

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पर्यालोचने १३६३ ई० वर्षेभ्यः पूर्वतनो जयदेवस्य सत्ताकालः स्थिरीक्रियते। किं च शार्ङ्गधरपद्धतेः पूर्ववर्ती १३३० ई० वर्षे स्थितः शिङ्गभूपालो रसार्णवसुधाकरस्य २५८, २७७ पृष्ठयोः प्रसन्नराघवनाटकं नामतोऽग्रहीदिति निश्चीयते त्रयोदशशताब्दी जयदेवस्य सत्ताकालोपशोभिता।

इत्थमस्य कवेः समये निश्चिते पक्षधरापराख्यो जयदेवोऽयमेवेति यत् केषाञ्चित्कथनं तद् भ्रान्तिविलसितम्। महानैयायिकः पक्षधरमिश्रो मिथिलायां पञ्चदशशताब्द्यामासीदिति निश्चयेन महत् समयव्यवधानमनयोः।

## जयदेवस्य प्रसन्नराघवनाटकम्।

प्रसन्नराघवाख्यं नाटकं चन्द्रालोकश्चेत्यस्य कवेर्द्वौ ग्रन्थौ। प्रसन्नराघवनाटकं रामायणकथाधारेण निर्मितम्। अत्र सप्ताङ्काः, ३९२ श्लोकाश्च। प्राथमिकेषु चतुर्ष्वङ्केषु सीतास्वयंवर–परशुरामपराभव–धनुर्भङ्गकालिकरावणबाणासुरवर्णनानि चमत्कारीणि। गङ्गायमुनासरयूणां नदीनां संवादैर्वालिसुग्रीवयोः कथा वर्णिता। हंसमुखेन रामचन्द्रस्य हेममृगानुसरणं प्रदर्शितम्। गोदावरीसागरयोः संवादैर्जानकीहरणम्, जटायुमृत्युः, जानक्याश्च ऋष्यमूकगिरौ भूषणत्यागादयः कथांशाः प्रतिपादिताः। षष्ठेऽङ्के रामविलापः, सप्तमे च युद्धकाण्डकथा वर्णिता। अस्य नाटकस्य भाषाऽत्यन्तं मनोरमा। महात्मनो गोस्वामितुलसीदासस्य रामायणेऽस्मिन्नाटके च बहुत्र साम्यं दृश्यते। यथा नाटके—

'चन्द्रहास हर मे परितापं रामचन्द्रविरहानलजातम्।
त्वं हि कान्तिजितमौक्तिकचूर्णं धारया वहसि शीतलमम्भः' ॥ इति।

तुलसीकृतरामायणेऽपि तथैव— ( ६।३२ )

'चन्द्रहास हरु मम परितापं, रघुपति विरह अनल सञ्जातम्।
शीत निशा तव असिवर धारा, कह सीता हरु मम दुख भारा' ॥ इति।

यथा वा प्रसन्नराघवे—

'उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका' ॥ इति।

तथैव तुलसीकृतरामायणेऽपि—

'सो पर नारि लिलार गोसाईं, तजहु चौथ चन्दा की नाईं'। इति।

## जयदेवस्य चन्द्रालोकः

चन्द्रस्यालोक इवालोकः प्रकाशः काव्योपयोगिविद्यानां यस्मिन्निति व्युत्पत्त्या

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चन्द्रालोकशब्दो निष्पाद्यते । अत्र काव्यप्रकाशादिवत्सर्वेऽपि काव्यविषया अलङ्कारध्वन्यादयः संनिवेशिताः । अत्र दश मयूखाः, २६४ श्लोकाश्च । प्रथमे मयूखे—काव्यलक्षणं रूढयौगिकादयः शब्दस्य भेदाः, वाक्य-खण्डवाक्यादीनि दर्शितानि । द्वितीये—शब्दार्थवाक्यादिदोषास्तत्परिहाराश्च लिखिताः । तृतीये—अक्षरसंहत्यादीनि काव्यज्ञापकानि लक्षणानि लिखितानि । चतुर्थे—श्लेषादयो गुणाः । पञ्चमे—शब्दालङ्काराः शतमर्थालङ्काराश्च । षष्ठे—रसादयो रीतयो वृत्तयश्च प्रदर्शिताः । सप्तमे—ध्वनिभेदाः सन्ति । अष्टमे—गुणीभूतव्यङ्ग्यानां, नवमे—लक्षणायाः । दशमे—चाभिधाया वर्णनमस्ति । एतेषु निम्नलिखितविषयाः काव्यप्रकाशादिभ्योऽधिकाः । यथा प्रथमे मयूखे-रूढयौगिकादिशब्दानां नव भेदाः । तृतीयेऽक्षरसंहत्यादीनि काव्यज्ञापकलक्षणानि, सप्तमे वक्तृस्यूतस्वाङ्कुरितादयो व्यङ्ग्यभेदाः, नवमे तटस्थगतार्थगतत्वादयो लक्षणाभेदाः ( २७१ पृष्ठे ), दशमे चाभिधायाः षड्भेदेषु वस्तुयोगनिर्देशाख्यौ द्वौ भेदौ चेति । किं च काव्यप्रकाशादस्य बहुत्र मतभेदोऽपि दृश्यते । यथाऽलङ्कारप्रकरणे—'स्वरूपस्यातिरोधानेऽपि भेदस्य तिरोधानं मीलितम्, भेदस्य तिरोधानेऽपि द्वयोः साम्यकारणाद् व्यावर्तकास्फुरणं सामान्यमिति चन्द्रालोकाशयः । काव्यप्रकाशाशयस्तु—'स्वरूपस्य तिरोधाने सत्यपि भेदस्यातिरोधानं मीलितम्, स्वरूपप्रतीतावपि साम्यवशाद् भेदतिरोधानं सामान्यम्, इत्यादि ।

एष चन्द्रालोको ग्रन्थश्चिरन्तनादेव कालादध्ययनाध्यापनादिषु लब्धप्रचुरप्रचारः प्रारम्भिकशिक्षाप्रतिष्ठित आसीदिति मन्महे । अत एव महाविदुषा सुप्रसिद्धेनाप्पयदीक्षितेनास्य ग्रन्थस्यार्थालङ्कारप्रकरणमाश्रित्यैव कुवलयानन्दाख्यो नवीनो ग्रन्थो निरमायि । किं बहुना, श्रीयोधपुराधीशेन १६८२–१७३५ ई० वर्षेषु वर्तमानेन प्रथमेन यशवन्तसिंहमहाराजेन हिन्दीभाषायां छन्दोनिबद्धो (१) भाषाभूषणाख्योऽलङ्कारग्रन्थोऽपि चन्द्रालोकाश्रयेणैव प्रणीत इति व्यक्तम् । उदाहरणार्थं कानिचित्पद्यानि समुद्ध्रियन्ते । यथा चन्द्रालोके—

'पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' ॥ इति ।

---

( १ ) भूमिकाटिप्पण्यादिपरिष्कृतोऽयं ग्रन्थः प्रियसुहृदा श्रीव्रजरत्नदास बी० ए० एल्० एल्० बी० महोदयेन १८३३ ई० वर्षे प्रकाशितः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तथैव भाषाभूषणेऽपि— ( ५।२५ )

'पर्यस्त जु गुन एक को और विषै आरोप।
होइ सुधाकर नाहि यह बदन सुधाधर ओप' इति।

यथा वा चन्द्रालोके— ( ५।२६ )

'भ्रान्तापह्नुतिरन्यस्य शङ्कया तथ्यनिर्णये।
शरीरं तव सोत्कम्पं ज्वरः किं न सखि स्मरः' ॥ इति।

तथैव भाषाभूषणेऽपि—

भ्रान्त अपह्नुति वचन सों भ्रम जब परको जाइ।
ताप करत है, ज्वर नहीं, सखी मदन तप आइ' ॥ इति।

यथा वा चन्द्रालोके— ( ५।२८ )

'कैतवापह्नुतिर्व्यक्ते व्याजाद्यैर्निह्नवे पदैः।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात्' ॥ इति।

तथैव भाषांभूषणेऽपि—

'कैतवपह्नुति एक कों मिसु करि बरनैं आन।
तीछन तीय-कटाछ-मिस वरषत मनमथ वान' ॥ इति।

यथा वा चन्द्रालोके— ( ५।११६ )

'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्।
त्वयि दातरि राजेन्द्र! याचकाः कल्पशाखिनः' इति।

तथैव भाषाभूषणेऽपि—

'अलङ्कार अत्युक्ति यह वर्नत अतिशय रूप।
जाचक तेरे दानते भए कल्पतरु भूप' ॥ इति।

## चन्द्रालोकस्य प्राचीनाष्टीकाः।

अत्राष्टौ प्राचीनाष्टीकाः समुपलभ्यन्ते। तासु प्रथमा प्रद्योतनभट्टाचार्यविनिर्मिता सर्वतः प्राचीना शरदागमाख्या चन्द्रालोकप्रकाशापरनाम्नापि व्यवह्रियते। यथोक्तम्— 'क्रियते तस्य निदेशाच्चन्द्रालोकप्रकाशोऽयम्।
शरदागम इति विदितो भट्टाचार्येण यत्नेन' ॥ इति।

शरदागम-निर्माता पद्मनाभमिश्रः प्रद्योतनभट्टाचार्यापराभिधो बलभद्रसूनुर्मिथिलाभिजनो बघेलावंशावतंसरीवाधीश्वरश्रीवीरभद्रभूपराजसभाप्रमुखपण्डितो बभूव वीरभद्रदेवनिदेशादेव च शरदागमाख्या व्याख्या विरचिताऽनेन। शरदागमव्याख्याने तावत्— 'अस्य स्थितितो नगरी भवतोऽयोध्या भवलाखिला।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति रघुवंशादधिको जयति बघेलाभिधो वंशः' ॥
देवपतेरिव शक्तिर्यस्य जये भूभृतां प्रथिता ।
श्रीवीरभद्रदेवस्तत्र धराखण्डलो जातः ॥
दशरथतो रघुपतिरिव तस्मादिह वीरभानुभूपालः ।
आबद्धधर्मसेतुर्जगति समुद्रे समुद्भूतः ॥'

इत्यादि वीरभद्रदेवः स्तुतः । प्रशस्तपादभाष्यटीकायां सेतुनाम्न्यामपि कविनाऽयं भूपः सविशेषं स्तुतः । अनेन वीरभद्रदेवेनापि कन्दर्पचूडामणि-ग्रन्थो १६३३ विक्रमवत्सरे निर्मितः । अयं महाराजो रामचन्द्रभूपपुत्र आसीत् । पितुरेकवर्षानन्तरमेवायं १६५० विक्रमवत्सरे स्वर्लोकं जगामेति श्रूयते । शरदागमव्याख्या १६४० वर्षे निर्मितेत्यपि ज्ञायते । पद्मनाभस्य ज्येष्ठो भ्राता विश्वनाथः, कनिष्ठो भ्राता च गोवर्धन आसीत् । गोवर्धनेन केशवमिश्रकृततर्कभाषायाः, अन्नम्भट्टकृततर्कसंग्रहस्य च व्याख्या विरचिता ।

पद्मनाभनिर्मिता ग्रन्था इमे—

न्याये—( १ ) चिन्तामणिपरीक्षा ( गंगेशस्य तत्त्वचिन्तामणेष्टीका )
वैशेषिके ( २ ) कणादरहस्यम् ( स्वकृतराद्धान्तमुक्ताहाराख्यग्रन्थटीका )
,, ( ३ ) वर्धमानेन्दुः (वर्धमानस्य द्रव्यकिरणावलीप्रकाशव्याख्या)
,, ( ४ ) वैशेषिकसेतुः ( प्रशस्तपादभाष्यटीका )
,, ( ५ )–किरणावलीभास्करः
,, ( ६ )–न्यायकन्दलीटीका
वेदान्ते ( ७ )–खण्डनखण्डखाद्यटीका
धर्मशास्त्रे ( ८ )–प्रायश्चित्तप्रकाशः
साहित्ये ( ९ )–वीरभद्रदेवचम्पूः ( १५७६ ई० वर्षे )
,, ( १० )–शरदागमः ( चन्द्रालोकप्रकाशः ) इति ।

इयं शरदागमटीका १९२९ ई० वर्षे जयकृष्णदासगुप्तमहोदयेन काशीतः प्रकाशिता

## अप्पयदीक्षितस्य कुवलयानन्दः ।

असौ ग्रन्थश्चन्द्रालोकालङ्कारप्रकरणस्य व्याख्यारूप एव । उक्तं चात्रैव—

'येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते' ॥ इति ।

'चन्द्रालोको विजयतां शरदागमसम्भवः ।'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रम्यः कुवलयानन्दो यत्प्रसादादभूदयम्' ॥ इति च ।

अत्र चन्द्रालोको ग्रन्थः, चन्द्रस्य प्रकाशश्च । शरदागमाख्या व्याख्या, शरत्कालागमनं च । कुवलयानन्दो ग्रन्थः, कुवलयस्य कुमुदस्य चानन्दः, इति श्लेषः ।

अत्र कुवलयानन्दे पञ्चविंशत्यधिकशतमलङ्काराः । अस्मिन् ग्रन्थे नव टीकाः प्राप्यन्ते । तास्वेका रामचन्द्रात्मजतत्सदुपाख्यवैद्यनाथेनालङ्कारचन्द्रिका निर्मिता । यथोक्तम्—'असौ कुवलयानन्दश्चन्द्रालोकोत्थितोऽपि सन् ।

प्रतिष्ठां लभते नैव विनाऽलङ्कारचन्द्रिकाम्' इति ॥

अस्य वैद्यनाथस्य सत्ताकालः १६८३--१७११ ई० वर्षान्तोऽवसीयते । अनेन काव्यप्रकाशोदाहरणचन्द्रिका १६८३ ई० वर्षे निर्मिता । प्रभानाम्नी शास्त्रदीपिकाटीका च १७११ ई० वर्षे रचिता । चन्द्रालोकव्याख्याकारः 'पायगुण्डे' इत्युपाख्यतया महादेवपुत्रतया चास्माद् भिन्नः । अयं तु रामचन्द्रपुत्रो विट्ठलपौत्रस्तत्सदुपाख्यश्च । एतत्कृता ग्रन्था इमे—अग्निहोत्रमन्त्रार्थचन्द्रिका, अलङ्कारचन्द्रिका ( कुवलयानन्दटीका ), कादम्बरीटीका विषमपदवृत्तिः , कालमाधवकारिकाटीका, काव्यप्रकाशोदाहरणचन्द्रिका, काव्यप्रदीपप्रभा, चतुराङ्गविनोदः, दर्शपौर्णमासमन्त्रार्थचन्द्रिका, न्यायबिन्दुः ( मीमांसासूत्रटीका ), न्यायमालिका ( मीमांसाग्रन्थः ), पाखण्डखण्डनम् , पिष्टपशुनिर्णयः, बौधायनदर्शपूर्णमासव्याख्या, विषमश्लोकव्याख्या, शास्त्रदीपिकाटीका प्रभा, सीतारामविहारटीका, चातुर्मास्यप्रयोगो वेदान्तकल्पतरुश्चेति । इयमलङ्कारचन्द्रिका, कुवलयानन्दटीका बम्बईनगरे प्रकाशिता । आशाधरकृता कुवलयानन्दकारिकाव्याख्या दीपिकापि मुद्रिता । नागेशभट्टकृता—अलङ्कारसुधा, विषमपदव्याख्या चाद्यावधि न मुद्रिता । गङ्गाधरवाजपेयिनो रसिकरञ्जनीटीका च हालास्यनाथशास्त्रिणा श्रीरङ्गस्थयन्त्रालयतः प्रकाशिता । भीमसेनेन विदुषा कुवलयानन्दखण्डनाख्यो ग्रन्थो निर्मितः । असावमुद्रित एव । एष कुवलयानन्दकारोऽप्पयदीक्षितश्चतुरधिकशतग्रन्थान् जग्रन्थ । तेषु वृत्तिवार्तिकम् , चित्रमीमांसा, कुवलयानन्दश्चेत्यलङ्कारशास्त्रग्रन्थत्रयम् । १५२०-१५९३ ई० वर्षान्तोऽस्य जीवनकाल इति सीतारामजोशी एम. ए. महोदयमतम् । १५५४—१६२६ ई० वर्षान्तोऽस्य जीवनकाल इति वङ्गभाषामये संस्कृतसाहित्यस्येतिहासे निर्दिष्टम् ।

विश्वेश्वरभट्टकृता राकागमाख्या व्याख्या ।

अयं विश्वेश्वरो गागाभट्टापराख्यो निर्णयसिन्धुकारस्य कमलाकरभट्टस्य ज्येष्ट-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भ्रातुर्दिवाकरस्य पुत्रः। अयं दिनकरः शान्तिसारायनेकग्रन्थनिर्माता। अनेन गागाभट्टेनैव १६७४ ई० वर्षे महाराष्ट्रराजशिवराज(१)महोदयस्य राज्याभिषेकः कृतः। १६२०-१६८५ ई० वर्षावधिको गागाभट्टस्य जीवनकालः। राकागमस्यैव सुधेतिनामान्तरम्। व्याख्येयं १९२८ ई० वर्षे मुद्रिता। अस्य विदुषो ग्रन्था इमे—आपस्तम्बपद्धतिः, आशौचदीपिका, कायस्थदीपकः [१६७७ ई० वर्षे], जातिविवेकः, तुलादानप्रयोगः, दिनकरोद्योतः। [अत्र आचाराशौचकालदानपूर्तप्रतिष्ठाप्रायश्चित्तव्यवहारवर्षकृत्यव्रतशूद्रश्राद्धसंस्काराणां विवेचनम्], निरूढपशुबन्धप्रयोगः, पिण्डपितृयज्ञप्रयोगः, प्रयोगसारः, भाट्टचिन्तामणिः (जैमिनीयसूत्रटीका), सुज्ञानदुर्गोदयः, समयनयः (१६८१ ई० वर्षे शम्भुराजकृते कृतः), सापिण्ड्यविचारः, मीमांसाकुसुमाञ्जलिः, शिवार्कोदयः, श्लोकवार्त्तिकटीका चेति।

## विश्वेश्वरकृता वाजचन्द्रचन्द्रिका।

इयं व्याख्या तेनैव गागाभट्टापराख्येन विश्वेश्वरविदुषा वाजचन्द्रभूपनाम्ना विरचिता। इयं व्याख्या जयपुरनरेशपुस्तकालये विद्यते। इयमप्यमुद्रिता। इयं राकागमाख्यव्याख्याकारेण निर्मिता।

## पायगुण्डोपाख्यवैद्यनाथकृता रमाख्या व्याख्या।

अयं टीकाकारो महादेवाद् वेण्यां समुत्पन्नः। मिताक्षराव्यवहाराध्यायटीकायां त्वस्य मातुर्नामोमा प्राप्यते। अयं कुवलयानन्दव्याख्यालङ्कारचन्द्रिकाकर्तुर्वैद्यनाथाद् भिन्नः। अलङ्कारचन्द्रिकाकारो वैद्यनाथो रामचन्द्रपुत्रस्तत्सदुपाख्यश्च। यथा—

'विद्वद्वृन्दमहामान्यरामचन्द्रात्मजन्मना।
विदुषा वैद्यनाथेन कृताऽलङ्कारचन्द्रिका'॥ इति।

'इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृतालङ्कारचन्द्रिकाख्याकुवलयानन्दटीका सम्पूर्णा' इति च।

---

(१) शिवाजीमहाराजस्य १६२७–१६८० ई० वर्षान्तो जीवनकालः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चन्द्रालोकटीकायां तु 'पायगुण्डे' इत्युपाख्या स्पष्टं निर्दिष्टा । यथा—

'नत्वा गुरुं वैद्यनाथः पायगुण्डेति कीर्तितः ।
व्याख्यां रमाख्यां तनुते चन्द्रालोके विलासिनीम्' इति ।

अयं पायगुण्डेवैद्यनाथो महावैयाकरणनागेशशिष्यः । एतेन नागेशकृतवैयाकरणसिद्धान्तमध्यमञ्जूषायाः कलाख्या टीका १८१२ वि० वर्षे ( १७५६ ई० वर्षे ) निर्मिता । एतद्ग्रन्था इमे—अर्थसङ्ग्रहः ( व्याकरणग्रन्थः ), छाया ( महाभाष्यप्रदीपोद्योतप्रथमाह्निकटीका ), परिभाषेन्दुशेखरटीका ( कला-कुञ्जिका च ), परिभाषेन्दुशेखरसंग्रहः, भक्तितरङ्गिणी, भूषणटीका, रप्रत्याहारखण्डनम् , वृद्धशब्दरत्नशेखरः, वैयाकरणसिद्धान्तमञ्जूषाटीका कला-नाम्नी, शब्दकौस्तुभटीका प्रभा, लघुशब्दरत्नटीका भावप्रकाशाख्या ( मुद्रिता ), लघुशब्देन्दुशेखरटीका चिदस्थिमाला, सर्वमङ्गलाटीका, मिताक्षराव्यवहाराध्यायटीका बालंभट्टी, पराशरस्मृतिटीका, भरद्वाजस्मृतिटीका, चन्द्रालोकटीका चेति । अयं वैद्यनाथो बालंभट्टनाम्नापि व्यपदिश्यते । अस्य धर्मपत्नी लक्ष्मीरासीत् । अत एव मिताक्षराव्यवहाराध्यायटीका लक्ष्मीनाम्नापि कथ्यते । इयं चन्द्रालोकव्याख्याऽनेकवारं मुद्रिता ।

## विरूपाक्षकृता शारदशर्वरी व्याख्या—

इयं व्याख्याऽज्ञातसमया, अमुद्रिता च । चन्द्रालोकदीपिका, निगूढार्थदीपिका चेति द्वे व्याख्येऽज्ञातकर्तृकेऽज्ञातनाम्न्यावमुद्रिते चेत्यनयोर्विषये न किमपि वक्तुं पारयामः । एता अष्टौ प्राचीनाष्टीकाः ।

## पौर्णमासी ।

इयं व्याख्या विदुषां छात्राणां च सन्तोषायोपनिबद्धा । अस्यां विषयस्य क्रमिकाविर्भावः, मूलानुक्तोदाहरणन्यासः, लक्षणं तत्समन्वयः, अपेक्षितविषयसमासव्यासौ, भाषायाः सारल्यं सौष्ठवं चोल्लसति । चन्द्रालोकस्यात्र पूर्णतास्तीत्यन्वर्था पौर्णमासीसंज्ञा । रघुनाथभट्टस्य कालतत्त्वविवेचने ( ६४२ पृष्ठे ) पौर्णमासीशब्दस्येयं व्युत्पत्तिः प्रदर्शिता—'पूर्णश्चासौ माश्च चन्द्रमा इति पूर्णमाः पूर्णमास्यः पूर्णचन्द्रस्येयं पौर्णमासी । 'अत्र 'तस्येदम्' इति सूत्रेणाण्प्रत्ययः । 'माः स्मृतश्चन्द्रकालयोः' इति विश्वप्रकाशकोशान्मासश्चन्द्रवाचकता । अथवा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'पूर्णो माश्चन्द्रो वर्ततेऽस्याम्' इति व्युत्पत्त्या 'तदस्मिन् वर्तते' इति वार्तिकेनाण्-प्रत्यये 'टिड्ढाणञ्०' इति सूत्रेण च ङीप्कृते पौर्णमासीशब्दनिष्पत्तिः प्रस्तुतव्याख्याबोधकोऽयं शब्दोऽत्र लाक्षणिकः। यथा पौर्णमास्यां तिथौ चन्द्रस्य पूर्णता तथास्यां व्याख्यायां ( पौर्णमास्याम् ) चन्द्रालोकस्यार्थबोधने पूर्णता वर्तते।

## कथाभट्टीया हिन्दीभाषाटीका।

इयं व्याख्या हिन्दीभाषानुरागिणां कृतेऽत्रायोजिता। टीकाकारस्य प्रपितामहः सुविदितो जयपुरमहाराजश्रीरामसिंहदेवगुरुः श्रीछोटेलालापराभिधः श्रीहरगोविन्द-महानुभावो महाभारतपुराणकथापीयूषवर्षतया कथाभट्टपदवीसमलङ्कृत आसीदिति तत्परमपवित्रस्मृत्यर्थं टीकाया अस्याः कथाभट्टीयेति नाम निर्धारितम्।

## श्रीहरगोविन्दमहोदयः।

अस्य महानुभावस्य पितामहो जगन्नाथमहोदयो नामावालोपनामकदाधिमथविप्र-कुलप्रसूतो जोधपुरान्तर्गतपोकरणग्रामाधीशस्य गुरुः पुरोहितश्चासीत्। पोकरणस्वामि-ठाकुरश्रीदेवीसिंहस्य पुत्रः शबलसिंहस्यानुजः श्रीश्यामसिंहदेवः केनापि हेतुना पोकरणं परित्यज्य पूर्वं भरतपुरे ततो जयपुरे चायासीत्। एतेनैव ठाकुरश्यामसिंह-महोदयेन जयपुराधीशश्रीपृथ्वीसिंहमहाराजतः १८३० विक्रमवर्षे गीजगढाधिपत्यं समधिगतम्। अनेनैव ठाकुरश्यामसिंहमहोदयेन सार्धं पोकरणतो जगन्नाथमहोदयो जयपुरे समागत्य तत्संरक्षकत्वे न्यवसत्। जगन्नाथस्य ज्येष्ठपुत्रो जयकृष्णस्तस्मात्सुरूपादेव्यां १८६६ वैक्रमेऽब्दे आश्विनकृष्णाष्टमीदिने रविवारोपलक्षिते महालक्ष्मीपूजातिथौ चरित्रनायकः श्रीहरगोविन्दमहानुभावोऽजनि। अयं महानुभावोऽल्पीयस्येव वयसि महाविद्वानद्वितीयकथावाचकश्चासीत्। अत एवानेन जयपुर-नरेशश्रीजयसिंहमहाराज्ञ्यै चाम्पावतीश्रीचन्द्रकुमारिकायै श्रीमद्भागवतकथा १८९३ वैक्रमे वर्षे श्राविता। अनया कोटखावदाख्ये स्वग्रामे सभूमिकः कूपो भागवत-कथाया उपहारीकृतः। बाजडोलीग्रामस्य बूजग्रामस्य चैकैकं कूपं सभूमिकमियं राज्ञी चरित्रनायकाय व्यतरत्। इयं महाराज्ञी चाम्पावती पोकरणाधीशश्रीसवाई-सिंहपौत्री श्रीसालिमसिंहपुत्री चासीत्। अस्या जन्म १८४७ वि० वर्षे विवाहश्च १८६२ वत्सरे जयपुरवर्तिनि गीजगढाधीशेन सह बभूव।


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**इयं पोकरणाधीशगीजगढाधीशचांपावतवंशपरम्परा—**

रावभगवान्दासः ( भीनमालाधिपः )

|

ठाकुरमहासिंहः ( जोधपुरान्तर्वर्त्तिपोकरणाधीशः )

|

ठाकुरदेवीसिंहः

| | |
|---|---|
| ठा० शवलसिंहः | ठा० श्यामसिंहः ( जयपुरान्तर्वर्त्ति-गीजगढाधिपः ) |
| ठा० सवाईसिंहः | ठा० उम्मेदसिंहः |
| ठा० सालिमसिंहः | ठा० भारतसिंहः |
| ठा० विभूतिसिंहः | ठा० जुलारसिंहः |
| ठा० गुमानसिंहः | ठा० कानसिंहः |
| ठा० मङ्गलसिंहः (सी० आई० ई०) | ठा० श्रीमान् कुशलसिंहमहोदयः |
| ठा० श्रीमान् चैनसिंहः, एम० ए० एल० एल० बी०, रायबहादुरमहोदयः | |
| कुमारो भवानीसिंहः । | कुमारो मान्धातासिंहः । |
| भंवरविक्रमसिंहः । | भ्रमरसाहिवः |

कथापीयूषाप्लुता महाराज्ञीयं चाम्पावती जयपुरे रम्यं श्रीकृष्णमन्दिरं निर्माप्यास्मै चरित्रनायकाय १८९४ वत्सरे प्रदाय वैकुण्ठे एव वैकुण्ठोपासनायै १८९५ वत्सरे जगाम । असौ श्रीहरगोविन्दमहोदयश्चास्मिन्मन्दिरेऽनवरतमहा(१)भारतकथानिरतो बभूव । राजमाता चन्द्रावतीमहोदयापि चन्दलाईनामकस्वग्रामस्य सभूमिककूपमस्मै ददौ कथासंतुष्टा । माणिक्यचन्द्रश्रेष्ठिना १९०२ वि० वर्षे

---

(१) मेदपाटान्तर्गतबनेडानिवासिघनश्यामविप्रेण १८९६ विक्रमवर्षे श्रीचाम्पावतीमन्दिर एवेदं महाभारतपुस्तकं लिखितम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुराणघाटोद्याने, लालामोतीलालेन च १९२४ वि० वर्षे जयपुरद्वारनिकटे महाभारतकथायामुद्यानभूमिः सादरमर्पिता । किं बहुना, कथासन्तुष्टेन श्रीजयपुरपुरन्दरेणाप्यसौ महानुभावो जैतपुरा-गोकुलपुरा-लसाडिया-रामनिवास-मूण्डोतीग्रामैः सत्कलश्चामरशिविकाभ्युत्थानादिसमलङ्कृतो राजगुरुत्वेनाभिमतश्च । विद्याविलासिनीलालितो राजसभाप्रमुखपण्डितोऽयं महानुभावश्चाम्पावती (१) मन्दिरेऽस्मिन्नष्टादशवारं महाभारतं श्रोतृभ्यः श्रावयांबभूव । पुत्रपौत्रादिसमन्वितोऽनेकमणिभूसम्पत्तिशाली निरामयोऽयं महानुभावो द्वासप्ततितमे वर्षे श्रावणकृष्णनवम्यां १९३७ विक्रमवत्सरे स्वर्गसुखमनुभवन्—

'अत्यन्तगुणमेधावी चतुर्णामेव भाजनम् ।
अल्पायुरनपत्यो वा दरिद्रो वा रुजान्वितः ॥'

इति कस्यापि कवेः सूक्तं मोघं चक्रे । अस्य महोदयस्य राजगुरुकथाभट्टवृन्दावन-श्रीनारायण-शिवनारायणाख्यास्त्रयो विद्योतमानाः सूनव आसन् । साम्प्रतमेतेषां पुत्रपौत्रादयश्चास्मिन्मन्दिरे विद्योतन्तेतमाम् ।

## उपसंहारः ।

पुस्तकमिदं गीर्वाणवाणीप्रगाढप्रणयिभ्यो जयपुरान्तर्वर्त्यचरोलपुराधीशेभ्यः श्रीमद्भ्यो जयपुरमन्त्रिमण्डलान्तर्वर्तिभ्यो राजश्रीहरिसिंहमहोदयेभ्यः समुपहृतम् । तैश्च सानुरागं स्वीकृतमिति शुभाशीर्वादैस्तान् संयोजये ।

काशिकराजकीयसंस्कृतपाठशालाध्यक्षेभ्यो महामहोपाध्यायश्रीगोपीनाथकविराज एम्० ए० महोदयेभ्यः, जयपुरराजकीयसंस्कृतपाठालयाध्यक्षेभ्यो महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदमहाशयेभ्यश्च गुरुवरेभ्यः मदीया हार्दिकी श्रद्धा समुल्लसतु ।

काशी-चौखम्बा-बनारस-हरिदासाख्यसंस्कृतग्रन्थमालासञ्चालकाभ्यां श्रेष्ठिप्रवरश्रीजयकृष्णदासहरिदासगुप्तमहोदयाभ्यां गीर्वाणवाणीसमाराधकाभ्यामपि धन्यवादाः प्रदीयन्ते । विद्वद्वरेभ्योऽमरभारतीसेवकेभ्यः सति दोषसम्भवे—

'मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहश्चिरचिन्तनेऽपि'

इत्यादिन्यायेन क्षमःसमभ्यर्थ्यानेन ग्रन्थेन कमप्युपकारमाशास्ते—

| | |
|---|---|
| श्रीचाम्पावतीमन्दिरम्,<br>जयपुरम्<br>१९९३ वि. वत्सरे | कथाभट्टो—<br>नन्दकिशोरशर्मा |

---

(१) एतन्मन्दिरव्ययाय जैतपुराग्रामो नियतः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# तृतीय संस्करण के प्रकाशन पर निवेदन

'चन्द्रालोक' की पौर्णमासी तथा कथाभट्टीया संस्कृत तथा हिन्दी टीकाकार स्वर्गीय कथाभट्ट पंडित श्री नन्दकिशोर शर्मा की असमय में मृत्यु होजाने से विद्वत्समाज एवं उनके आत्मीय जनों को जो क्षति पहुंची है उसकी पूर्ति होना सहज नहीं है लेकिन उनकी अमरकीर्ति-साहित्य सुरभि अहर्निश जीवित और जागृत है। आज पौर्णमासी और कथाभट्टीया संस्कृत-हिन्दी टीकाओं से समलंकृत चन्द्रालोक का तृतीय संस्करण प्रकाशित हो रहा है जिससे स्व० श्री पं० नन्दकिशोरजी शर्मा विद्वत्समाज में जीवित से ही खड़े होरहे हैं। इस प्रकाशन से निःसन्देह उनकी दिवंगत आत्मा को भी अवश्यमेव शान्ति व प्रसन्नता हो रही होगी।

मैं इस प्रकाशन में अपनी ओर से कुछ घटाने बढ़ाने में इसके गौरव को कुछ कम करना ही मानता हूँ। इसकी प्रतिष्ठा एवं गौरव तो इसके यथावत् प्रकाशन में ही है जो वास्तव में स्वयं सर्वांगपूर्ण है। पर, यहाँ स्व० श्री पं० नन्दकिशोरजी शर्मा के जीवन-परिचय पर कुछ प्रकाश डाल देना असङ्गत एवं अरुचिकर न होगा। ये मेरे सहोदर अनुज भ्राता थे।

(१) जाति और आनुवंशिक परिचयः—

वत्स गोत्र समुत्पन्न 'नामावाल' अवटङ्क में दाधीच वंशावतंस श्री० पं० हरगोविन्दजी उपनाम छोटेलालजी हमारे पूज्य प्रपितामह एक महा प्रसिद्ध एवं सुविद्वान् तथा सुप्रतिष्ठित पुरुष हुए थे। उन्होंने अपने प्रगाढपाण्डित्य और कथाकला नैपुण्य से जयपुर महाराजा श्री जगतसिंह की महारानी श्रीचन्दकुँवर बाई को श्रीमद्भागवतादि महापुराणों की कथा सुनाकर संतुष्ट किया और इनके द्वारा राज्य के विभिन्न गावों में कुंआ, भूमि आदि स्थावर जंगम सम्पत्तियों को उपहार में प्राप्त किया और इन ही श्री चाँपावती चन्द्रकुंअर बाई ने जयपुर नगर के जौहरी बाजार में भगवान् श्रीकृष्ण का एक विशाल मन्दिर बनवाया और विक्रम संवत् १८९४ में हमारे प्रपितामह को सहर्ष दान कर दिया जो अद्यावधि हम लोगों ही के अधीनस्थ है। इनके द्वारा महाभारतादि कथाओं के श्रवण से संतुष्ट महाराजाधिराज जयपुर; सर सवाई रामसिंह बहादुर ने जैतपुरा, गोकुलपुरा, लसाडिया, मूँडोती, रामनिवास आदि गावों को आजीविका रूप में दिया और पालकी-चँवर तथा अभ्युत्थान (ताजीम) से सम्मानित तथा 'राजगुरु कथाभट्ट' की उच्चतम पदवी से अलंकृत किया और राजसभा के प्रधान पण्डित एवं राज्य प्रासाद पुस्तकालय के अध्यक्ष पद पर नियुक्त किया।

आपने अपने जीवन को हरिचिन्तन और पुराणेतिहासादि की कथाओं को श्रवण कराने में ही लीन किया। यहाँ तक कि आपने अपने जीवन काल में इस ही मन्दिर में महाभारत का अठारह बार श्रोताओं को ललित कथा सुनाकर पारायण किया और पुत्र पौत्रादिकों को अनेक सम्पत्ति व उत्कृष्ट प्रतिष्ठा सम्पन्न छोड़कर विक्रम संवत् १९३७ में, ७२ वर्ष की अवस्था में इस असार संसार से गोलोक यात्रा की। इनके श्री पं० वृन्दावनजी, श्रीनारायणजी उपनाम लछूजी तथा शिवनारायणजी नामक तीन पुत्र थे।

(२) जन्मकाल और बाल्यावस्थाः—

श्रद्धेय श्री पं० श्रीनारायणजी हमारे पितामह थे। इनके कथाभट्ट श्री पं० जयचन्द्रजी

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नामान्तर पं० फीसीलालजी तथा कथाभट्ट श्री पं० विजयचन्द्रजी नाम के दो पुत्र थे। कथाभट्ट श्री पं० जयचन्द्रजी हमारे पूज्य पिता थे। जो अत्यन्त सरल स्वभाव तथा विद्वान् पुरुष थे। इनका सम्बन्ध जयपुर ही में सुप्रसिद्ध ऐतिहासिक व्यासवंशज श्री पं० किशनलालजी व्यास की सुपुत्री श्रीमती गोविन्दबाई के साथ हुआ जिनसे हम दोनों ही भाइयों का जन्म अपने नाना के यहाँ हुआ। स्व० कथाभट्ट श्री पं० नन्दकिशोरजी शर्मा का जन्म विक्रम सं० १९६१ के पौष कृष्णा १ भृगुवार को हुआ। इनका बाल्यकाल अत्यन्त शील चातुरी सम्पन्न, प्रतिभापूर्ण और सादा तथा विद्यानुरागी रहा।

( ३ ) विवाह और परिवार परिचयः—

स्व० श्री पं० नन्दकिशोरजी शर्मा का विवाह फाल्गुन कृष्ण ९, संवत् १९७२ में शाहपुर ( मेवाड़ ) राज्य के प्रतिष्ठित राजगुरुवंश्य श्री पं० ब्रह्मदत्तजी साहिब की सुपुत्री श्रीमती शारदा देवी के साथ सम्पन्न हुआ। श्रीमती शारदा देवी पतिव्रतधर्म पारायणा एवं एक विदुषी महिला हैं जो अपना जीवन ईश-वंदना में बिता रही हैं। इनके औरस सन्तान जीवित न रहने के कारण ये अपनी सन्तानसुख से कुछ वंचित से ही रहे। अन्ततोगत्वा जब इनको अपना जीवन कुछ ही काल में निःसन्तान ही समाप्त हो जाने की आशंका उत्पन्न हो गई तब इन्होंने मेरे चतुर्थ पुत्र कुंवर महेशचन्द्र शर्मा को वैदिक एवं लौकिक विधि से फाल्गुन कृष्णा ५, रविवार, संवत् २००४ के दिन दत्तक पुत्रत्वेन स्वीकृत करके पुत्रवान् हुए। यह संस्कार इन्होंने अत्यन्त ही आनन्द व उत्साह के साथ सम्पन्न किया था।

( ४ ) विद्योपार्जन और पद-प्रतिष्ठाः—

यों तो ये बाल्यकाल से ही विद्या-प्रिय व संस्कृत साहित्यानुरागी थे। इनकी प्रारम्भिक शिक्षा घर से ही आरम्भ हुई थी, तदनन्तर स्थानीय महाराज संस्कृत कालेज में अध्ययन आरम्भ किया जहाँ से सन् १९१९ ई० में प्रवेशिका तथा सन् १९२३ ई० में उपाध्याय और सन् १९२५ ई० में शास्त्री आदि परीक्षाएं प्रथम श्रेणी से उत्तीर्ण की एवं सन् १९२७ ई० में उक्त कालेज से ही 'साहित्याचार्य' की सर्वोच्च उपाधि द्वितीय श्रेणी से प्राप्त की।

संस्कृत में साहित्य के नैपुण्य के अतिरिक्त संस्कृत के विभिन्न अन्य अङ्गों के साथ २ हिन्दी, अंग्रेजी, बंगाली, गुजराती और डिंगल भाषाओं के भी अच्छे ज्ञाता थे। इतिहास में इन्हें विशेष रुचि थी। प्राचीन लिपियों का ज्ञान काफी बढ़ा चढ़ा था। सन् १९२८ ई० में 'जयपुर-सरकार' ने इनको छात्र-वृत्ति देकर रिसर्च-स्कॉलर नियुक्त करके काशी 'गवर्नमेण्ट संस्कृत कालेज बनारस' में अन्वेषण तथा पुस्तकालय—चाइ शिक्षण के लिए सहर्ष भेजा। जहाँ निरन्तर छैः वर्ष तक रहकर संस्कृत साहित्य के सुरक्षित भण्डार राजकीय पुस्तकालय 'सरस्वती भवन' में 'गवर्नमेण्ट संस्कृत कालेज बनारस' के प्रिंसिपल तथा यू० पी० संस्कृत अध्ययन कार्य के सुपरिन्टेण्डेण्ट म० म० श्री पं० गोपीनाथ कविराज एम० ए० की निरीक्षकता में संस्कृत साहित्य तथा धर्म-शास्त्रों का विशेष अध्ययन और अन्वेषण कार्य सम्पूर्ण किया। सन् १९३३ ई० में जब ये बनारस से अपना कार्य सम्पन्न

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ ग्रन्थविषयप्रदर्शनम्





CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ कारिकानुक्रमणिका



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

॥ श्रीः ॥

# चन्द्रालोकः

## 'पौर्णमासी' 'कथाभट्टीया' व्याख्याद्वयोपेतः



## प्रथमो मयूखः

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनां मानसे ।
दुष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥

### पौर्णमासी

सर्वाणि शास्त्राणि समाकलय्य न्यस्तानि येनोदर एव यस्मात् ।
लम्बोदरत्वे प्रथिताभिधानं तं धीनिधानं गणनाथमीडे ॥ १ ॥
वैधात्रकण्ठमविकुण्ठमुपाश्रयन्तीं विद्वज्जनाननसरोजविराजमानाम् ।
वीणागुणक्वणनचञ्चलपाणिपद्मां वाग्देवतां शशिकलाङ्कितमौलिमीडे ॥ २ ॥

प्राक्तनव्याख्यानिर्देशः ।

चन्द्रालोकस्य विद्यन्ते व्याख्या बहुविधा इमाः ।
शारदागमव्याख्यैका प्रद्योतनविनिर्मिता ॥ ३ ॥
रम्यः कुवलयानन्दोऽलङ्कारार्थप्रकाशकः ।
अप्पय्यदीक्षितकृतो व्याख्यारूपो विराजते ॥ ४ ॥
गागाभट्टेन रचिता व्याख्या राकागमाभिधा ।
तेनैवान्या कृता टीका वाजचन्द्रस्य चन्द्रिका ॥ ५ ॥
वैद्यनाथेन रचिता रमा व्याख्याभिधीयते ।
विरूपाक्षेण रचिता टीका शारदशर्वरी ॥ ६ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कृता केनापि विदुषा चन्द्रालोकस्य दीपिका ।
व्याख्यास्ति विदिता लोके निगूढार्थस्य दीपिका ॥ ७ ॥
एता व्याख्या मया प्रोक्ता अन्याश्चापि भवन्तु वा ।
तथापि क्रियते व्याख्या पौर्णमासीति कीर्त्तिता ॥ ८ ॥
पूर्णो माश्चन्द्रमा यत्र पूर्णमाः शब्द उच्यते ।
पूर्णमास इयं सा स्यात् पौर्णमासीति संज्ञिता ॥ ९ ॥

अथ तत्र भवान् कर्कशतर्कवक्रवचनोद्गारवांस्तार्किकशिरोमणिरपि, कोमलकाव्यकौशलकलालीलावानालङ्कारिकचक्रचूडामणिः, ईशवीयत्रयोदशशतकान्तर्वर्ती, प्रसन्नराघवाख्यनाटकविरचयिता, सुमित्रामहादेवयाज्ञिकतनयः, श्रीमान् पीयूषवर्षापरनामधेयः श्रीजयदेवनामा विद्वान् , सकलकाव्यविषयप्रतिपादकस्य लक्षणग्रन्थस्यावश्यकतायां चन्द्रालोकनाम्ना तादृशं समीहितं ग्रन्थरत्नं विरचयिष्यंस्तदादौ शिष्टसदाचाररक्षणाय शिष्यशिक्षणाय च मङ्गलमाचरन् वाग्देवतास्वरूपस्य त्र्यम्बकनेत्रत्रयोपमत्वताप्रदर्शनेन तत्प्रकर्षमुद्घोषयति 'उच्चैः' इति पद्येन ।

---

कथाभट्टीया

प्रारब्ध ग्रन्थ की निर्विघ्नता से समाप्ति होने के लिये उसके प्रारम्भ में शिष्टाचार से प्राप्त मङ्गलाचरण अवश्य करना चाहिए । शास्त्रों में वह मङ्गल 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्यादि वचनों के अनुसार आशीर्वादात्मक, नमस्कारात्मक और वस्तुनिर्देशात्मक रूप तीन प्रकार से विभाजित किया गया है । श्रीहर्षरचित प्रियदर्शिका नाटिका में आशीर्वादात्मक, भवभूति के महावीरचरित नाटक में नमस्कारात्मक, और भारवि के किरातार्जुनीय काव्य में वस्तुनिर्देशात्मक मङ्गल देखना चाहिए । इस नियम के अनुसार ही प्रकृत ग्रन्थ चन्द्रालोक में आशीर्वादात्मक मङ्गलाचरण किया गया है ।

तर्कशास्त्र के कर्कश वचनों में निपुण भी आलङ्कारिक भाषा की सरस सरल सूक्ति में प्रगल्भ, ईशवीय तेरहवीं शताब्दी में वर्तमान, प्रसन्नराघव नाटक का निर्माता, सुमित्रा और महादेव अग्निहोत्री का पुत्र, पीयूषवर्षापरनामधेय, श्रीमान् जयदेव कवि अपने ग्रन्थ चन्द्रालोक के प्रारम्भ में वाग्देवी की प्रशंसा करता हुआ विद्वज्जनों को आशीर्वाद देता है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सा वर्णनीया पूर्ववाक्यवर्णिता वाग्रूपा देवता वाग्देवता सरस्वती खण्डो गदासुरवधे भग्नः परशुः कुठारो यस्य यद्वा खण्डयति विनाशयति खण्डस्तादृशः परशुर्यस्य स खण्डपरशुः शङ्करस्तस्य । त्रयोऽवयवा यस्याः सा त्रितयी नेत्राणां नयनानां त्रितयी नेत्रत्रितयी सूर्यचन्द्राग्निरूपा नेत्रत्रयी । इव तद्वत् । दीव्यतु द्योततां मोदतां रमतां वा। भक्तवदन इति शेषः । दिवु धातोः कर्तरि लोट् । एतत्प्रधानवाक्यम् । अन्यानि वाक्यानि पदानि च वाग्देवताया नेत्रत्रितय्याश्चाङ्गानि । यथा वाग्देवीपक्षे-या वाग्देवी। मन्दतां मूढताम् । अरसतां नीरसताम् । रलयोरैक्यादलसतामालस्यं वा । उच्चैरूर्ध्वं दूर इति यावत् । अस्यति प्रक्षिपति । असु क्षेपणे इति धातोः कर्तरि लट् । तथा च या सुमनसां विदुषाम् । शब्दोऽयं काकाक्षिन्यायेनोभयत्र सम्बद्ध्यते। जाग्रती विद्यमाना ये कलङ्का दोषास्तैस्तादृशैः । 'हेतौ' इत्यनेन हेत्वर्थे तृतीया । रवानां शब्दानां ध्वंसं विनाशं हस्तयते हस्तेनातिक्रामति दूरीकरोतीति भावः । अत्र हस्तशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च' इत्यधिकारोक्तेन 'तेनातिक्रामति' इति गणसूत्रेण णिच्प्रत्ययः । 'णिचश्च' इत्यनेनात्मनेपदम् । उत्पत्स्यमानदोषभिया वक्तुमनुत्सोढानां पण्डितानां निर्दोषवचनतामुत्पाद्य व्याख्याने प्रवर्तयत इति भावः । केचित्तु कैरपि पुरुषैर्नवध्वंसो विनाशो यस्य स तम् । भागुरिमतेन वध्वंसशब्देऽकारलोपः । तथा जाग्रद् विद्यमानः कलो मन्दगम्भीरः शब्दो यस्य तादृशं पुरुषं हस्तयते हस्तेन स्पृशति हस्तगतं वा कुरुते । पुनः कीदृशी सुमनसां विदुषां मानसेऽन्तःकरणे। उल्लासिनी उल्लसनशीला । दुष्टानां नीचानामुद्यन्नुद्भवन्यो मदो गर्वस्तस्य नाशनं दूरीकारकमर्चिस्तेजो यस्याः सा । यद्वा दुष्टश्चासावुद्यन्मदश्चेति व्याख्येयम् । अमला निर्मला लोकानां भुवनानां त्रयी लोकत्रयी त्रिलोकी तस्या दर्शिका प्रदर्शयित्री ।

त्र्यम्बकनेत्रत्रयीपक्षे च मन्दानि निष्प्रभाणि च तानि तामरसानि कमलानि च

---

उच्चैः इति—भगवान् शङ्कर की नेत्रत्रयी के समान गुणवाली सरस्वती पण्डितजनों के मुख में विलास करे । उस सरस्वती और नेत्रत्रयी की विशेषता इस प्रकार है । सरस्वती के पक्ष में—जो सरस्वती मूर्खता, आलस्य और नीरसता को दूर करती है । तथा सदोषवचन होने की आशङ्का से उत्पन्न हुई मूकता का विनाश करती है । पण्डित जनों के अन्तःकरण को प्रफुल्लित बनाती है । उत्पन्न हुए दुष्ट गर्व का नाश करनेवाली है कान्ति जिसकी ऐसी तथा तीनों लोकों को दिखलानेवाली निर्मल सरस्वती विद्वानों के मुख में विलास करे । शंकर की नेत्रत्रयी के पक्ष में—शङ्कर के तीनों नेत्र सूर्य, चन्द्र तथा वह्निस्वरूप माने गये हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हं हो चिन्मयचित्तचन्द्रमणयः संवर्धयध्वं रसान्
रे रे स्वैरिणि निर्विचारकविते मास्मत्प्रकाशीभव ।

तथोक्तानि तेषां भावस्तत्ता तां निष्प्रभकमलत्वमिति यावत् । उच्चैरूर्ध्वम् । अस्यति प्रक्षिपति । कमलानां संकोचं दूरीकुरुत इति भावः । सूर्यरूपत्वात् । सुमनसां पुष्पाणां मध्ये के जले रवः शब्दो यस्य स तादृशो हंसस्तस्य प्रियं कैरवं कुमुदं रात्रिविकासि कमलमिति यावत् । तस्य ध्वंसो विनाशस्तम् । जाग्रत्यः स्फुरन्त्यः कला यस्मिन्कर्मणि यथा भवति तथा । क्रियाविशेषणमेतत् । हस्तयते हस्तेन दूरीकरोति । एतेन चन्द्रमयत्वं सूचितं तस्य तद्विकासकत्वात् । पुनर्या च सुमनसा देवानां मानसेऽन्तः-करणे । उल्लासिनी उल्लसनशीला । एतेन सूर्यचन्द्राग्निरूपत्वं सूचितम् । दुष्टो नीचो यो मदनः कामस्तस्याशनं भक्षणमर्चिर्ज्वाला यस्याः सा तादृशी । एतेन वह्निमयत्वं सूचितम् । तस्य मदनदाहकत्वात् । अमला निर्मला । लोकत्रयीदर्शिका भूर्भुवः-स्वारूपलोकत्रयप्रदर्शयित्री । एतादृशी खण्डपरशोर्नेत्रत्रितयीव सा वाग्देवता दीव्यतु रमतां विद्वज्जनवदन इति शेषः । अत्र श्लेषानुप्राणितः पूर्णोपमालङ्कारः । वाग्देवता-विषयिणी रतिर्व्यङ्ग्या । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

स्वग्रन्थप्रकर्षं वर्णयते–हं हो इत्यादिना । हमित्यनुनये । 'हं रोषभाषणेऽनुनयेऽपि च' इति हेमः । हो इति सम्बोधने । 'हो हौ तु भवेत्सम्बुद्ध्याह्वानयोर्मतौ' इति विश्वप्रकाशः । हे चिन्मयानि चित्प्रचुराणि यानि चित्तानि मनांसि तान्येव चन्द्रमणय-

---

इनमें सूर्यस्वरूप नेत्र कमलों के मुकुलीभावरूप मन्दता को दूर करता है । अर्थात् कमलों को खिला देता है । दूसरा चन्द्ररूप नेत्र रात्रि में खिलनेवाले कैरव ( कमल विशेष ) की कलाओं को जगा देता है अर्थात् विकसित करता है । तृतीय वह्निरूप नेत्र तथा उत्पन्न होने वाले कामदेव का विनाश करता है । भगवान् शङ्कर ने इसी वह्निरूप नेत्र से कामदेव को जलाया था यह पौराणिक कथा है । देवताओं के अन्तःकरण को उल्लसित करने वाली, त्रैलोक्य का दर्शन कराने वाली, ऐसी निर्मल शङ्कर की नेत्रत्रयी भक्तजनों के मानस में क्रीडा करे । यहां श्लेषालङ्कार से शब्दसाम्य सिद्ध होता है । उस शब्दसाम्य से पूर्णोपमालङ्कार यहां वर्त्तमान है ॥ १ ॥

अब कवि अपने ग्रंथ का उत्कर्ष बतलाता है—

हे चन्द्रकान्त मणियों के समान स्वच्छ और ज्ञानशील विद्वानो ! आप शृङ्गारादि रसों की वृद्धि करें । तथा हे विचारशून्य कविते ! तुम स्वेच्छाचारिणी

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उल्लासाय विचारवीचिनिचयालङ्कारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती ॥ २ ॥

श्चन्द्रकान्तशिलामणयः यद्वा चिन्मया ज्ञानरूपाश्चित्तान्येव चेतांस्येव चन्द्रमणय-श्चन्द्रकान्तमणयः । तत्सम्बुद्धौ । रस्यन्ते आस्वाद्यन्त इति रसास्तान् शृङ्गारादीन् संवर्धयध्वं वृद्धिं प्रापयध्वम् । रे रे इति नीचसम्बोधनद्योतनार्थम् । हे स्वैरिणि । साहित्यशास्त्रीयमर्यादारहिते इति यावत् । निर्गतो विचार औचित्यविवेको यस्याः सा तादृशी चासौ कविता च तत्सम्बुद्धौ । अस्मत्तः प्रकाशः प्रभव इति यावत् । यस्याः सास्मत्प्रकाशा, न अस्मत्प्रकाशा, अनस्मत्प्रकाशा; अनस्मत्प्रकाशा अस्म-त्प्रकाशा सम्पद्यस्व तथा भवेत्यस्मत्प्रकाशीभव । अत्र लोण्मध्यमपुरुषैकवचनम् । तादृशी मा भवेत्यर्थः । अस्माभिर्निर्विचारकविता न विधीयत इति भावः । यतोऽयं कृती साहित्यशास्त्रप्रतिपादनकुशलः । पीयूषाणि सुधा वर्षतीति पीयूषवर्षः पीयूष-वर्षापरनामधेयो जयदेवः । अन्यत्र चन्द्रो वा । 'पीयूषममृतं सुधा' इत्यमरः । चन्द्रस्यालोकः प्रकाश इवालोको यस्य तादृशं ग्रन्थम् । चन्द्रालोकं चन्द्रिकां वा । विचारो भावना एव वीचीनां तरङ्गाणां निचयः समूहो यस्य तादृशो योऽलङ्कार एव वारां-निधिः समुद्रस्तस्य 'तत्पुरुषे कृति' इति बहुलग्रहणात्षष्ठ्या अलुक् । उल्लासाय प्रसा-राय स्वयं वितनुते रचयति । यथा पीयूषवर्षे चन्द्रालोके प्रसृते सति चन्द्रकान्तम-णयः स्रवन्ति । कृष्णाभिसारिकाणां च गमनं रुध्यते । समुद्रस्य वेलातिक्रमणेनोल्लासो जायते तथैव जयदेवेन चन्द्रालोकाख्येऽलङ्कारग्रन्थे निर्मिते शृङ्गारादिरसमयकविता-प्रकाशो भविष्यतीति ग्रन्थकर्तुराशयः । 'चित्तान्येव चन्द्रमणयः' इत्यत्र रूपकम् । विचारे वीचिनिचयारोपोऽलङ्कारे वारांनिधेरारोपं प्रति कारणमिति परम्परितं रूपकम् । द्वयोस्तिलतण्डुलन्यायेन संसृष्टिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

अर्थात् आलङ्कारिकमार्ग का अतिक्रम करनेवाली हो इसलिये हमारे समीप मत आओ । क्योंकि—पीयूषवर्षापरनामधेय जयदेव नामक विद्वान् विवेकरूपी तरङ्ग समुदाय से सुशोभित अलङ्कारसमुद्र को उल्लासित करनें के लिये चन्द्रालोक नामक आलङ्कारिक ग्रन्थ का निर्माण करता है । चन्द्रमा के पक्ष में यह अर्थ निकलता है—चन्द्रमा की चाँदनी ( चन्द्रिका ) के फैल जाने पर चन्द्रकान्त मणियों से जलस्राव होता है । कृष्णाभिसारिका नायिकाओं का गमन रुद्ध हो जाता है । समुद्र वेला का अतिक्रम करने को उमड़ २ कर आता है । अर्थात् आनन्दित होता है ॥ २ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

युक्त्यास्वाद्यलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत्सेव्यः समाश्रीयताम् ।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्मज्जग-
ज्जाग्रद्भासुरपद्मकेसरयशःशीतांशुरस्माद् बुधाः ॥ ३ ॥

अथ सामान्यतोऽलङ्कारशास्त्रप्रयोजनकथनद्वारात्र पण्डितप्रवृत्त्यर्थं ब्रूते युक्त्येति। हे बुधाः पण्डिताः। अगाधतां गम्भीरार्थतामुपदधत् बिभ्रत्। युक्तिभिरुपायैरास्वाद्याः श्रवणीया लसन्तः शोभमानाः प्रिया इति यावद् ये रसाः शृङ्गारादयस्तेषामेकैकाकिनी वसतिर्निवासस्थानम् । यद्वा युक्त्येति तृतीयान्तमास्वाद्येति ल्यबन्तमिति द्वयं समाश्रयणक्रियायामन्वेति । यद्वा युक्तिश्चास्वाद्यलसद्रसश्च तयोरेका वसतिस्तादृशं वा सरस्वत्या इदं सारस्वतं वाङ्मयं शास्त्रं वा साहित्यं च तच्छास्त्रं च साहित्यशास्त्रमलङ्कारशास्त्रं तदेव क्षीराम्भोधिः क्षीरसागरः। यद्वा साहित्यमलङ्कारशास्त्रं तद्रूपाया सरस्वत्या तद्रूपं यत् क्षीरं चन्द्रालोकाख्यग्रन्थरूपं तदेवाम्भोधिःसागरः समाश्रीयताम्। साहित्यशास्त्रान्यतमग्रन्थश्चन्द्रालोकसागरः समाश्रीयतामिति भावः।अस्माद्ग्रन्थरूपात्सागरात् श्रीर्लक्ष्मीः समाश्रीयताम् । राजादीनां स्तुत्येति भावः । अन्यच्च अस्माद् ग्रन्थात् । उपदेशः परस्य बोधनं ब्रह्मविद्या वा तत्र यत्कौशलं चातुर्यं तत्प्रचुरं पीयूषममृतं समाश्रीयताम् । तथा चास्माद् ग्रन्थात् । जगति संसारे जाग्रद् विकसितं भासुरं दीप्यमानं पद्मानां कमलानां केसरवत्किञ्जल्कवद् यशः कीर्तिरेव शीतांशुश्चन्द्रः। यद्वा जगदेव जाग्रद्भासुरपद्मं तस्य केसरं तद्वत्प्रसूनसादृश्याद् यशस्तद्रूपःशीतांशुः। जाग्रद्भासुरेति पद्मयशःशीतांशूनां तन्त्रेण विशेषणं ज्ञेयम् । समाश्रीयताम् । साहित्यमेव क्षीराम्भोधिरिति रूपकम् । क्षीराम्भोधिपक्षे—अगाधतां निम्नतां बिभ्रत् । स्वादुरसैक-

कवि अलङ्कारशास्त्र के उत्कर्ष-कथन से प्रस्तुत अलङ्कारग्रन्थ की उपादेयता बतलाता है—

हे विद्वज्जनो ! आप गंभीर भावार्थ को धारण करने वाले प्रमाणों वा युक्तियों से आस्वाद ( भावना ) के योग्य मनोहर शृङ्गारादि रसों का एक अद्वितीय ( मुख्य ) निवासस्थान, साहित्यशास्त्ररूपी क्षीरसागर का आश्रय लेवें । अर्थात् साहित्यशास्त्र के अन्यतम ग्रन्थ चन्द्रालोक का अध्ययन करें और इस ग्रन्थरूपी सागर के आश्रय से राजा-महाराजाओं की स्तुति करके धनोपार्जन करें । तथा परोपदेश में जो चातुर्य तद्रूप अमृत को अपनावें। संसार में व्याप्त होनेवाली तथा देदीप्यमान पद्मकेसर के समान मनोरम कीर्तिरूपी चन्द्रमा को भी इस ग्रन्थ के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तं पूर्वाचार्यसूर्योक्तिज्योतिस्तोमोद्गमं स्तुमः ।
यं प्रस्तूय प्रकाशन्ते मद्गुणास्त्रसरेणवः ॥ ४ ॥

---

वसतिर्जलाधारः समाश्रीयताम् । अस्मात्समुद्रात् । श्रीर्लक्ष्मीः पीयूषममृतं शीतांशुश्चन्द्रश्चेत्यादि चतुर्दश रत्नानि समाश्रीयन्ताम् ॥ ३ ॥

अधुना स्वाभिमानं परित्यजति तमित्यादिना । वयं तं पूर्वे प्राञ्चो य आचार्या ग्रन्थकारा मम्मटादय एव सूर्यास्तेषामुक्तयः काव्यप्रकाशादौ प्रतिपादितविषया एव ज्योतींषि प्रकाशास्तेषां स्तोमस्य समूहस्योद्गमः प्रसारः तं स्तुमः प्रणमामः । तं कं यं प्रस्तूय संश्रित्य मद्गुणा मम गुणा एव त्रसरेणवः षट्परमाणवः । त्रसरेणुनिर्वचनं यथा मनुस्मृतौ—

'जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते' ॥ ( ८ अ० १३२ श्लो० ) इति ।
'जालान्तरगते भानौ सूक्ष्मं यद् दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते' ॥

इति च नैयायिकानां परमाणुपरिभाषा । प्रकाशन्ते प्रदीप्यन्ते । यथा सूर्योदये सति त्रसरेणवो गवाक्षादिमार्गेण तत्किरणेषु प्रकाशन्ते, तथैव मम गुणा अपि पूर्वाचार्यग्रन्थाधारेणैवेति । अत्र रूपकालङ्कारः ॥ ४ ॥

---

अध्ययन से प्राप्त करें । क्षीरसागर के सम्बन्ध में इसका अर्थ इस प्रकार है—अगाध सुस्वादुजल के आधारभूत तथा लक्ष्मी, अमृत, चन्द्रमादि चौदह रत्नों के उत्पादक क्षीरसागर का आश्रय लेना चाहिए ॥ ३ ॥

अब कवि प्राचीन आचार्यों के प्रति अपनी कृतज्ञता प्रदर्शित करता है—

मैं सूर्य के समान प्रकाशमान प्राचीन आचार्य मम्मटादिकों की उस उक्तिरूपी ज्योति को प्रणाम करता हूं कि जिसके आश्रय से मेरे वैदुष्यादि गुण त्रसरेणुओं ( छैः परमाणुओं के समुदायों ) के समान संसार में प्रकाशित होते हैं । गवाक्षमार्ग से निकलनेवाली सूर्यकिरणों में जो रजःकण दिखलाई देते हैं, उनको मनुस्मृति ( ८।१३२ ) में त्रसरेणु बतलाया है । ये त्रसरेणु जिस प्रकार सूर्योदय होने पर ही प्रकाशित होते हैं । उसी प्रकार मेरा वैदुष्य भी प्राचीन ग्रन्थों के आधार से ही प्रकाशित हो रहा है । यहां रूपकालङ्कार है ॥ ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नाशङ्कनीयमेतेषां मतमेतेन दूष्यते ।
किं तु चक्षुर्मृगाक्षीणां कज्जलेनेव भूष्यते ॥ ५ ॥
प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसंबद्धा बीजमाला लतामिव ॥ ६ ॥

अनेन ग्रन्थेन पूर्वाचार्यमतदूषणमाशङ्कमानान् प्रत्याह नाशङ्कनीयेति—एतेन चन्द्रालोकाख्यग्रन्थेन । एतेषां पूर्वाचार्याणां मतं सिद्धान्तः । दूष्यते दूषितं क्रियते । इति नाशङ्कनीयं न संशयितव्यम् । किन्तु परन्तु मृग इवाक्षिणी नेत्रे यासां तास्तासां मृगाक्षीणां चञ्चलाक्षीणां रमणीनां चष्टे चक्ष्यतेऽनेन वा चक्षुर्नेत्रम् । 'चक्षिङ् व्यक्तायां वाचि' इति धातोः 'चक्षेः शिच्च' ( उ० २।११९ ) इति सूत्रेणोसिः प्रत्ययः । कज्जलेनेवाञ्जनेनेव । भूष्यतेऽलङ्क्रियते । यथा मृगाक्षीणां चक्षुः कज्जलेन भूष्यते तथा कज्जलसमेन मद्वचनेन पूर्वेषां मतमिति भावः ॥ ५ ॥

काव्योत्पादनकारणमाह—प्रतिभेति । श्रुतं शास्त्रम्, अभ्यासः काव्यज्ञशिक्षया पुनः पुनरनुशीलनात्मकः । ताभ्यां सहिता युक्ता प्रतिभैव नवनवोन्मेषशालिनी प्रज्ञैव । 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति रुद्रकोशात् । कवितां कवित्वं प्रति । मृत् मृत्तिका, अम्बु जलं च ताभ्यां संबद्धा संगता बीजमाला बीजपङ्क्तिः । लतां प्रतीव वल्लीं प्रतीव हेतुर्निमित्तम् । श्रुताभ्यासप्रतिभेति समुदितास्त्रय एव पदार्था दण्डचक्रादिन्यायेन काव्यं प्रति हेतुः । यथोक्तं काव्यप्रकाशे—

'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे' ॥ इति ।

---

कवि चन्द्रालोक से होनेवाली प्राचीन आचार्यों के सिद्धान्त पर आक्षेप की शङ्का को निरस्त करता है—

इस चन्द्रालोक नामक ग्रन्थ से प्राचीन आचार्यों के सिद्धान्त का खण्डन किया जाता है, यह सन्देह किसी को नहीं होना चाहिए। किन्तु मृगनयनी रमणियों के स्वतः सुन्दर नेत्र भी जिस तरह दोषभूत कज्जल से भी शोभित ही होते हैं। उसी प्रकार दूषित भी मेरे ग्रन्थ से प्राचीन आचार्यों का मत भूषित ही होवेगा ॥ ५ ॥

कवि कविता के कारण बतलाता है—शास्त्रज्ञान और शास्त्र के मनन से अनुगत कल्पनाशील प्रतिभा ही कवितोत्पादन में निमित्त होती है। जिस प्रकार

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निर्दोषा लक्षणवती सरीतिर्गुणभूषणा ।
सालंकाररसानेकवृत्तिर्वाक्काव्यनामभाक् ॥ ७ ॥

काव्यनिर्माणसामर्थ्यमेव प्रतिभा, सा च सहजोत्पाद्या चेति रुद्रटेन काव्यालङ्कारेऽभिहितम्—

'मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य ।
अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः ॥
प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति ।
पुंसा सहजातत्वादनयोस्तु ज्यायसी सहजा ॥
स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम् ।
उत्पाद्या हि कथंचिद् व्युत्पत्त्या जन्यते परया ॥
छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥
विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके ।
न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्यैषा ॥
अधिगतसकलज्ञेयः सुकवेः सुजनस्य संनिधौ नियतम् ।
नक्तंदिनमभ्यस्येदभियुक्तः शक्तिमान् काव्यम्' ॥ इति ॥ ६ ॥

काव्यलक्षणं व्याचष्टे—निर्दोषेत्यादिना । निर्गता दोषाः श्रुतिकटुत्वादयः, पदपदांशवाक्यतदर्थरसगता यस्याः सा निर्दोषा काव्यदूषणशून्या । लक्षणान्यक्षरसंहत्यादीनि यस्यां सन्तीति लक्षणवती तृतीयमयूखोक्ताक्षरसंहत्यादिलक्षणसहिता । रीतिभिः पाञ्चालीलाटीगौडीवैदर्भीति चतसृभिः काव्याङ्गसंस्थाविशेषैः सहिता सरीतिः काव्यरीतिसहिता । गुणाः श्लेषप्रसादादयस्तैर्भूषणा भूष्यमाणाः 'राजभोजनाः शालयः' इतिवत्कर्मणि ल्युट् । अलङ्काराः शब्दार्थगता अनुप्रासोपमादयः । रसाः शृङ्गारादयः । तैः सहितेति सालङ्काररसा । अनेका बहुविधा वृत्तयो यस्यां सा । वृत्तिस्त्रिधा । नाट्योपयुक्ता प्रथमा । एषा कैशिकीसात्वत्यारभटीभारतीनाम्ना चतुर्विधा । द्वितीया

---

मृत्तिका और जल से युक्त बीज ही वृक्षोत्पादन में कारण देखा जाता है ॥ ६ ॥

काव्य का लक्षण बतलाया जाता है—

पद, पदांश, वाक्य, वाक्यार्थ रसगतादि काव्य के दोषों से शून्य, अक्षरसंहत्यादिलक्षणों से युक्त, पाञ्चाली, लाटी, गौडी, वैदर्भीनामक काव्य की रीतियों से भूषित, शब्दार्थगत अनुप्रासोपमादि अलङ्कारों से चमत्कृत, तथा नाटकोपयुक्त कैशिक्यादि मधुरादि, तथा अभिधादि शब्दावृत्तियों से सम्बद्ध वाक्य को

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ ८ ॥

मधुरादयः षष्ठमयूखोक्ताः पञ्च । तृतीया शब्दशक्तिरूपा । सा चाभिधालक्षणाव्यञ्जनाभेदात् त्रिधा । एतादृशी वाक् उक्तविशेषणविशिष्टा वाणी काव्यं कविकर्म तस्य नामाख्यां भजतीति काव्यनामभाक् काव्यपदप्रवृत्तिनिमित्तं भवति । एतेन निर्दोषाद्युक्तधर्मविशिष्टशब्दत्वं काव्यत्वमिति काव्यलक्षणं सम्पन्नम् । तच्च काव्यं शब्दनिष्ठमित्यप्यस्याभिप्रेतम् । काव्यप्रकाशमपहाय प्रायः सर्वेऽप्यालङ्कारिकाः काव्यस्य शब्दनिष्ठतामेवोररीकुर्वते । काव्यप्रकाशकारस्तु तस्य व्यासज्यवृत्त्या शब्दार्थोभयनिष्ठतां स्वीकुरुते । शब्दनिष्ठतावादिनां त्वयमाशयः—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादिमीमांसासूत्रेण शब्दार्थयोः स्वाभाविकसम्बन्धे निश्चिते कृते शब्दग्रहणेऽर्थः स्वयमेवापतति । अर्थशून्ये शब्दे तु प्रयोगार्हतैव नास्तीति काव्यस्य शब्दनिष्ठतैवोचितेत्यलं विस्तरेण ॥ ७ ॥

'निरलङ्कारौ शब्दार्थौ काव्यम्' इति काव्यप्रकाशकारमतं दूषयति—अङ्गीकरोतीत्यनेन । यः कोऽपि । काव्यप्रकाशकार इति भावः । अनलङ्कृती अलङ्कारशून्यौ । शब्दश्च, अर्थश्चेति शब्दार्थौ वाच्यवाचकौ । काव्यं कविकर्म । अङ्गीकरोति स्वीकरोति । असौ कृती कुशलः पण्डित इति यावत् । अनलमग्निम् । अनुष्णमुष्णता-

---

काव्य कहते हैं । मम्मटाचार्य कृत काव्यप्रकाश को छोड़ कर प्रायः सब ही आलङ्कारिक ग्रन्थों ने काव्य को शब्दनिष्ठ ( शब्दगत ) माना है । काव्यप्रकाश ने व्यासज्यवृत्ति ( शब्द और अर्थ में व्याप्ति ) से काव्य को शब्दार्थोभयगत माना है । शब्दनिष्ठवालों का कथन है कि 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इस मीमांसासूत्र से शब्द और अर्थ का स्वाभाविक अविनाभाव सम्बन्ध के निश्चित रहने पर शब्दनिष्ठ काव्य को मानने से उसकी अर्थनिष्ठता स्वयं हो आ जाती है । फिर अर्थ का ग्रहण करना अनुचित ही है । अर्थशून्य शब्द में तो प्रयोग योग्यता ही नहीं है । अतः काव्य को शब्दनिष्ठ ही समझना चाहिए ॥ ७ ॥

अलङ्कारशून्य भी शब्दार्थ काव्य कहे जा सकते हैं, इस काव्यप्रकाशकार के मत को दूषित बतलाया जाता है—

जो अलङ्कारशून्य भी शब्दार्थ में काव्यत्व स्वीकार करते हैं, वे चतुर मनुष्य अग्नि में भी अनुष्णता को स्वीकार करें । जिस प्रकार अग्नि में अनुष्णता का रहना अस्वाभाविक है, ठीक उसी प्रकार अलङ्कार रहित शब्दार्थों में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द इष्यते ।
रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा ॥ ९ ॥

रहितं शीतमिति यावत् । कस्माद्धेतोः कथं न । मन्यते मनुते । यथाग्नेरनुष्णताऽस्वाभाविकी तथैवालङ्कारशून्ययोः शब्दार्थयोः काव्यत्वस्वीकारोऽपि । तस्मादलङ्कारादियुक्तमेव काव्यम् । काव्यप्रकाशे 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणमुक्त्वा 'क्वापीत्यनेन तदाह यत्सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः' इत्युक्तम् । एतदस्यानभिमतम् । अत्र निदर्शनालङ्कारः ॥ ८ ॥

'निर्दोषादिविशेषणविशिष्टा वाक् वाक्यम्' इति काव्यलक्षणे विशेष्यभूतां वाचं लक्षयति विभक्तीत्यादिना । विभक्तीनां सुप्तिङन्तानां विभागानामुत्पत्तये योग्यो योग्यतामापन्नः । 'विभक्तिश्च' इति पाणिनीयसूत्रेण सुपां तिङां च विभक्तिसंज्ञा भवतीति यस्माच्छब्दात् सुप्तिङ्प्रत्ययाः कर्तुं शक्यन्ते स धातुप्रातिपदिकान्यतरप्रकृतिभाग इत्यर्थः । शास्त्रीयः शास्त्रसम्बन्धी । एतेन भेरीशब्दादौ नाव्याप्तिः । यः स शब्दः पदमिष्यते 'सुप्तिङन्तं पदम्' इति पाणिनीयसूत्रानुसारि पदलक्षणमित्यर्थः । पुनरिति वाक्यालङ्कारे । स शब्दो रूढो यौगिको योगरूढ इति प्रभेदैस्त्रिधा भवति । तत्र केवलसमुदायशक्त्या अर्थबोधकत्वं रूढत्वम् । यथा डित्थादि । केवलावयवशक्त्या अर्थबोधकत्वं यौगिकत्वम् । यथा पाचकादि । समुदायावयवोभयशक्त्या अर्थबोधकत्वं योगरूढत्वम् । यथा पङ्कजादि । रसगङ्गाधरकारैरेत एव शब्दाः केवलसमुदायशक्ति—केवलावयवशक्ति—समुदायावयवोभयशक्तिपदैर्व्यपदिश्यन्ते ॥ ९ ॥

---

काव्यत्व स्वीकार भी अनुचित वा अस्वाभाविक है । अतः अलङ्कारादि युक्त शब्द ही काव्य कहे जाने योग्य हैं । यहां निदर्शना अलङ्कार है ॥ ८ ॥

निर्दोषतादि गुणों से युक्त शब्द को ही काव्य कहा गया है । अतः यहां शब्द का स्वरूप बतलाया जाता है—

शास्त्र से सम्बन्ध रखने वाले तथा सुबन्त ( प्रथमादि ), तिङन्त ( प्रथम पुरुषादि ) आदि विभक्ति के रूप को धारण करने की योग्यतावाले वर्ण समुदाय को शब्द कहते हैं । उस शब्द के रूढ, यौगिक और योगरूढ ये तीन भेद माने गये हैं । केवल समुदायशक्ति से अर्थज्ञान करानेवाले डित्थादि शब्द रूढ कहे जाते हैं, केवल प्रकृति-प्रत्यय के योग से अर्थबोधक पाचकादि शब्द यौगिक नाम से विख्यात हैं । समुदायशक्ति और अवयवशक्ति ( प्रकृति-प्रत्ययादि ) से अर्थबोधक पङ्कजादि शब्द योगरूढ होते हैं ॥ ९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाऽऽदिमः ।
ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ॥ १० ॥

रूढशब्दस्य भेदत्रयमाह–आदौ भव आदिमो रूढाख्यः शब्दः–अव्यक्तयोगाख्येन निर्योगाख्येन योगाभासाख्येन च प्रकारेण त्रिधा भवति। ते चाव्यक्तयोगादयः शब्दा यथाक्रमं क्रममनतिक्रम्य क्रमेणेति भावः। वृक्ष आदिर्येषां ते वृक्षादयः, भूर्वा आदी येषां ते भूवादयः, मण्डप आद्यो येषां ते मण्डपाद्याः, वृक्षादयश्च भूवादयश्च मण्डपाद्याश्चेति वृक्षादिभूवादिमण्डपाद्याः, शब्दा ज्ञातव्याः। अयमाशयः—वृक्षादयोऽव्यक्तयोगशब्दाः, भूवाद्यो निर्योगशब्दाः, मण्डपाद्या योगाभासशब्दाः सन्तीति। अत्र विद्यमानावयवार्थत्वे तदस्फुटतया समुदायशक्त्यार्थबोधकत्वमव्यक्तयोगत्वम्। लक्षणसंगतिरित्थम्–यथा वृक्षादिशब्दे 'वृश्चत्यातपमिति वृक्षः' इति योगस्य सत्त्वेऽपि तदस्फुटतया न प्रतीतिः किन्तु सर्वत्र समुदायशक्त्या ( रूढ्या ) वृक्षत्वजातिमात्रप्रतीतिरिति। अवयवार्थाभावो निर्योगत्वम्। यथा सत्तार्थकेऽपि भूधातौ व्युत्पत्तिलभ्योऽर्थो न विद्यते। किन्तु रूढ्या भूप्रभृतिवाचकतैव। एवमेव 'वा गतिगन्धनयोः' इत्यस्मिन्धातावपि। न च भूधातोः सुबन्ततिङन्तत्वाभावात्प्रयोगार्हतैव नेति, कथमयं शब्दोऽत्रोदाहरणत्वेन निर्दिष्ट इति वाच्यम्। भूप्रभृतिधातूनामनुकरणशब्दत्वात्। अनुकरणशब्दाश्च सादृश्यसम्बन्धिनः सादृश्येतरशक्तिलक्षणान्यतरसम्बन्धिनश्चेति द्विविधाः। क्षणित्यादयः शब्दाः सादृश्यानुकर्तारः प्रयोगानर्हाः। सादृश्येतरशक्तिसम्बन्धिनश्चैते भूवाप्रभृतिधातुशब्दास्तु प्रयोगार्हा एव। अत एव—'पचो वः' इति पाणिनिसूत्रे पच्धातोः षष्ठीविभक्तिप्रयोगः सङ्गच्छते। ततोऽयं भूवादिधातुशब्दो निर्योगरूढेरुदाहरणम्। यत्तु शरदागमक-

अव्यक्तयोग, निर्योग, और योगाभास से रूढ़ शब्द के तीन भेद हैं। वृक्षादि, भूवादि, और मण्डपादि शब्द क्रम से उनके उदाहरण हैं। अवयवार्थ ( यौगिकार्थ ) के अस्फुट होने के कारण जहां समुदायशक्ति से अर्थ का बोध हो, वह अव्यक्तयोग शब्द होता है। जैसे 'वृश्चति आतपमिति वृक्षः' जो आतप को हटावे वह वृक्ष है। यहां आतपनिवारण रूप यौगिकार्थ की प्रतीति सर्वत्र नहीं होती अपितु सामान्यरूप से वृक्षत्वजाति का ही बोध होता है। जहां अवयवार्थ की प्रतीति न हो वह निर्योग शब्द है। यथा भू आदि धातुओं का यौगिक अर्थ नहीं होता, किन्तु समुदाय शक्ति से भू आदि धातुओं का ही बोध होता है। यौगिक अर्थ का तात्पर्य विषयीभूत अर्थ से सम्बन्ध न होने को योगाभास कहते हैं। यथा 'मण्डं पिबतीति मण्डपः' जो चावलों के मांड का पान करे वह मण्डप होता है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शुद्धतन्मूलसंभिन्नभेदैर्यौगिकस्त्रिधा ।
ते च भ्रान्तिस्फुरत्कान्तिकौन्तेयादिस्वरूपिणः ॥ ११ ॥

ता 'भूवादयो धातवः' इति पाणिनिसूत्रस्थं समुदितं भूवादय इति पदं लक्ष्यत्वेन स्वीकृत्य नियोगत्वमत्र स्फुटीकृतम् । यथा 'भूरादिर्येषां ते' इति योगे भ्वादय इति रूपं स्यात् । 'भूवाऽऽदिर्येषां ते' इति योगश्च धातुषु तदादित्वाभावादसम्बद्ध एव स्यात् । तस्माद् भूवादय इति पदं नियोगरूढेरुदाहरणमिति । तन्न । 'भूवादयो धातवः' इत्यत्र योगस्वीकारात् । तथा च प्रौढमनोरमायामुक्तम्—भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूवौ आदी येषामिति बहुव्रीहिः । भूप्रभृतयो वासदृशाः । सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह—क्रियावाचिन इति । एवं 'भूवादयः' इति सूत्रस्थं समुदितं पदं न नियोगलक्ष्यं किन्तु भूवाप्रभृतिधातवो नियोगरूढेरुदाहरणानीति ज्ञेयम् । तात्पर्यविषयीभूतार्थाऽनन्वितयोगत्वं योगाभासत्वम् । यथा मण्डपशब्दे 'मण्डं पिबतीति' योगार्थो गृहरूपेऽर्थे नान्वेति । ततोऽयं शब्दो योगाभासः ॥ १० ॥

यौगिकशब्दस्यापि भेदत्रयमाह—यौगिकशब्दोऽपि शुद्धः शुद्धयौगिकः, तन्मूलो यौगिकमूलयौगिकः, संभिन्नः संभिन्नयौगिकश्चेति त्रिधा भवति । भ्रान्तिश्च स्फुरत्कान्तिश्च कौन्तेयश्चेति भ्रान्तिस्फुरत्कान्तिकौन्तेयाः, ते आदयो येषां ते तादृशाः, भ्रान्तिस्फुरत्कान्तिकौन्तेयादयः स्वरूपाणि येषां सन्तीति तथोक्ताः, ते शब्दा विज्ञेयाः । इत्थमत्र लक्षणसंगतिः—यत्र प्रकृतेः प्रत्यययोगेनार्थप्रत्यायकत्वं तच्छुद्धयौगिकत्वम् । यथा भ्रान्तिशब्दो गतिभ्रमोभयवाचकभ्रमुधातोर्निष्पन्नोऽपि न तदर्थवाचकः किन्तु 'स्त्रियां क्तिन्' इत्यनेन क्तिन्प्रत्यये सत्येव तदर्थवाचको भवति । केवलायाः प्रकृतेरप्रयोगात् । इति भ्रान्तिशब्दो शुद्धयौगिकः । शुद्धयौगिकयोः

---

यह यौगिकार्थ मण्डप शब्द से गृहरूपार्थ के बोध में सहायक नहीं होता । अतः यह शब्द योगाभास है ॥ १० ॥

शुद्धयौगिक, यौगिकमूलयौगिक और सम्भिन्नयौगिक ये तीन यौगिक शब्द के भेद हैं । भ्रान्ति, स्फुरत्कान्ति और कौन्तेय ये तीनों शब्द क्रम से उनके उदाहरण हैं । जहां प्रकृति-प्रत्यय के योग से अर्थ का बोध हो उसे शुद्धयौगिक कहते हैं । जैसे गति और भ्रम-वाचक भ्रमु धातु से स्त्रीलिङ्ग में क्तिन् प्रत्यय करने पर उत्पन्न हुआ भ्रान्ति शब्द गमन वा भ्रम अर्थ का बोधक होने के कारण शुद्धयौगिक शब्द है । दो शुद्धयौगिक शब्दों का समास करने से जहां अर्थ का बोध होता है उसे यौगिकमूलयौगिक शब्द कहते हैं । यथा—'स्फुरत्कान्ति' शब्द में स्फुरत् और कान्ति इन दो शुद्धयौगिक शब्दों के समास से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात् ।

समासेनार्थप्रत्यायकत्वं यौगिकमूलयौगिकत्वम् । यथा स्फुरत्कान्तिपदे स्फुरच्छब्दः स्फुरधातुसमुत्पन्नशतृप्रत्यययोगेन स्वार्थावबोधकः, कान्तिशब्दश्च क्तिन्नन्ततया स्वार्थपरिचायकः । एतौ शुद्धयौगिकशब्दौ समासेन स्वसम्बन्धिनोऽर्थस्य प्रत्यायकावितिः स्फुरत्कान्तिपदं यौगिकमूलयौगिकम् । यौगिकायौगिकयोः सम्बन्धेनार्थबोधकत्वं संभिन्नयौगिकत्वम् । यथा कौन्तेयशब्दो यौगिकायौगिकसम्बन्धेनार्थबोधकः । राजादिवाचकात्कुन्तिशब्दात् 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इत्यनेन कुन्तेरपत्यं स्त्री कुन्तीत्यर्थके ञ्यङि प्रत्यये कृते सति ततस्तत्र 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इत्यनेन तल्लुकि स्त्रियां ङीषि कृते कुन्तीशब्दो यौगिको भवति । 'कुन्त्या अपत्यं पुमान् कौन्तेयोऽर्जुनः' इति 'स्त्रीभ्यो ढक्' इत्यनेन तद्धितेन निष्पन्नः कौन्तेयशब्दोऽर्जुनवाचकोऽयौगिको भवति । कुन्त्याः पुत्रान्तराणामपि सत्त्वात् । एवं यौगिकायौगिकयोः सम्बन्धेन कौन्तेयशब्दस्यार्थप्रत्यायकत्वात् संभिन्नयौगिकत्वं संमिश्रितयौगिकत्वमिति यावत् ॥ ११ ॥

योगरूढस्यापि त्रैविध्यमाह—तन्मिश्रेति । अन्योन्यं मिथो यत् सामान्यविशेषयोर्योगारूढयोः परिवर्त्तनं विनिमयस्तस्मात्कारणात् तन्मिश्रो योगरूढोऽपि त्रिविधो भवति ।

---

अर्थ का बोध होता है । स्फुर धातु से शतृ प्रत्यय करने पर स्फुरत् शब्द, और कसु धातु से स्त्रीलिङ्ग में क्तिन् प्रत्यय करने पर कान्ति शब्द शुद्धयौगिक शब्द बनते हैं । जहां यौगिक और अयौगिक शब्द के सम्बन्ध से अर्थ का बोध हो वह शब्द संभिन्नयौगिक होता है । यथा कुन्ति नामक राजा की पुत्री कुन्ती यह यौगिक शब्द है । यहां व्याकरण से ञ्यङ् प्रत्यय होता है और उसका लोप भी हो जाता है । पुनः उसी कुन्ति शब्द से स्त्रीत्व के कारण ङीष् प्रत्यय करके कुन्ती शब्द यौगिक बनाया जाता है । 'कुन्त्या अपत्यं पुमान् कौन्तेयोऽर्जुनः' कुन्ती का पुत्र कौन्तेय ( अर्जुन ) होता है, इस अर्थ में ढक् प्रत्यय करके कौन्तेय शब्द बनाया जाता है । कौन्तेय पद से कुन्ती के अन्य पुत्रों का ग्रहण न करके केवल अर्जुन के ही ग्रहण करने पर कौन्तेय शब्द अयौगिक हो जाता है । अतः कौन्तेय शब्द यौगिक और अयौगिक शब्द के सम्बन्ध से अर्जुन का बोधक होता है, इसलिये यह संभिन्नयौगिक शब्द है ॥ ११ ॥

परस्पर में सामान्य ( यौगिक ) और विशेष ( रूढ ) धर्मों के परिवर्तन के कारण अर्थात् सामान्यार्थ को छोड़ के विशिष्टार्थ के बोध से, विशिष्टार्थ को छोड़ के सामान्यार्थ के बोध से तथा एक ही जगह सामान्य और विशेषरूप दोनों

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नीरधिः पङ्कजं सौधं सागरो भूरुहः शशी ॥ १२ ॥
क्षीरनीरधिराकाशपङ्कजं तेन सिध्यति ।

---

यथा सामान्यार्थस्थाने विशेषार्थबोधकत्वं विशेषार्थस्थाने सामान्यार्थबोधकत्वं सामान्यविशेषोभयार्थबोधकत्वं चेति त्रैविध्यम् । यत्तु शरदागमकृद् योगरूढस्यैकमेव भेदं स्वीकुरुते तन्न मनोरमम् । भेदसंभवात् । त्रिविधभेदप्रसङ्गान्तर्गतत्वाच्च । यथा सामान्यार्थस्थाने विशेषार्थाश्रयणोदाहरणानि-नीरधिपदं नीराणि दधातीति सरःप्रभृति-सामान्यार्थं विहाय समुद्ररूपं विशेषार्थं बोधयति । एवमेव पङ्कजपदं पङ्कजनिरूपम्, सौधपदं सुधासम्बन्धि पदार्थान्तररूपम्, सागरपदं सगरसम्बन्धिपदार्थान्तररूपम्, भूरुहपदं भूजातत्वरूपम्, शशिपदं शशधरादिपुरुषार्थरूपं च सामान्यार्थं विहाय क्रमेण कमलत्व-गृहत्व-समुद्रत्व-वृक्षत्व-चन्द्रत्वरूपान् विशेषार्थान्बोधयन्तीति सामान्यार्थस्थाने विशेषार्थाश्रयणोदाहरणानि विज्ञेयानि ॥ १२ ॥

योगरूढभेदत्रयस्वीकारस्य फलमाह—क्षीरेति । तेनोक्तभेदत्रयेण क्षीरनीरधिपदं सामान्यार्थस्थाने विशेषार्थाश्रयणेन, आकाशपङ्कजं चन्द्र इत्यादिपदं च विशेषार्थस्थाने सामान्यार्थाश्रयणेन, सिद्धयति निष्पद्यते यथा क्षीरनीरधिरित्यत्र नीरधिपदस्य सामा-

---

प्रकार के अर्थबोध से, योगरूढ़ के भी तीन भेद होते हैं । नीरधि, पङ्कज, सौध, सागर, भूरुह, और शशी ये शब्द सामान्यार्थ ( यौगिकार्थ ) को त्यागकर विशेषार्थ ( रूढार्थ ) के बोधक हैं । यथा 'नीराणि दधातीति नीरधिः' जल को धारण करनेवाले का नाम नीरधि ( जलाधार ) है । इस यौगिक अर्थ (सामान्यार्थ) को छोड़ कर नीरधि शब्द समुद्ररूपी विशेषार्थ ( रूढार्थ ) का ही बोध कराता है । इसी प्रकार पङ्कज शब्द कर्दम से उत्पन्नरूपार्थ को, सौधपद सुधा ( सफेदी करने का साधन कली ) सम्बन्धिरूपार्थ को, सागरपद सगर राजा से सम्बन्ध रखनेवाले पदार्थरूपार्थ को, भूरुहपद भूमि से उत्पन्न पदार्थरूपी सामान्यार्थ को, और शशी पद शशकवाले पुरुषरूपार्थ को छोड़कर क्रम से कमलत्व, गृहत्व, समुद्रत्व, वृक्षत्व, चन्द्रत्वरूप विशेषार्थ का बोध कराते हैं । अतः ये सब शब्द सामान्यार्थ को छोड़ के विशेषार्थ के बोधक योगरूढ़ शब्द के उदाहरण हैं ॥ १२ ॥

योगरूढ़ के तीन भेद मानने से क्षीरनीरधि और आकाशपङ्कज शब्द सिद्ध होते हैं । क्योंकि क्षीरनीरधि पद सामान्यार्थस्थान में विशेषार्थ के बोध से तथा आकाशपङ्कजपद विशेषार्थ को त्याग करके सामान्यार्थ का बोधक होने से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्यार्थस्य (नीराधिष्ठानत्वरूपस्य) स्वीकारे क्षीरपदस्य वैयर्थ्यं स्यात्। तच्चात्र क्षीरधिपदस्य समुद्ररूपविशेषार्थस्य स्वीकारेणैव निरस्यत इति। अतः, क्षीरनीरधिपदं सामान्यार्थस्थाने विशेषार्थाश्रयणभेदस्वीकारेण सिद्धयति। एवमेव कलधौतसौधम्, क्षीरसागरः, सुरभूरुहः, निष्कलङ्कः, शशीत्यादिशब्देष्वपि सामान्यार्थे विशेषाश्रयणं विज्ञेयम्। अधुना तु विशेषार्थस्थाने सामान्यार्थाश्रयणोदाहरणमाह–आकाशपङ्कजमिति। आकाशपङ्कजपदे पङ्कजपदस्य कमलत्वरूपं विशेषार्थं विहाय पङ्कजनित्वरूपः सामान्यार्थो बुद्धयते। ननु आकाशस्थे चन्द्रे भूसम्बद्धपङ्कजनित्वं कथमुच्यत इति चेन्न। यद्यपि समुद्रोत्पन्नस्य चन्द्रस्य नाकाशप्रभवत्वम्। तथापि तत्सम्बद्धमात्रेण तथा प्रयोगः। समुद्रपङ्कजनित्वं च समुद्रोत्पन्ने चन्द्रे कल्पनीयम्। यद्वा वियद्गङ्गावर्णनीयपद्माशयेनायं प्रयोगः समाधेयः। एवमाकाशपङ्कजपदं विशेषार्थे सामान्यार्थाश्रयणोदाहरणम्। एवमेव च 'नीरधिः कूपः' इत्यत्रापि विज्ञेयम्। सामान्यविशेषोभयार्थाश्रयणोदाहरणं तु 'नीरधितया कूपः समुद्र इव राजते', इति। अत्र नीरधिपदस्य कूपपक्षे जलाधिष्ठानत्वरूप-सामान्यार्थाश्रयणम्। समुद्रपक्षे च समुद्ररूपविशेषार्थाश्रयणमिति विज्ञेयम्।

---

सिद्ध होता है। जैसे क्षीरनीरधि पद में नीरधिपद से जलाधाररूप सामान्यार्थ का बोध होने से नीरधि शब्द के साथ लगे हुए क्षीर शब्द में व्यर्थता आ जाती है अतः नीरधि शब्द यहाँ समुद्ररूप विशेषार्थ का ही बोधक है। इसी प्रकार कलधौतसौध, क्षीरसागर, सुरभूरुह, निष्कलङ्क शशी ये शब्द भी सामान्यार्थ के त्याग से विशेषार्थ के आश्रय के उदाहरण हैं। विशेषार्थ का त्याग करके सामान्यार्थ के आश्रय का आकाशपङ्कजपद उदाहरण है। आकाशपङ्कज पद में पङ्कज शब्द कमलरूप रूढार्थ को छोड़ कर के यहाँ पङ्क में उत्पत्तिरूपी यौगिक अर्थ (सामान्यार्थ) का ग्राहक है। ततः आकाशपद से सहोच्चरित पङ्कजशब्द आकाशरूपी पङ्क में उत्पन्न पद्मरूप अर्थात् चन्द्रमारूप अर्थ का बोध कराता है। क्योंकि चन्द्रमा को आकाशगङ्गा का कमल बनाने के अभिप्राय से यह वर्णन किया गया है। आकाशगङ्गा में कर्दम का सम्बन्ध संभव भी मालूम पड़ रहा है। इस प्रकार आकाशपङ्कजपद विशेषार्थ को त्याग कर के सामान्यार्थ के आश्रय का उदाहरण है। इसी तरह 'नीरधिः कूपः' यहाँ नीरधि पद विशेषार्थ को त्याग कर के सामान्यार्थ ( जलाधार ) के आश्रय का उदाहरण है। 'नीरधितया कूपः समुद्र इव राजते' यह सामान्यविशेषोभयविध अर्थ के बोध का उदाहरण है। क्योंकि कूप पक्ष में जलाधाररूप सामान्यार्थ तथा समुद्र पक्ष में समुद्ररूप विशेषार्थ का बोध होता है। इस

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं चात्र शब्दस्य नव भेदाः संजाताः। तथा चेदं शब्दभेदोपभेदवर्गीकरणम्—




सामान्यार्थे विशेषार्थबोधकः, विशेषार्थे सामान्यार्थबोधकः, सामान्यविशेषोभय-विधार्थबोधकश्चेति ।

१५९० वर्षे वर्त्तमानेन जगदीशतर्कालङ्कारेण शब्दशक्तिप्रकाशिकायां शब्दस्य नव भेदाः प्रकारान्तरेण प्रतिपादिताः। ते यथा—नैमित्तिकी पारिभाषिकी औपाधिकी चेति रूढ्यपरनाम्न्याः संज्ञायास्त्रयो भेदाः। तदुदाहरणानि च क्रमशो-गोचैत्रादि-आकाशडित्थादि-भूतदूतादीनि। मतान्तरे च गोगवयादि-चैत्रादि-आकाशपशुप्रभृतीनि विज्ञेयानि। सामासिकः, तद्धितान्तः, कृदन्तान्तश्चेति यौगिकशब्दस्य त्रयो भेदाः। पुरुषसिंहादि-पाराशर्यादि-पाचकादीनि तदुदाहरणानि। योगरूढस्यापि सामासिकः, तद्धितान्तः, कृदन्तान्तश्चेति त्रयो भेदाः। कृष्णसर्पादि-वासुदेवादि-पङ्कजादीनि तदुदाहरणानि। मतान्तरे च लोहितशाल्यादिगार्ग्यकाश्यपादिशब्दाः सामासिकतद्धितान्तयोरुदाहरणानि विज्ञेयानि।

---

प्रकार शब्द के नौ भेद हुये। वे सब संस्कृतटीका में लिखे गये हैं। १५९० ई० में वर्तमान जगदीशतर्कालङ्कारमहोदय ने शब्दशक्तिप्रकाशिका में प्रकारान्तर से शब्द के नौ भेद माने हैं। वे सब संस्कृतटीका में लिख दिये गये हैं। वे सब वहां ही देखने चाहिये।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥ १३ ॥
युक्तार्थानां तां च विना खण्डवाक्यं स इष्यते ।
वाक्यं च खण्डवाक्यं च पदमेकमपि क्वचित् ॥ १४ ॥

---

अथोत्तरार्धेन पदादि लक्षयति–विभक्त्यन्तमिति । विभक्तिः सुप्तिङ्रूपा, अन्ते यस्य तत् विभक्त्यन्तं सुबन्तं तिङन्तं वा पदं भवति । 'विभक्तिश्च' इति पाणिनीयसूत्रेण सुपां तिङां च विभक्तिसंज्ञा भवतीति विभक्त्यन्तं पदमुच्यते । यथाह पाणिनिः–'सुप्तिङन्तं पदम्' ( १।४।१४ ) इति 'ते विभक्त्यन्ताः पदम्' इति गौतमश्च । अर्थस्य पदार्थस्य समाप्तिरवसानमित्यर्थसमाप्तिस्तस्यामर्थसमाप्तितोऽर्थसमाप्ताविति यावत् । निराकाङ्क्ष इति यावत् । अत्र 'प्रतियोगे पञ्चम्यास्तसिः' ( ५।४।४४ ) इति सूत्रान्तर्वर्तिना 'आद्यादिभ्य उपसंख्यानम्' इति वार्तिकेन 'आदौ आदितः' इतिवत् सप्तम्यास्तसिप्रत्ययः । यद्वा 'इतराभ्योपि दृश्यन्ते' इति सूत्रेण सप्तम्यास्तसिप्रत्ययः । तेषां पदानां व्यूहः समूहो वाक्यम् । यथाह न्यायभाष्यकारो वात्स्यायनः–'पदसमूहो वाक्यमि'ति रमाव्याख्यायामुक्तम् ॥ १३ ॥

खण्डवाक्यं व्याचष्टे–युक्तेति । युक्तः सम्बद्धोऽर्थो येषां तानि तेषां युक्तार्थानां सम्बद्धार्थानां साकाङ्क्षानामिति यावत् । पदानाम् । स व्यूहः । तामर्थसमाप्तिं विना । खण्डवाक्यमिष्यते । यथा यो हस्ती वर्त्तते तमत्रानयेत्यादिः । एवं च साकाङ्क्षार्थबोधकपदव्यूहः खण्डवाक्यमिति फलितम् । उक्तलक्षणापवादमाह–वाक्यमिति । पदव्यूह एव वाक्यं स्यादिति न नियम्यते, क्वचित्स्थले एकमपि पदं सुबन्त-तिङन्तरूपम् । वाक्यं खण्डवाक्यं च भवति ॥ १४ ॥

---

अब ग्रन्थकार पद का लक्षण बतलाता है—जिस शब्द के अन्त में सुबन्तरूप ( प्रथमा आदि ) अथवा तिङन्तरूप ( प्रथमपुरुष प्रभृति ) व्याकरणशास्त्रोक्त विभक्ति संयुक्त हो उसे पद कहते हैं और विशिष्ट एक पदार्थ का बोध करानेवाले निराकाङ्क्षपदों के समूह को वाक्य कहते हैं ॥ १३ ॥

परस्पर अर्थ की सम्बन्ध रखनेवाले साकाङ्क्ष पद के समूह को एक अर्थ के बोधक न होने के कारण खण्डवाक्य कहते हैं । किसी जगह एक भी पद वाक्य तथा खण्डवाक्य के रूप को धारण करता है ॥ १४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धूमवत्त्वादिति यथा देवेत्यामन्त्रणं यथा ।
वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥ १५ ॥
महादेवः सत्रप्रमुखमखविद्यैकचतुरः

क्रमेणोदाहरति—धूमेति । यथा धूमोऽस्त्यस्तीति धूमवान् पर्वतो धूमवतो भावो धूमवत्त्वं तस्मात् धूमवत्त्वादिति पदं वाक्योदाहरणं भवति । अत्र केवलं पञ्चम्येकविभक्त्यन्तत्वादेकपदत्वम् । हेत्वाकाङ्क्षानिवर्तकत्वे सति निराकाङ्क्षार्थसमाप्तिसत्वाद् वाक्यत्वं च । यथा, देवेत्यामन्त्रणं देवेति संबोधनं पदं खण्डवाक्यं भवति । अत्र संबोधनप्रथमैकविभक्त्यन्तत्वादेकपदत्वम् । देवेतिसंबोधनपदस्य क्रियासाकाङ्क्षत्वे नार्थसमाप्तेरभावात् खण्डवाक्यत्वं च । एकश्चासावर्थश्चैकार्थस्तत्र विश्रान्तानि समाप्तानि एकार्थतात्पर्यकाणीति यावत् । तादृशानि वाक्यानि । वाक्यानां कदम्बकं समूहो वाक्यकदम्बकं वाक्यसमूहः । तदाहुः—एकार्थतात्पर्यको 'वाक्यसमूहः प्रबन्धो महावाक्यं वोच्यत इति भावः । समासभिन्नत्वे सति तत्प्रकृतिकविभक्त्यन्तभिन्नत्वे सति विशिष्टैकार्थप्रतिपादकत्वमिति महावाक्यसामान्यलक्षणं रमाटीकायामुक्तम् । एवं चात्र नवविधः शब्दः, पदम्, वाक्यम्, खण्डवाक्यम्, महावाक्यं चेति वाग्विचारः क्रमशो निरूपितः ॥ १५ ॥

अत्र कविर्ग्रन्थस्य प्रथममयूखसमाप्तिमाह–महादेवेति । यस्य सुकवेर्जयदेवस्य । सत्राण्यहःसंघातरूपा हीना यागाः प्रमुखानि प्रधानानि येषां तादृशा ये मखा यज्ञास्तेषां या विद्या श्रौतस्मार्तकर्मकाण्डज्ञानं तस्यामेकचतुरः परमनिपुणः । अयमाशयः–सत्राण्यहःसंघातरूपाणि । अहःशब्दो हि वेदेऽहोरात्रसाध्यसोमयागाद्यसमुदाय-

यथा 'धूमवत्त्वात्' 'धूमवाला होने से' यह शब्द पञ्चमी विभक्त्यन्त होने के कारण एक पद है । तथा हेतु ( कारण ) की आकाङ्क्षा का निवर्तक होता हुआ निराकाङ्क्ष एक अर्थ का बोधक है । अतः वाक्य कहा जा सकता है । यथा वा सम्बोधन विभक्ति का 'देव' यह शब्द प्रथमा ( संबोधन ) होने के कारण क्रिया की अपेक्षा करता हुआ एक अर्थ का बोधक नहीं है अतः यह एक पद खण्डवाक्य कहा जा सकता है । वर्णनीय एक अर्थ के अनुगामी जो अनेक वाक्य वे वाक्यकदम्बक वा महावाक्य कहे जाते हैं । जैसे रघुवंशादि प्रबन्धों में जो अनेक वाक्य एक ही वर्णनीय वृत्तान्त में विश्रान्त होते हैं, वे सब महावाक्य कहे जाते हैं ॥ १५ ॥

नौ प्रकार के भेदों से युक्त शब्द, पद, वाक्य, खण्डवाक्य और महावाक्यादि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १६ ॥

वाची। तादृशाहःसंघातरूपाश्च सत्राहीना यागाः । श्रौतसूत्रेषु सोमयागादय एकाहा उच्यन्ते । द्व्यहप्रभृतिद्वादशाहपर्यन्ता यागा अहीना इत्युच्यन्ते । तत ऊर्ध्वमनेकदिनसाध्यानि सहस्रसंवत्सरपर्यन्तानि सत्राणि भवन्ति । त्रयोदशाहादि शताहपर्यन्तं रात्रिसत्राणीत्युच्यन्ते। ततश्च संवत्सरसाध्यं सर्पसत्रादि, त्रिसंवत्सरसाध्यं तापश्चित्ताख्यम्, पञ्चसंवत्सरसाध्यं महातापश्चित्तसत्रम्, द्वादशसंवत्सरसाध्यं महासत्रम्, षट्त्रिंशत्संवत्सरसाध्यं शाक्त्यानामयनसंज्ञं सत्रम्, शतसंवत्सरसाध्यं साध्यानामयनसंज्ञसत्रम्, सहस्रसंवत्सरसाध्यं विश्वसृजामयनसंज्ञं सत्रम्, ततः सारस्वतसत्राणि त्रीणि, ततश्च तुरायणं नाम सत्रं चेत्यादि श्रौतसूत्रेषु विस्तारः। महादेवो महादेवाख्यः पिता। तस्य महादेवाख्यस्य पत्युर्या भक्तिः सेवा तत्र प्रकर्षेण निहिता स्थापिता मतिर्बुद्धिर्यया सा तादृशी पतिव्रता सुमित्राख्या माता । माता च पिता च पितरौ जननीजनकौ स्तः। 'पिता मात्रा' इति सूत्रेणैकशेषः। अनेन सुकविश्चासौ जयदेवश्चेति तथोक्तेन जयदेवाख्यविदुषा रचिते विनिर्मिते चन्द्रालोके चन्द्रालोकाख्येऽलङ्कारग्रन्थे । चन्द्रस्यालोक इव आलोको यस्मिन्स तस्मिन् । असौ विरचित आदौ भव आद्यः प्रथमः। मयूखः किरणः । मिमीते इति मयूखः। 'माङ् माने शब्दे च' इति धातोः 'माङ-

वाणी का निरूपण करके ग्रन्थकार अपना परिचय देता हुआ मयूख को समाप्त करता है—

सत्र ( यागविशेष ) प्रधान यज्ञविद्या ( कर्मकाण्ड ) का प्रधान ज्ञाता अग्निहोत्री महादेव जिसका पिता है तथा पति की भक्ति में सदा तत्पर रहनेवाली सुमित्रा जिसकी माता है, उस सुकवि जयदेव से निर्मित चन्द्रालोक नामक ग्रन्थ का यह प्रथम मयूख विद्वानों को चिरकालतक आनन्दित करे। यहां इस चन्द्रालोक-नामक ग्रन्थ का मयूख ( किरण ) नाम से किया हुआ विभाग कवि की प्रौढि को बतलाता है । अहन् शब्द से वेद में अहोरात्र ( रात्रि दिन ) का बोध होता है। इस अहोरात्र में किये जाने वाले सोमयागादि वेद में एकाह याग कहे जाते हैं। इसके आगे यह (द्विदैनिक ) प्रभृति द्वादशाह तक के याग अहीन कहे जाते हैं। इसके बाद अनेक दिन-साध्य अर्थात् सहस्रसंवत्सर पर्यन्त के याग सत्र शब्द से विख्यात हैं। यथा त्रयोदशाह से लेकर शताह ( सौ दिन ) तक के याग रात्रि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति चन्द्रालोकालङ्कारे वाग्विचारो नाम प्रथमो मयूखः ।

---

ऊखो म्य् च' (उणा०५।२५) इत्यनेनोखप्रत्यये मयादेशे च मयूखशब्दः सिद्ध्यति । चन्द्रालोकाख्यग्रन्थस्य मयूखनाम्ना विषयविभागोऽन्वर्थक इति विज्ञेयम् । सुमनसः पण्डितान् देवांश्च । चिरं चिरकालम् । सुखयतु सुखीकरोतु ॥ १६ ॥

अथ ग्रन्थकारः प्रथममयूखसमाप्तिं कथयति-इतीत्यादिना । इतिशब्दः परिसमाप्तौ । चन्द्रालोकालङ्कार इति ग्रन्थनामवर्णनीययोः कथनम् । वाचः शब्दस्य विचारो वाग्विचारः शब्दविवेक इति प्रथममयूखे वर्ण्यमानं वस्तूक्तम् । नामेत्यलङ्कारे प्रथमो मयूखः समाप्त इति शेषः । एवमुपरिष्टादपि द्रष्टव्यम् ।

इति श्रीजयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन वेदान्तभूषणोपाधिविभूषितेन भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीयप्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमितिजुषा जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायाः प्रथमे मयूखे पर्यवसानम् ॥ १ ॥



---

सत्र के नाम से कहे जाते हैं । एवं वर्षपर्यन्त किये जाने वाले याग सर्पसत्रादि हैं । त्रैवार्षिक याग तापश्चित्त सत्र नाम से, पाँच वर्ष तक किये जाने वाले महातापश्चित्त सत्र शब्द से, द्वादश वार्षिक को महासत्र, छत्तीस वर्ष में पूर्ण होनेवाले को शाक्त्यानामयनसत्र, सौ वर्ष में समाप्त होनेवाले याग को साध्यानामयनसत्र और हजारवर्ष के याग को विश्वसृजामयनसत्र कहते हैं । इसके बाद तीन सारस्वतसत्र और तुरायणनीम सत्र किये जाते हैं । सत्रों का विशेष निरूपण कात्यायनादि श्रौतसूत्रों में देखना चाहिये ॥ १६ ॥

कथाभट्ट-नन्दकिशोरशर्मसाहित्याचार्यकृत कथाभट्टीयनामक हिन्दीव्याख्या में चन्द्रालोक का प्रथम मयूख समाप्त हुआ ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# द्वितीयो मयूखः

अथ दोषाः ।

**स्याच्चेतो विशता येन सक्षता रमणीयता ।**
**शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम् ॥ १ ॥**

---

अथ 'निर्दोषा लक्षणवती' इत्यादिकाव्यलक्षणे प्रथमं दोषाभावत्वं निरूपितम् । दोषाभावश्च सत्येव दोषज्ञाने ज्ञायेतेत्यादौ दोषान् वक्तुं प्रतिजानीते—अथेत्यादिना । काव्यस्य शब्दार्थौ शरीरम्, रस आत्मा, गुणाः शौर्यादिस्थानीयाः, अलङ्काराः कटककुण्डलादिस्थानीयाः, रीतयोऽवयवसंस्थानवत्, दोषाः काणत्वादिवत् सन्तीति काव्यप्रकाशादौ स्पष्टम् । अत्राप्येतत्समानमेव, किन्तु गुणा अत्र शब्दार्थयोरेव धर्माः, स्वीक्रियन्ते तत्र त्वात्मभूतस्य रसस्येतीयान् भेदः । तत्रादौ दोषसामान्यलक्षणमाह—स्यादित्यादिना । चेतोऽन्तःकरणं विशता प्रविशता येन चेतःप्रविष्टेन काव्यस्य रमणीयतोद्देश्यप्रत्यायकत्वलक्षणा सुन्दरता क्षतेन नाशेन सहिता सक्षता सप्रतिबन्धा स्यात् । यत्सत्तयोद्देश्यप्रतीतिविघातो भवेत्स दोष इति तात्पर्यम् । शब्दे वाचके अर्थे वाच्ये च कृतो विहित उन्मेषः प्रादुर्भावो येन स तम् । शब्दार्थोभयनिष्ठमिति यावत् । तं रमणीयताविघातकं दोषं काव्यदूषणम् । उद्घोषयन्ति कथयन्ति । बुधा इति शेषः । स चाय दोषो द्विविधो नित्योऽनित्यश्च । तत्र प्रकारान्तरेणापि समाधातुमशक्यो नित्यः । यथा च्युतसंस्कृत्यादिः । एतद्विपरीतस्त्वन्यः । यथा ग्राम्यत्वादि

---

काव्य के स्वरूप का निरूपण करते हुए ग्रन्थकार ने पहिले यह बतलाया कि काव्य में दोष नहीं होने चाहिए । इसलिये यहाँ सर्वप्रथम दोषों का ही विवेचन किया जाता है । जिस प्रकार काणत्वादि दोषों से रहित पुरुष शौर्यादि गुणों से, कटक-कुण्डलादि आभूषणों से और शरीर के संघटन से शोभित रहता है । उसी प्रकार काव्यप्रकाश में काव्यरूपी पुरुष के शब्दार्थ को शरीर, रस को आत्मा, माधुर्यादि गुणों को शौर्यादिक के समान गुण, अनुप्रासोपमादि अलङ्कारों को कटक-कुण्डलादि के समान अलङ्कार, रीतियों को शरीरसंधियाँ और श्रुतिकटु प्रभृति दोषों को काणत्वादि के समान दोष बतलाया गया है । अब दोष के सामान्य लक्षण का प्रतिपादन किया जाता है—जिसके रहने से काव्य की सुन्दरता का विनाश हो उसे दोष कहते हैं । वह दोष शब्द और अर्थ दोनों में रहता है । वह दोष नित्य और अनित्य भेद से दो प्रकार का है । जो स्थलविशेष में गुण रूप को धारण करे वह अनित्य दोष कहलाता है । जैसे ग्राम्य दोष हास्यरस में गुण बन जाता है अतः वह अनित्य दोष है । जो सब जगह सर्वदा दोष ही माना जावे वह नित्य दोष है । च्युतसंस्कृति प्रभृति नित्य दोष माने गये हैं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य हास्यरसोद्देशे गुणत्वात्। एतच्च ग्रन्थकर्त्रा दोषाङ्कुशप्रतिपादनावसर उक्तम्। द्विविधोऽप्ययं दोषः पदवृत्ति–पदांशवृत्ति–वाक्यवृत्ति–वाक्यांशवृत्ति–प्रबन्धवृत्ति–अर्थवृत्ति–रसवृत्तितया सप्तधा। श्रुतिकटुत्वादयः पददोषाः पदांशदोषा वाक्यदोषाश्च। क्लिष्टत्वादयः समासगताः पददोषाः। निरर्थकत्वादयः पदमात्रवृत्तयः। प्रतिकूलाक्षरत्वादयो वाक्यमात्रगताः। अपुष्टार्थत्वादयोऽर्थदोषाः, रसशब्दोक्त्यादयो रसदोषाः। एते च रसदोषा अत्र न प्रतिपादिताः। इमे शब्ददोषा इमे चार्थदोषा इत्यत्र किं नियामकमिति चेच्छब्दपरिवृत्तिसहत्वासहत्वे गृहाण, तथा हि यस्य शब्दस्योपादान एव यो दोषो वर्तते स तु शब्दगतो दोषः। शब्दपरिवर्तनेऽपि यो दोषो न निवर्तते सोऽर्थगतो दोषो विज्ञेयः। श्रुतिकटुपदोपादान एव श्रुतिकटुदोषसत्ता, श्रुतिकटुपदानुपादाने तु न तत्सत्तेति श्रुतिकटुदोषः शब्दगामी। अपुष्टार्थत्वाद्यर्थदोषेषु तु तदर्थवाचकपदान्तरेऽपि स दोषो न निवर्तत इति तेषामर्थदोषता स्वीक्रियते। अत्र ग्रन्थे श्रुतिकटुत्वादि अन्यसंगतान्ता विंशतिदोषाः पदगताः। प्रतिकूलाक्षरादि अमतार्थान्तरान्ता अष्टादश दोषा वाक्यगताः। अपुष्टार्थादि विरुद्धान्योन्यसंगत्यन्ताश्चतुर्दश दोषा अर्थमात्रगामिन इत्यत्र संक्षेपः। उद्देश्यप्रतीतिप्रतिबन्धकतावच्छेदकत्वं दोषसामान्यलक्षणम्। उद्देश्याप्रतीतिश्च क्वापि रसविषयिणी क्वापि चार्थगोचरा। रसवति काव्ये च साऽविलम्बिता रसापकर्षशून्या च यत्र स्यात्तत्र दोषाभावः। नीरसे च काव्ये साऽविलम्बिता, अर्थचमत्कारिणी च यत्र भवेत्तत्र न दोषः। एतदुभयविरुद्धत्व एव

ये दोनों प्रकार के दोष पद, पदांश, वाक्य, वाक्यांश, अर्थ, प्रबन्ध और रस इन सातों स्थानों में रहते हैं। श्रुतिकटु प्रभृति दोष से लेकर अन्यसंगत दोष पर्यन्त बीस दोष पदगत, प्रतिकूलाक्षरादि दोष से अमतार्थान्तर दोष तक अट्ठारह वाक्यदोष, अपुष्टार्थादि दोष से विरुद्धान्योन्यसंगति दोष तक चौदह दोष अर्थगत इस ग्रन्थ में बताये गये हैं। जो दोष शब्द के रहने पर रहे और उस शब्द के न रहने पर न रहे वह दोष शब्दनिष्ठ ( शब्द में रहनेवाला ) माना जाता है। और जो दोष शब्द के न रहने पर भी रहे उसे अर्थगत ( अर्थ में रहने वाला ) दोष कहते हैं। जो प्रधान विषय के ज्ञान में बाधा डाले उसे दोष कहते हैं। यह दोष का परिष्कृत लक्षण माना है। जहां सरस काव्य में रस की प्रतीति शीघ्र हो और चमत्कार से युक्त हो वहां दोष नहीं होता और जहां नीरस काव्य में अर्थ की प्रतीति शीघ्र हो और चमत्कार से युक्त हो वहां भी दोष नहीं होता। क्यों कि दूषित सरस काव्य में कहीं रस की प्रतीति ही नहीं होती तो कहीं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः ।
संविद्रते व्याकरणविरुद्धं च्युतसंस्कृति ॥ २ ॥

---

दोषत्वम् । यतो दोषयुक्तेषु काव्येषु क्वचिद्रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्य रसस्यापकर्षः, क्वचिच्च विलम्बः । एवं नीरसकाव्येषु दूषितेषु क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव, क्वचित्तस्याचमत्कारिता, क्वचित्तस्य विलम्बेन प्रतीतिः । इत्थं रसप्रधानेषु अर्थप्रधानेषु च काव्येषु दूषितेषु सत्सूद्देश्यप्रतीतिविघातकता व्यक्तैव। सा च विघातकता केषांचित्साक्षात् , केषाञ्चिच्च दोषाणां परम्परयेति यथायथमूह्यम् ॥ १ ॥

अथ पददोषेषु श्रुतिकटुं दोषमाह—भवेदित्यादिना । श्रवणयोः कर्णयोरुद्वेजने खेदोत्पादने पटुः समर्थो वर्णः शब्दः श्रुतिकटुदोषो भवेत् स्यात् । श्रुत्योः कटुः श्रुतिकटुर्दुःश्रव इति भावः । परुषवर्णतया श्रवणखेदोत्पादकत्वं श्रुतिकटुत्वमिति तल्लक्षणम् । उदाहरणं तु 'भवेच्छ्रुति' इतीदं पदमेव ज्ञेयम् । चकार–छकार–रकारवर्णसंयोगस्य परुषवर्णतया दुःश्रवतया च श्रवणखेदोत्पादकत्वात् । यत् पदं व्याकरणविरुद्धं पाणिनीयादिव्याकरणासिद्धं तत् च्युतसंस्कृतिदोषं संविद्रते जानन्ति । अत्र 'वेत्तेर्विभाषा' इत्यनेन वैकल्पिको रुडागमः । च्युता संस्कृतिर्व्याकरणसंस्कारो यस्मिंस्तत् पदं च्युतसंस्कृति । व्याकरणासिद्धत्वं च्युतसंस्कृतित्वमिति तल्लक्षणम्, 'संविद्रते' इति पदं चोदाहरणम् । सम्पूर्वकाद् विद्धातोः 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्'

---

बिलम्ब से प्रतीति होती है और कहीं उस प्रतीति में चमत्कार नहीं रहता । इसी प्रकार नीरस काव्य में दोष होने पर कहीं अर्थ की प्रतीति ही नहीं होती तो कहीं उस प्रतीति में चमत्कार नहीं रहता अथवा कहीं उस अर्थ की ठीक २ प्रतीति में विलम्ब हो जाता है । इस प्रकार रसप्रधान काव्य में तथा अर्थप्रधान ( नीरस ) काव्य में दोष होने से उक्त कारणों के अनुसार मुख्य विषय के ज्ञान में बाधा हो जाना ही दोष कहा जाता है, यह दोष का स्पष्टीकरण हुआ ॥ १ ॥

अब पददोषों में पहिले श्रुतिकटुदोष का निरूपण किया जाता है—कानों को कठोर प्रतीत होने वाले वर्ण को श्रुतिकटुदोष कहते हैं । जैसे इसी श्लोक में 'भवेच्छ्रुति' यहां पर चकार, छकार' रकार के मिलजाने से कानों में कटुशब्द की प्रतीति होती है; अतः यहां श्रुतिकटुदोष है । जो पद व्याकरणशास्त्र से सिद्ध न होता हो वहां च्युतसंस्कृति दोष होता है । यथा इसी श्लोक में 'संविद्रते' यह पद व्याकरण से अशुद्ध है, क्योंकि परस्मैपदी विद् धातु के सम् उपसर्ग लगाने पर 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' इस वार्तिक से जो आत्मनेपद का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अप्रयुक्तं दैवतादिशब्दे पुंल्लिङ्गतादिकम् ।

इति वार्तिकेनात्मनेपदविधानेऽपि 'समो गम्यृच्छिभ्याम्' इत्यनेनाकर्मकत्व एव तद् भवति नान्यथा । अत्र तु सकर्मकोऽयं धातुः, अतोऽत्र व्याकरणलक्षणहीनत्वाच्च्युतसंस्कृतित्वं विज्ञेयम् ॥ २ ॥

अप्रयुक्तत्वमाह—अप्रेत्यादिना । दैवत आदिर्यस्य स दैवतादिः, स चासौ शब्दश्चेति दैवतादिशब्दस्तस्मिन् । पुंल्लिङ्गतादिकं पुंल्लिङ्गताप्रभृतिकमप्रयुक्तं भवति तथाऽऽम्नातत्वेऽपि काव्यानादृतत्वमप्रयुक्तत्वम् । तथाविधकविसमयातिक्रमणप्रयोजनानुसंधानव्याकुलतया विलम्बेनार्थप्रत्यायकत्वमत्र दूषकताबीजम् । यथा दैवतशब्दस्य पुंल्लिङ्गतापि कोशादौ 'दैवतानि पुंसि वा' इत्यादिना प्रतिपादिता तथापि काव्ये दैवतशब्दे नपुंसकलिङ्गतैव प्रयुज्यते कविभिरिति तस्य पुंल्लिङ्गे प्रयोगत्वं काव्यानादृततयाऽप्रयुक्तत्वम् । यथा वा 'भाति पद्मः सरोवरे' इत्यत्र पद्मशब्दः 'वा पुंसि पद्मम्' इति कोषप्रामाण्यात्पुंल्लिङ्गे प्रसिद्धोऽपि काव्येऽसौ पुल्लिङ्गतयाऽस्वीकृतः सन् पुंल्लिङ्गताप्रयोगभाग् दोषत्वमापद्यते । काव्ये पद्मशब्दो नपुंसकलिङ्ग एव प्रयुज्यत इति नपुंसकलिङ्गतापरित्यागेऽत्र पद्मशब्दो दुष्टो यमकादिप्रयोजनसत्त्वे त्वदुष्टता

---

विधान है वह 'समो गम्यृच्छिभ्याम्' इस सूत्र से संविद् धातु के अकर्मक होने पर ही होता है, अन्यथा नहीं । यहाँ 'संविद्रते' का प्रयोग सकर्मक है, अतः वह व्याकरण से अशुद्ध होने के कारण च्युतसंस्कृति कहा जाता है ॥ २ ॥

अप्रयुक्त दोष का विवेचन किया जाता है—

दैवत आदिशब्द का पुंल्लिङ्ग में प्रयोग करना अप्रयुक्त दोष होता है । अमरकोष में 'दैवतानि पुंसि वा' इस कथन से दैवत शब्द को पुंल्लिङ्ग भी बतलाया है । किन्तु काव्य में दैवतशब्द का नपुंसक लिङ्ग में ही प्रयोग किया जाता है । अतः काव्य में दैवतशब्द का कोष के कथनानुसार पुंल्लिङ्ग में यदि कोई प्रयोग करे तो वह अप्रयुक्त दोष होता है । इसी तरह 'वा पुंसि पद्मम्' इस कोष के कथन से पद्म शब्द को पुंल्लिङ्ग करना भी दोष है । क्योंकि कविसम्प्रदाय पद्म शब्द का नपुंसकलिङ्ग में ही प्रयोग करता आया है । तात्पर्य यह हुआ कि कोष और व्याकरणादि शास्त्रों से बतलाये गये दो प्रकार के लिङ्गों में से जिस लिङ्ग का काव्य में प्रयोग आता हो उसी लिङ्ग के प्रयोग से अप्रयुक्त दोष नहीं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

असमर्थं तु हन्त्यादेः प्रयोगो गमनादिषु ॥ ३ ॥
स हन्ति हन्त कान्तारे कान्तः कुटिलकुन्तलः ।
निहतार्थं लोहितादौ शोणितादि प्रयोगतः ॥ ४ ॥

---

इत्यनवद्यम् । असमर्थत्वमाह—असमेति । हन्त्यादेः 'हन-हिंसागत्योः' इत्यादिधातोर्गमनादिषु गमनक्रियादिषु प्रयोगोऽसमर्थाख्यदोषो भवति। विवक्षितार्थपरिपठितत्वे सत्यपि तदर्थप्रतिपादनाशक्तत्वमसमर्थत्वम् । यथा 'स हन्ति हन्त कान्तारे' इत्यस्य 'स कान्तारे वने हन्ति गच्छति' इत्यर्थः। अत्र 'हन–हिंसागत्योः' इत्यनेन हन्धातुर्गमनार्थे परिपठितोऽपि गमनरूपार्थबोधनेऽशक्त इत्यस्यासमर्थदोषता। पद्धतिजघनजङ्घादिषु गमनार्थत्वाद्धन्तेर्गमनार्थे पाठ इति रहस्यम्। हन्धातुर्हननार्थबोधशक्तो गमनार्थे त्वशक्त इत्यसमर्थता। अर्थानुपस्थितिर्दूषकताबीजम् ॥ ३ ॥

असमर्थदोषोदाहरणमाह—स हन्तीत्यादिना। कुटिला वक्राः कुन्तलाः केशा यस्य स तादृशः । सोऽनुभूतः कान्तः प्रियः कान्तारे वने हन्ति गच्छति इति हन्त खेदे। अत्र हन्धातुर्गमनार्थे पठितोऽपि न गमनार्थबोधनतामर्हति। हन्धातोर्गमनार्थवाचकता पद्धतिजङ्घाजघनादिष्वेव वर्तते नान्यत्रेति शक्तिनियमात् हन्धातोर्गमनार्थे प्रयोगोऽसमर्थदोषभाग् भवति । निहतार्थत्वमाह—निहतेति । रागार्थवाचके लोहितादिशब्दे वाच्ये शोणितादिशब्दप्रयोगात् निहतार्थदोषो भवति । विरलप्रयोगतया-

---

होता, अन्यथा दोष होता है । असमर्थदोष बतलाते हैं—हन आदि धातुओं का गमनार्थ में प्रयोग करना असमर्थ दोष है। तथापि हन धातु के व्याकरण में हिंसा और गति ये दोनों अर्थ बतलाये गये हैं तथापि हन धातु का हिंसा में ही प्रयोग किया जाता है । अतः हन धातु का गति में प्रयोग करना असमर्थ दोष है । अर्थात् हन धातु गति अर्थ के बोधन में असमर्थ है व्याकरण में जो हन धातु का गति अर्थ भी बतलाया गया है, वह अर्थ—पद्धति, जघन, जङ्घा आदि शब्दों में ही होता है अन्य साधारण स्थान में नहीं । हन धातु का गमनरूप अर्थ में प्रयोग करने से अर्थज्ञान का न होना ही दोष होने में कारण है ॥ ३ ॥

असमर्थ दोष का उदाहरण यह है—कुटिलकेशधारी प्रियतम गहन वन में जाता है, यह बड़े दुःख की बात है । यहां हन्ति शब्द का वनगमन रूप अर्थ में प्रयोग किया है । अतः यह असमर्थ दोष का उदाहरण है । अब निहतार्थ दोष को

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यनक्त्यनुचितार्थं यत् पदमाहुस्तदेव तत् ।
इयमद्भुतशाखग्रकेलिकौतुकवानरी ॥ ५ ॥

ऽभिभूतोऽर्थोऽभिधेयो यस्मिन्स तादृशो दोष इति यावत् । रागे वक्तव्ये लोहितादिशब्दमपहाय रुधिरार्थवाचकशोणितादिपदप्रयोगे निहतार्थदोषसत्ता । यतो हि शोणितपदस्य रुधिरे प्रसिद्धार्थता रागे त्वप्रसिद्धार्थतेति दोषः । उभयार्थशब्दत्वे सत्यप्रसिद्धार्थप्रयोक्तृत्वं निहतार्थत्वम् । असमर्थे त्वर्थानुपस्थितिरत्र द्वितीयार्थस्य विरलप्रयोगतया विलम्बेनार्थबोध इत्यनयोर्भेदः ॥ ४ ॥

अनुचितार्थत्वमाह–व्यनक्तीति । यत्पदं सुबन्ततिङन्तरूपम् । अनुचितश्चासावर्थश्चेत्यनुचितार्थस्तमयोग्यार्थम् । व्यनक्ति प्रकटयति । तदनुचितार्थबोधक पदं तदेवानुचितार्थदोषाख्यमाहुः । वर्णनीयेऽसमञ्जसार्थबोधकत्वमनुचितार्थत्वम् । अयं दोषः क्वचिद्वाच्यार्थदोषप्रतिपादकत्वेन, क्वचिदर्थासंभवेन, क्वचिदसत्समर्थकत्वेन त्रिधा भवति । अत्र पदान्तरानपेक्षमनुचितार्थत्वम्, विरुद्धमतिकृद्दोषे तु पदान्तरसापेक्षं तथेत्यनयोर्भेदः । अनुचितार्थोदाहरणमाह–इयमिति । इयं कामिनी । अद्भुतोऽद्भुतरस एव शाखी वृक्षस्तस्याग्रे केलिः क्रीडा तस्यां कौतूहलं यस्याः सा, सा चासौ वानरी च

कवि बतलाता है—लालरंग के वाचक लोहित शब्द को छोड़ कर उसकी जगह लालरंग के बोधन में अप्रसिद्ध शोणित शब्द का प्रयोग निहतार्थ दोष होता है । अर्थात् किसी शब्द का अप्रसिद्ध अर्थ में प्रयोग करना ही निहतार्थ दोष होता है । प्रसिद्ध अर्थ से अप्रसिद्ध अर्थ जहाँ रुद्ध हो जावै वह निहतार्थ होता है । शोणितशब्द रुधिर अर्थ में प्रसिद्ध है और लालरंग के अर्थ में अप्रसिद्ध है । अतः शोणितशब्द का राग रूप अर्थ में प्रयोग करना निहतार्थ दोष है । असमर्थ दोष में अर्थ का ज्ञापन ही नहीं होता, यहां तो विलम्ब से अर्थबोध होता है, यह दोनों दोषों में भेद जानना चाहिए ॥ ४ ॥

अनुचितार्थ दोष कहते हैं—जो पद अनुचित अर्थ का बोध करावे, उसे अनुचितार्थ दोष कहते हैं । वर्णनीय अर्थ में जो हीनता बतलावै, वह अनुचितार्थ दोष होता है । यह दोष कहीं वाच्य अर्थ में दोष को, कहीं अर्थ की अनुत्पादकता को और कहीं अधम अर्थ का समर्थन करता है । अनुचितार्थ दोष अन्य पद की सहायता के बिना ही होता है । विरुद्धमतिकृत् दोष में दूसरे पदों की भी सहायता होती है यह इन दोषों का भेद है । अनुचितार्थ का उदाहरण यह है—इयमिति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम् ।
अर्थे विदधदित्यादौ दधदाद्यमवाचकम् ॥ ६ ॥

तादृशी वर्तते । इयं कामिन्यद्भुतकेलिकर्त्रीति भावः । अत्र कामिन्यां केलिकौतुकातिशयप्रतिपिपादयिषया कृता वानरीत्वारोपस्तस्यां वैरूप्यं बोधयतीत्यनुचितार्थत्वमत्र भवति ॥ ५ ॥

निरर्थकत्वमाह–निरर्थकमिति । पूरयतीति पूरणमेवैकं मुख्यं प्रयोजनं यस्मिंस्तत्तादृशं पादाक्षरभरणमात्रफलकम् । तु-हि-इत्यादि यस्मिंस्तत् पदं तुहीत्यादि । आदिपदेन चादिग्रहणम् । निर्गतोऽर्थः प्रयोजनं यस्मात्तन्निरर्थकं नाम दूषणं भवति । यत्र श्लोके पादाक्षरपूर्तीच्छया तुहीत्यादिपदानि विनिवेश्यन्ते । तत्र तानि तुहीत्यादीनि पदानि निरर्थकत्वदोषभाञ्जि भवन्ति । पादाक्षरसंख्याभरणमात्रफलकत्वं निरर्थकत्वम् । यथा 'मुञ्च मानं हि मानिनि'-अत्र हिपदं निरर्थकम् । तस्यार्थस्याविवक्षितत्वात् । निरर्थकपदयुक्ते वचसि सहृदयानां वैमुख्यम्, प्रयोजनानुसन्धानव्यग्रता वात्र दूषकताबीजम् । अत्र तुहीत्यादि लक्ष्यम् । अवाचकत्वमाह–अर्थ इति । विदधदित्यादौ कुर्वदित्यादावर्थेऽभिधेये यद् दधद् आद्यं यस्मिंस्तत् पदं दधदाद्यम् प्रयुज्यते तदाऽवाचकदोषो भवति । यदुपसर्गसम्बन्धेन यो धातुर्यादृशार्थबोधकः, तदुपसर्गादि विनैव तादृशार्थबोधकतया तस्य धातोः प्रयोगेऽवाचकदोषः । विवक्षितार्थद्योतकोप-

---

यह रमणी अद्भुतरसरूपीवृक्ष की शाखाओं पर क्रीड़ा करनेवाली वानरी है। अर्थात् जिस प्रकार वानरी वृक्ष की शाखाओं पर अद्भुत क्रीड़ा करती रहती है, उसी प्रकार यह रमणो भी अनेक प्रकार की सुरतक्रीडा से प्रेम करती है। वहां वानरी पद अनुचितार्थ का बोधक है। कवि ने केलि-प्रियता बतलाने के लिये स्त्री में वानरी का आरोप किया था; किन्तु इस आरोप से कामिनी में वानरी के समान कुरूपता का बोध होता है। अतः इस पद में अनुचितार्थ दोष है ॥ ५ ॥

निरर्थक दोष यह है—जहां पादपूर्ति की इच्छा से तु हि च इत्यादि पद रख दिये जावें वहां निरर्थक दोष होता है। जिन शब्दों का अर्थ में उपयोग न हो, उन्हें निरर्थक पद कहते हैं। यथा 'मुञ्च मानं हि मानिनि' हे मानवती ! तुम अपने अहङ्कार को छोड़ दो। इस स्थान पर हि-पद का कोई अर्थ नहीं होता अतः यह निरर्थक दोष है। विद्वानों को निरर्थक वचन सुनने में उपेक्षा होती है यह दोष होने का निमित्त है। अवाचक का स्वरूप यह है—वि उपसर्ग-सहित धा-धातु का 'करना' अर्थ हो जाता है। जहां वि उपसर्गरहित धा-धातु का करने अर्थ में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धत्ते नभस्तलं भास्वानरुणं तरुणैः करैः ।
एकाक्षरं विना भूभ्रूक्ष्मादिकं खतलादिवत् ॥ ७ ॥

---

सर्गादिसम्बन्धाभावेऽपि तत्सम्बन्धजन्यार्थप्रतिपादकतया तत्प्रयुक्तत्वमवाचकत्वम् । यथा 'डुधाञ् धारणपोषणयोः' इति धातुर्व्युपसर्गसहित एव करणार्थे वर्तते । नान्यथा । यदि धा-धातोः करणार्थे प्रयोग इष्यते तदा व्युपसर्गसहितस्यैव तस्य प्रयोगः ( 'विधत्ते' इत्यादि ) करणीयः । वि-उपसर्गरहितस्य तु न । तस्य धारणार्थकत्वात् । यदि धारणार्थकस्य वि-उपसर्गरहितस्य धा-धातोः करणार्थे प्रयोगः स्यात्तदाऽवाचकदोषो भवति ॥ ६ ॥

अवाचकोदाहरणमाह—धत्त इति । भासः सन्त्यस्येति भास्वान् सूर्यः । तरुणैः दैदीप्यमानैः करैः किरणैः । नभस्तलमाकाशम् । अरुणं रक्तं धत्ते कुरुते । विपूर्वक एव धाधातुः करणार्थे वर्त्तते । अत्र तु केवलं धाधातुरेव करणार्थे प्रयुक्तः । स च व्युपसर्गरहिततया करणार्थावाचक इत्यत्रावाचकदोषता । यथा-अधिके वाच्ये न्यूनप्रयोगस्यावाचकत्वं तथैव न्यूने वाच्येऽधिकप्रयोगस्याप्यवाचकत्वमुक्तमित्यतिप्रसङ्गः स्यादित्याह-एकाक्षरमिति । एकमद्वितीयमक्षरं यस्मिंस्तत् । भूभ्रूक्ष्माः आदयो यस्मिंस्तत् भूभ्रूक्ष्मादिकं पदं विनापहाय खतलादिना तुल्यं खतलादिवत् नभस्तलादिद्रुलतादि पदमप्यवाचकम् । अयमाशयः-एकाक्षराणां भूभ्रूक्ष्मादिशब्दानामग्रे क्रमेण तलयुगतलादिशब्दानां प्रयोगे सति नावाचकत्वम् । किन्तु खद्रुनभआदिशब्दानामग्रेतला-

---

प्रयोग किया जावे उसे अवाचक दोष कहते हैं । अर्थात् जिस उपसर्ग के साहचर्य से जिस धातु का जो अर्थ हो उस उपसर्ग के विना ही उसी अर्थ में उसी धातु के प्रयोग को अवाचक दोष जानना चाहिए ॥ ६ ॥

अवाचक का उदाहरण देखिए—सूर्य अपनी नवीन किरणों से नभस्तल (आकाश) को लाल बनाता है यहाँ वि-उपसर्ग रहित धाधातु का बनाने या करने के अर्थ में प्रयोग किया है अतः अवाचक दोष है । यदि यहाँ धाधातु का प्रयोग विउपसर्ग से युक्त होता तो यह दोष नहीं होता । अधिक अर्थ के बोधन में न्यून शब्द का प्रयोग करना तथा न्यून अर्थ के बोधन में अधिक वर्णों का प्रयोग ये दोनों ही अवाचकदोष के स्थान हैं । इनमें पहिला उदाहरण बतला दिया गया । दूसरा उदाहरण यह है—एक अक्षर वाले भू, भ्रू, क्ष्मा आदि शब्दों को छोड़कर खतल (आकाश) आदि शब्दों के समान नभ, आकाश, द्रु आदि शब्दों के साथ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना ।

दिप्रयोगेऽवाचकतैव । न्यूने वाच्येऽधिकप्रयोगात् । अत्रैकाक्षरेषु तलादिप्रयोगे सुन्दरताविघातो दूषकताबीजम् । यथा भूभ्रूक्ष्मादिशब्देषु तलयुगतलादिप्रयोगे न रमणीयताविघात इत्यवाचकदोषता । खद्युनभआदिषु तलतातलादिप्रयोगे न रमणीयताविनाश इत्यस्त्यत्रावाचकत्वम् । एवं 'धत्ते' इत्यादिपूर्वोक्तोदाहरणे नभस्तलपदेऽप्यवाचकदोषत्वं ज्ञेयम् । 'धत्ते' 'नभस्तलम्' इत्यनयोः पूर्वत्र विवक्षितार्थानुपस्थितिरुत्तरत्र च सुन्दरताविघातेन वैमुख्यापादनं च दूषकताबीजम् । अप्रयुक्तनिहतार्थावाचकदोषाणामसमर्थ एवान्तर्भावेऽपि प्राचीनसंप्रदायानुरोधाद् भेद इति काव्यप्रकाशादयः ॥ ७ ॥

त्रिधा भिन्नमश्लीलमाह—अश्लीलमिति । सभ्यवशीकरणस्पत्तिः श्रीः । तां श्रियं लाति गृह्णातीति श्रीलः । 'आतोऽनुपसर्गे कः' इत्यनेन कप्रत्ययः । कपिलादित्वाद्रेफस्य लत्वम् । न श्लीलोऽश्लीलः । असभ्यार्थान्तरव्यञ्जकत्वमश्लीलत्वम् । व्रीडा लज्जा, जुगुप्सा घृणा, अमङ्गलमशुभं चात्मा स्वरूपं यस्य तेन । अर्थाद् व्रीडाजनकतया, जुगुप्साजनकतया, अमङ्गलातङ्कजनकतया चाश्लीलस्य भेदत्रयम् । उदाहरणमाह—

तल आदि का प्रयोग करना भी अवाचक दोष है । तात्पर्य यह हुआ कि एक अक्षरवाले भू, भ्रू, क्ष्मा प्रभृति शब्दों के आगे क्रम से तल ( भूतल ), युग ( भ्रूयुग ), तल ( क्ष्मातल ) शब्दों के प्रयोग में अवाचक दोष नहीं होता और ख, द्यु, नभ आदि शब्दों के साथ तल ( खतल·आकाश ) आदि शब्द के प्रयोग में अवाचक दोष होता है । किस शब्द के साथ तल आदि प्रत्ययों का प्रयोग होता है और किस शब्द के साथ नहीं होता, यह कवियों के प्रयोग से जानना चाहिए। इस प्रकार 'धत्ते नभस्तलम्' यह श्लोक दोनों प्रकार के अवाचक दोष का उदाहरण है । पहिले भेद में विवक्षित अर्थ की प्रतीति नहीं होती और दूसरे भेद में सुन्दरता का नाश होता है । यह दोनों में हेतु है । यद्यपि अप्रयुक्त, निहतार्थ और अवाचक इन तीनों दोषों का अन्तर्भाव असमर्थ दोष में हो जाता है तथापि प्राचीन संप्रदाय के अनुसार ये तीनों दोष अलग २ बतलाये गये हैं ॥ ७ ॥

अश्लील दोष का स्वरूप कहा जाता है—जो पद असभ्य अर्थ का भी बोधक होवै, वह अश्लील दोष होता है । शोभायुक्त न होना अश्लील शब्द का अर्थ माना गया है । वह अश्लील व्रीडाजनक, जुगुप्साजनक और अमङ्गलजनक होने के कारण तीन प्रकार का होता है । इन तीनों के क्रम से उदाहरण देखिए—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आह्लादसाधनं वायुः कान्तानाशे भवेत् कथम् ॥ ८ ॥
स्याद् द्व्यर्थमिह संदिग्धं नद्यां यान्ति पतत्रिणः ।

आह्लादेति । कान्तानाशे रमणीवियोगे । वायुः पवनः । आह्लादस्यानन्दस्य साधनं निमित्तं कथं स्याद् भवेत् । अर्थात्कान्ताविरहे मन्दपवनोऽपि नानन्दजनक इति भावः । अत्राह्लादसाधनपदेन पुरुषलिङ्गप्रतीत्या व्रीडाजनकत्वम्, वायुपदेनापानवायुप्रतीत्या जुगुप्साजनकत्वम्, कान्तानाशपदेन च कान्तामरणरूपार्थज्ञानेन चामङ्गलजनकत्वमित्यत्र त्रिविधाश्लीलता। अश्लीलार्थप्रतीत्या श्रोतुर्वैमुख्यं दूषकताबीजम् । येषां पुनः शिवलिङ्ग-सुभगा-भगिनी-ब्रह्माण्डादिशब्दानां लोके नाश्लीलतया प्रतीतिस्तेषामुपादाने न दोषः । यत्राभिधया विरुद्धार्थप्रतीतिस्तत्र विरुद्धमतिकृदवकाशः । यत्र च व्यञ्जनया विरुद्धार्थप्रतीतिस्तत्राश्लीलावकाश इत्यनयोर्भेदः । हास्ये शोके च गुणतां प्राप्नोतीत्यनित्योऽयं दोषः ॥ ८ ॥

संदिग्धमाह—स्यादिति । इह काव्ये द्वावर्थौ यस्मिंस्तद् द्व्यर्थम् । एतादृशं पदं संदिग्धाख्यं दूषणं स्यात् । द्व्यर्थमित्युपलक्षणम् । तेनानेकार्थकपदोपादानेऽपि संदि-

कान्ता के नाश होने पर यह मन्द वायु आह्लाद का साधन ( कारण ) कैसे होवै । अर्थात् स्त्रीवियोग में मन्द २ वायु सुखजनक नहीं होता; किन्तु सन्तापदायक होता है । यहाँ आह्लादसाधन पद में साधन शब्द से पुंल्लिङ्ग ( उपस्थ ) की प्रतीति होती है, अतः व्रीडाजनक ( लज्जाजनक ) अश्लील है । वायु पद से अपानवायु की प्रतीति होती है, अतः जुगुप्सा ( घृणा ) जनक अश्लील है । 'कान्तानाश' पद से कान्ता के लोकान्तरित होने की ( मरने की ) प्रतीति होती है, अतः अमङ्गलजनक अश्लील है । शिवलिङ्ग, सुभगा, भगिनी, ब्रह्माण्ड आदि शब्दों से लोक में अश्लील अर्थ की प्रतीति नहीं मानी जाती, अतः उक्त पदों के प्रयोग में दोष नहीं होता । अश्लील अर्थ होने के कारण श्रोता उस अर्थ के सुनने में विमुख हो जाता है यह दूषकता में कारण है । जहाँ अभिधावृत्ति से द्वितीय अर्थ की प्रतीति होवै वहाँ विरुद्धमतिकृत् दोष होता है और जहाँ व्यञ्जना से अर्थान्तर का बोध होवै, वहाँ अश्लील दोष माना जाता है, यह दोनों दोषों का भेद है । अश्लील दोष हास्य और शोक में गुण हो जाता है अतः यह अनित्य दोष है ॥ ८ ॥

सन्दिग्ध दोष का निरूपण किया जाता है-दो या अनेक अर्थ के बोधक पद को

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यादप्रतीतं शास्त्रैकगम्यं वीताऽनुमादिवत् ॥ ९ ॥

---

न्धाख्यो दोषः स्यादेव । संपूर्वकाद् दिह-उपचये धातोर्भावे क्तप्रत्ययः । अनेककोट्यवलम्बितार्थबोधकत्वं सन्दिग्धत्वम् । उदाहरणमाह—नद्यामिति । पतन्तमधोगच्छन्तं त्रायत इति पतत्त्रं पक्षः तदेषामस्तीति पतत्त्रिणः पक्षिणः। नद्यां सरिति यान्ति गच्छन्ति । अत्र 'नद्याम्' इति पदं 'नदीदेशे गच्छन्ति' 'द्यां स्वर्गं न गच्छन्ति' इत्यर्थद्वयप्रतिपादकमित्यत्र संदिग्धदोषत्वम् । नद्यामिति पदं सरित्पक्षे सप्तम्यन्तम्, स्वर्गार्थकपक्षे द्वितीयान्तमिति कोटिद्वयात्मकज्ञाने सति संदिग्धदोषः । उद्देश्यनिश्चयाभावोऽत्र दूषकताबीजम् । अप्रतीतत्वमाह—स्यादिति । वीता चासावनुमा च वीतानुमा वीतानुमानं तद्वत् । शास्त्रेण सांख्ययोगादिशास्त्रेणैकं च तद् गम्यं ज्ञेयं च शास्त्रैकगम्यं सांख्यादिशास्त्रपरिभाषितं पदमप्रतीत दूषणं भवति । कोषाद्यप्रसिद्धत्वे सति शास्त्रपारिभाषिकत्वमप्रतीतत्वम् । वीतानुमानं च सांख्यतत्त्वकौमुद्यां न्यायवार्तिकतात्पर्यटीकायां च श्रीवाचस्पतिमिश्रेण स्फुटीकृतम् । यथा सांख्यतत्त्वकौमुद्यामाह—लिङ्गलिङ्गिपूर्वकमनुमानम् । तच्च द्विविध वीतमवीतं च । अन्वयमुखेन प्रवर्तमानं विधायकं वीतम् । व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम् । इदमेव शेषवदुच्यते । वीतं च द्विधा पूर्ववत् सामान्यतो दृष्टं चेति । दृष्टस्वलक्षणसामान्यविषयं पूर्ववत् ।

---

सदिग्ध दोष कहते हैं । जैसे 'नद्यां यान्ति पतत्त्रिणः' पक्षी नदी में जाते हैं । यहाँ पर 'नद्याम्' पद के 'स्वर्ग में नहीं' तथा 'नदी पर' ये दो अर्थ होते हैं । इनमें कौन-सा अर्थ मुख्य समझा जावे यह यहां सन्देह होता है और सन्देह से मुख्य अर्थ का बोध नहीं होता, इसलिये 'नद्याम्' पद में सन्दिग्ध दोष है । नदी के अर्थ में 'नद्याम्' पद सप्तमी विभक्ति का है और स्वर्ग के अर्थ में वह ही पद द्वितीया विभक्ति का है । उद्देश्य का निर्णय न होना ही दूषकता में कारण है । अप्रतीति दोष का निरूपण यह है—वीतानुमान आदि शब्दों की तरह केवल सांख्यादिशास्त्रों में प्रसिद्ध शब्दों के प्रयोग में अप्रतीत दोष होता है । अर्थात् कोशादि ग्रन्थों में अप्रसिद्ध तथा सांख्यादि शास्त्रों में प्रसिद्ध शब्द के प्रयोग में अप्रतीत दोष जानना चाहिए । जहां हेतु से कार्य का ज्ञान हो उसे अनुमान कहते हैं । सांख्यशास्त्र में वह अनुमान वीत और अवीत भेद से दो प्रकार का है । 'यत्र धूमस्तत्र वह्निः' जहां धूम है वहां वह्नि है इस अन्वयव्याप्ति से जहां अनुमान हो उसे वीतानुमान कहते हैं । जहां व्यतिरेक व्याप्ति से कार्य के निषेध की प्रतीति हो उसे अवीतानुमान कहते हैं । वीतानुमान के पूर्ववत् और सामान्यतोदृष्ट ये दो भेद हैं । अवीतानुमान का शेषवत् यह एक ही प्रकार है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शिथिलं शयने लिल्ये मच्चित्तं ते शशिश्रियि ।
मस्तपिष्टकटीलोष्टगल्लादि ग्राम्यमुच्यते ॥ १० ॥

यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् । अदृष्टस्वलक्षणसामान्यविषयं सामान्यतो दृष्टं वीतमपरम् । यथेन्द्रियविषयमनुमानमिति अप्रतीतोदाहरणं यथा—'योगेन दलिताशयः' । अत्राशयशब्दो वासनार्थको योगशास्त्र एव प्रसिद्धो नान्यत्र । तच्छास्त्रानभिज्ञं प्रत्यर्थानुपस्थितिर्दूषकताबीजम् ॥ ९ ॥

शिथिलत्वमाह—शिथिलमिति । पदानां शिथिलबन्धत्वं शिथिलत्वम् । यथा—शशिनं श्रयतीति शशिश्रि तस्मिन् शशिश्रियि तत्सदृशे । ते तव । शयने पल्यङ्के । मच्चित्तं मे मनः । लिल्येऽलीयत । अत्र पदानां बन्धने शिथिलत्वमित्यत्र शिथिलदोषः । ग्राम्यत्वमाह—मस्तेति । वाहीकादिचमत्कारजनकत्वं ग्राम्यत्वम् । ग्रामादौ प्रसिद्धं वा ग्राम्यम् । मस्तः पिष्टं कटी लोष्टं गल्लश्चादिर्यस्य तत् पदं मस्तपिष्टकटीलोष्टगल्लादि । ग्रामे भवं ग्राम्यमुच्यते । अयमाशयः—मस्तादयः शब्दा मत्तचूर्णाल्लनितम्बमृत्पिण्डकपोलपदेषु ग्राम्याः । पदं तावत्त्रिविधं भवति । ग्राम्यं नागरमुपनागरं चेति । विदग्धमात्रप्रयोज्यं नागरम् । ग्राम्यकक्षातिक्रान्तमप्राप्तनागरभावमुपना-

अप्रतीत का उदाहरण यह है—'योगेन दलिताशयः' योगक्रिया से अपनी विषयवासना को दलित कर दिया है । यहाँ पर आशय शब्द का विषयवासना रूप अर्थ कोश-व्याकरणादि में प्रसिद्ध नहीं है केवल योगशास्त्र में ही प्रसिद्ध है । अतः यहाँ अप्रतीत दोष है ॥ ९ ॥

शिथिल दोष का विवेचन यह है—जहाँ पदों के श्रवण में शिथिलतासी मालुम पड़े वहाँ शिथिल दोष होता है । इस दोष का उदाहरण 'शयने' यह श्लोक है—चन्द्रमा के सदृश स्वच्छ वा सुन्दर तेरी शय्या मेरे मन को अच्छी लगती है । यहाँ पदों के श्रवण में शिथिलता प्रतीत होती है अतः यहाँ उक्त दोष वर्तमान है । ग्राम्यदोष यह है—ग्रामीणों को आनन्द देनेवाले मस्त, पिष्ट, कटी, लोष्ट और गल्लादि शब्दों के प्रयोग में ग्राम्य दोष होता है । ग्राम्य, नागर, उपनागर ये तीन पद के भेद हैं । जो पद ग्राम में प्रसिद्ध हो वा ग्रामीणों को आनन्ददायक हो उसे ग्राम्य पद कहते हैं । जो नगर में प्रसिद्ध हो अथवा नागरिक जनों को आनन्दकारी हो उसे नागरशब्द कहते हैं । और जो शब्द न ग्राम्य


CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

नेयार्थं लक्षणात्यन्तप्रसरादमनोहरम् ।
हिमांशोर्हारधिक्कारजागरे यामिकाः कराः ॥ ११ ॥

गरम् । वाहीकादिचमत्कारजनकत्वं ग्राम्यम् । अयमनित्यदोषः । तेन विदूषकादौ वक्तरि न दोषत्वम् । हास्ये चास्य गुणत्वम् ॥ १० ॥

नेयार्थत्वमाह—नेयार्थमिति । लक्षणाया लक्षणावृत्त्या अत्यन्तप्रसरादाधिक्याद्यद्मनोहरत्वमसुन्दरत्वं तन्नेयार्थम् । नेयः स्वकल्पनयान्यथा प्राप्योऽर्थोऽभिधेयो यस्मिंस्तत् पदं नेयार्थम् । अयमाशयः—सति मुख्यार्थबाधे सति च रूढिप्रयोजनान्यतरहेतौ लक्षणावकाशो भवति । यत्र तु रूढिप्रयोजनान्यतरहेतुं विनैव लक्षणा क्रियते तत्र नेयार्थदोषः प्रथमः । द्वितीयश्च लक्षणाप्रयोगाधिक्ये सति भवति । उदाहरणमाह-हिमांशोरिति । हारेण कामिनीमुक्ताहारेण यो धिक्कारस्तेन चन्द्रस्य जागरो जागरणं तस्मिन् । यामिका हिमांशोश्चन्द्रस्य कराः किरणाः सन्ति । चन्द्रकिरणेभ्योऽप्यधिका कामिनीमुक्ताहारशोभासीदिति भावः । अत्र धिक्कारयामिकादिपदेषु लक्षणाया आधिक्यं स्फुटमेव । लक्षणायां च रूढिप्रयोजनान्यतरहेतुसद्भावोऽपि नास्तीति नेयार्थदोषः । रूढिप्रयोजनान्यतरहेतुशून्यलक्षणात्वं नेयार्थत्वम् । शब्दवृत्त्यभावेनार्थानुपस्थितिर्दूषकताबीजम् ॥ ११ ॥

हो तथा न नागर हो उसे उपनागर शब्द माना है । विदूषक की उक्ति में तथा हास्यरस में यह दोष गुण माना जाता है अतः यह अनित्य दोष है ॥ १० ॥

नेयार्थ दोष बतलाया जाता है—लक्षणावृत्ति की अधिकता से जहाँ सुन्दरता का विनाश होवे वहाँ नेयार्थ दोष होता है । अपनी कल्पना से अर्थ की खींचतान को नेयार्थ कहते हैं । तात्पर्य यह हुआ कि—प्रधान अर्थ में बाधा आने पर रूढि और प्रयोजनरूप निमित्त से प्रधान अर्थ से सम्बन्ध रखने वाले दूसरे अर्थ की प्रतीति को लक्षणा कहते हैं । जहाँ रूढि और प्रयोजनरूपनिमित्त के विना ही लाक्षणिक शब्द का प्रयोग हो वहाँ प्रथम नेयार्थ दोष होता है । लाक्षणिक शब्दों की अधिकता में नेयार्थ का दूसरा भेद है । 'हिमांशोः' श्लोक नेयार्थ का उदाहरण है—चन्द्रमा के किरण मुक्ताहार की स्वच्छता से तिरस्कार को प्राप्त चन्द्रमा के जागरण ( चौकसी ) में पहरा देने का कार्य करते हैं । अर्थात् कामिनी के मुक्ताहार की शोभा चन्द्रमा की किरणों से भी अधिक है । यहाँ हार, धिक्कार यामिक आदि पदों में रूढि प्रयोजन हेतु के विना लक्षणा की गई है अतः यहाँ नेयार्थ दोष है ॥ ११ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्लिष्टमर्थो यदीयोऽर्थश्रेणिनिःश्रेणिमृच्छति ।
हरिप्रियापितृवधूप्रवाहप्रतिमं वचः ॥ १२ ॥
अविमृष्टविधेयांशः समासपिहिते विधौ ।
विशन्ति विशिखप्रायाः कटाक्षाः कामिनां हृदि ॥ १३ ॥

---

क्लिष्टत्वमाह—क्लिष्टमिति । यदीयोऽर्थो वाच्योऽर्थः । अर्थश्रेण्या निःश्रेणिं परम्परामृच्छति गच्छति तत् क्लिष्टम् । अर्थपरम्परया स्वल्पतात्पर्यार्थकप्रत्यायकत्वं क्लिष्टत्वम् । यथोदाहरति—हरीति । हरेः प्रिया लक्ष्मीस्तस्याः पिता समुद्रस्तस्य वधूर्गङ्गा तस्याः प्रवाहप्रतिमं प्रवाहतुल्यं गङ्गाप्रवाहतुल्यं ते तव वचो वचनमस्ति । गङ्गाप्रवाहसदृशं ते वच इति वक्तव्ये हरिप्रियेति विस्तरश उक्तम् । अत्र समस्तपदगतो दोषः । अत्र विलम्बेनार्थप्रत्यायकत्वं दूषकताबीजम् ॥ १२ ॥

अविमृष्टविधेयांशत्वमाह—अविमृष्टेति । विधौ विधेये समासेनेतरपदसम्बद्धेन पिहित आच्छादिते सति । न विमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यस्मिन्सोऽविमृष्टविधेयांशो दोषः । इतरविशेषणत्वेन निर्दिष्टविधेयकत्वमविमृष्टविधेयांशत्वम् । उदाहरति—विशन्तीति । विशिखप्राया बाणतुल्याः कटावतिशयितावक्षिणी यत्र सः, कटमत्ति व्याप्नोतीति वा कटाक्षः ते कामिनां हृदि मानसे विशन्ति प्रविशन्ति । कटाक्षा बाणवत्प्रविशन्तीति भावः । अत्र कटाक्षमुद्दिश्य विशिखवत्प्रवेशो विधेयः । विशिखशब्दश्च कटाक्षविशेषणत्वेनोपात्तः प्रायःशब्देन समस्तश्च न प्रवेशनक्रियाया-

---

क्लिष्ट दोष यह है—जहाँ निरन्तर अर्थ की परम्परा होवै वहाँ क्लिष्ट दोष माना है। बहुत सी अर्थ-परम्परा से जहाँ बहुत कम तात्पर्य निकले वहाँ उक्त दोष का अवकाश है । 'हरिप्रिया०' पद इसका उदाहरण है—हरिप्रिया लक्ष्मी के पिता समुद्र की वधू गङ्गा के प्रवाह के सदृश तेरा वाक्य है । गङ्गा के समान निर्मल आपकी वाणी है । इस थोड़े से अर्थ के लिये 'हरिप्रिया०' इस बहुत बड़े पद के प्रयोग में क्लिष्ट दोष है । विलम्ब से अर्थ की प्रतीति होना ही दूषकता में निमित्त है ॥ १२ ॥

अविमृष्टविधेयांश का निरूपण किया जाता है—दूसरे पद के साथ समास करने से जहाँ प्रधान पद की प्रतीति स्फुट न हो वहाँ उक्त दोष होता है । यथा बाण के समान कान्ताओं के कटाक्ष कामी पुरुषों के हृदय में प्रविष्ट होते हैं । कटाक्ष बाण के समान प्रवेश करते हैं अर्थात् तीक्ष्ण हैं यह यहाँ कवि का अभिप्रेत

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।
अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरौ ॥ १४ ॥

मन्वेतुमर्हति । तस्मादत्राविमृष्टविधेयांशः । उद्देश्यविधेययोः पौर्वापर्यव्यतिक्रमेऽपि तदेव दूषणम् । 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमात् । विधेयानुपपत्तिर्दूषकताबीजम् ॥ १३ ॥

विरुद्धमतिकृत्त्वमाह—अपरेति । वर्णनाविषयार्थविरुद्धप्रतिपादकत्वं विरुद्धमतिकृत्त्वम् । यथा—अपराधीनशब्दः पराधीनाभावे वर्णितोऽप्यपरस्यान्यस्याधीनोऽपराधीन इति षष्ठ्या विरुद्धां प्रतिकूलां मतिं करोतीति दोषोऽयम् । संदिग्धे तु न विरुद्धार्थप्रतीतिरिति भेदः । विरुद्धार्थश्रवणेन श्रोतुर्वैमुख्यमिह दूषकताबीजम् ॥ अन्यसंगतत्वमाह—अन्येति । अभिमतार्थस्यान्यविशेषणत्वप्रत्यायकत्वमन्यसंगतत्वम् । उदाहरति—उत्तुङ्गेति । उत्तुङ्गावुन्नतौ हारशोभिनौ मुक्ताहारसुन्दरौ च तौ पयोधरौ स्तः । अत्रोत्तुङ्गपदार्थस्य पयोधरपदेन संबन्धोऽभिमतः स च समासे सति हारपदेन सम्बद्धः

अर्थ है । इस अर्थ की प्रतीति विशिखशब्द का प्रायस् शब्द के साथ समास करने से और उसी को कटाक्ष का विशेषण बना देने से स्पष्टरूप से नहीं हो रही है । अतः यहाँ अविमृष्टविधेयांश दोष है । उद्देश्य और विधेय के पौर्वापर्य न रहने पर भी यही दोष होता है । प्रधान वस्तु की प्रतीति न होना ही दूषकता में कारण है ॥ १३ ॥

विरुद्धमतिकृत् दोष का स्वरूप यह है—वर्णित विषय के विरुद्ध प्रतीति करानेवाला दोष विरुद्धमतिकृत् होता है । जैसे वह किसी के अधीन नहीं है अपि तु स्वाधीन ही है इस अर्थ को बतलाने के लिये कवि ने 'अपराधीन' अर्थात् पराधीन नहीं इस पद का प्रयोग किया । यहाँ पर 'अपराधीन' पद से अपर याने अन्य के अधीन ( परतन्त्र ) इस विरुद्ध अर्थ की प्रतीति होती है । अतः यहाँ उक्त दोष है । सन्दिग्धदूषण में विरोधी अर्थ की प्रतीति नहीं होती इसलिये यह दोष उससे भिन्न माना गया है । विरोधी अर्थ के श्रवण से श्रोता को वह रुचिकर नहीं होता यह दोष होने में कारण है । अन्यसङ्गत दोष यह है—अभिप्रेतपद का किसी अन्य के साथ सम्बन्धज्ञान हो वहाँ अन्यसङ्गत दोष होता है । 'उत्तुङ्गहारशोभिपयोधरौ' यह इसका उदाहरण है । उस कामिनी के हार से शोभित उन्नत पयोधर हैं । यहाँ उत्तुङ्गपद का पयोधर पद के साथ सम्बन्ध कवि को

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः ।
न मामङ्गद जानासि रावणं रणदारुणम् ॥ १५ ॥

प्रतीयते इत्यत्रान्यसंगतत्वम् । समाससंदेहेन बोधविलम्बो दूषकताबीजम् । क्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृदसंगतदोषाश्चत्वारः समासमात्रगाः । अन्यसंगतत्वं काव्यप्रकाशादिमतेऽविमृष्टविधेयांशान्तर्गतम् ॥ १४ ॥

एवं विंशतिपददोषानुक्त्वा वाक्यदोषेषु प्रतिकूलाक्षरत्वमाह—रसाद्येति। वर्णेऽक्षरे रसादीनां शृङ्गारादिरसानामनुचितेऽनर्हे सति प्रतिकूलानि विपरीतानि अक्षराणि वर्णा यस्मिंस्तत् प्रतिकूलाक्षरं दूषणं विदुर्जानन्ति। शृङ्गारादौ मधुरा प्रसादवती रचना, वीरादावोजस्विनी रचना ग्रन्थेषु प्रतिपादिता। सति च तद्वैपरीत्ये प्रतिकूलाक्षरदोष इति भावः। रसाननुगुणवर्णत्वं प्रतिकूलाक्षरत्वम् । उदाहरति—न मामिति । हे अङ्गद वालिपुत्र ! रणे संगरे दारुणं कर्कशं मां रावणं दशाननं त्वं न जानासि नावगच्छसि तत एव च त्वमौद्धत्यं प्रकटयसीति शेषः। अत्र प्रतिपाद्ये वीररसे वीररसोचिता परुषवर्ण-

अभिप्रेत है किन्तु समास में उत्तुङ्गपद और पयोधरपद के मध्य में हारशोभिपद रखने से उत्तुङ्ग पद का हार के साथ सम्बन्ध हो जाता है। अतः यह अन्यसङ्गत का उदाहरण है। समास करने से असली ज्ञान में सन्देह का होना ही दोषत्व के प्रति कारण है। इस दोष को काव्यप्रकाश में अविमृष्टविधेयांश के अन्तर्गत माना है। क्लिष्ट, अविमृष्टविधेयांश, विरुद्धमतिकृत् और असंगत ये चारो दोष केवल समास के कारण ही होते हैं ॥ १४ ॥

इस प्रकार बीस पद दोषों का निरूपण करके वाक्यदोषों में प्रथम प्रतिकूलाक्षर दोष बतलाया जाता है—शृङ्गारादि रसों के विरोधी अक्षरों के होनेपर प्रतिकूलाक्षरदोष होता है। शृङ्गाररस में कोमल, मधुर और प्रसादवाले अक्षर होने चाहिए और वीररस में ओजस्वी, विकट, संयुक्त और कर्कश अक्षर होना जरूरी है। यह ग्रन्थों में बतलाया गया है। इस कथन से विपरीत अक्षर होनेपर अर्थात् शृङ्गार में मधुर तथा कोमल अक्षर न हों और ओजस्वी अर्थात् कर्कश अक्षर हों तथा वीररस में विकट वर्ण न हों किन्तु मधुर, कोमल हो तो प्रतिकूलाक्षर दोष होता है। हे अङ्गद ! रण में भयंकर मुझ रावण को नहीं जानता है। इसी लिये तू इतनी उद्धतता प्रकट करता है। यहां वीररस के वर्णन में उस के अनुकूल ओजस्वी, विकट अक्षर नहीं हैं किन्तु शृङ्गारोचित कोमल अक्षरों का विन्यास किया गया है

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।
अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरौ ॥ १४ ॥

---

मन्वेतुमर्हति । तस्मादत्राविमृष्टविधेयांशः । उद्देश्यविधेययोः पौर्वापर्यव्यतिक्रमेऽपि तदेव दूषणम् । 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमात् । विधेयानुपपत्तिर्दूषकताबीजम् ॥ १३ ॥

विरुद्धमतिकृत्त्वमाह—अपरेति । वर्णनाविषयार्थविरुद्धप्रतिपादकत्वं विरुद्धमतिकृत्त्वम् । यथा—अपराधीनशब्दः पराधीनाभावे वर्णितोऽप्यपरस्यान्यस्याधीनोऽपराधीन इति षष्ठ्या विरुद्धां प्रतिकूलां मतिं करोतीति दोषोऽयम् । संदिग्धे तु न विरुद्धार्थप्रतीतिरिति भेदः । विरुद्धार्थश्रवणेन श्रोतुर्वैमुख्यमिह दूषकताबीजम् ॥ अन्यसंगतत्वमाह—अन्येति । अभिमतार्थस्यान्यविशेषणत्वप्रत्यायकत्वमन्यसंगतत्वम् । उदाहरति—उत्तुङ्गेति । उत्तुङ्गावुन्नतौ हारशोभिनौ मुक्ताहारसुन्दरौ च तौ पयोधरौ स्तः । अत्रोत्तुङ्गपदार्थस्य पयोधरपदेन संबन्धोऽभिमतः स च समासे सति हारपदेन सम्बद्धः

---

अर्थ है । इस अर्थ की प्रतीति विशिखशब्द का प्रायस् शब्द के साथ समास करने से और उसी को कटाक्ष का विशेषण बना देने से स्पष्टरूप से नहीं हो रही है । अतः यहाँ अविमृष्टविधेयांश दोष है । उद्देश्य और विधेय के पौर्वापर्य न रहने पर भी यही दोष होता है । प्रधान वस्तु की प्रतीति न होना ही दूषकता में कारण है ॥ १३ ॥

विरुद्धमतिकृत् दोष का स्वरूप यह है—वर्णित विषय के विरुद्ध प्रतीति करानेवाला दोष विरुद्धमतिकृत् होता है । जैसे वह किसी के अधीन नहीं है अपि तु स्वाधीन ही है इस अर्थ को बतलाने के लिये कवि ने 'अपराधीन' अर्थात् पराधीन नहीं इस पद का प्रयोग किया । यहाँ पर 'अपराधीन' पद से अपर याने अन्य के अधीन ( परतन्त्र ) इस विरुद्ध अर्थ की प्रतीति होती है । अतः यहाँ उक्त दोष है । सन्दिग्धदूषण में विरोधी अर्थ की प्रतीति नहीं होती इसलिये यह दोष उससे भिन्न माना गया है । विरोधी अर्थ के श्रवण से श्रोता को वह रुचिकर नहीं होता यह दोष होने में कारण है । अन्यसङ्गत दोष यह है—अभिप्रेतपद का किसी अन्य के साथ सम्बन्धज्ञान हो वहाँ अन्यसङ्गत दोष होता है । 'उत्तुङ्गहारशोभिपयोधरौ' यह इसका उदाहरण है । उस कामिनी के हार से शोभित उन्नत पयोधर हैं । यहाँ उत्तुङ्गपद का पयोधर पद के साथ सम्बन्ध कवि को

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः।
न मामङ्गद जानासि रावणं रणदारुणम् ॥ १५ ॥

प्रतीयते इत्यत्रान्यसंगतत्वम्। समाससंदेहेन बोधविलम्बो दूषकताबीजम्। क्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृदसंगतदोषाश्चत्वारः समासमात्रगाः। अन्यसंगतत्वं काव्यप्रकाशादिमतेऽविमृष्टविधेयांशान्तर्गतम् ॥ १४ ॥

एवं विंशतिपददोषानुक्त्वा वाक्यदोषेषु प्रतिकूलाक्षरत्वमाह—रसाद्येति। वर्णेऽक्षरे रसादीनां श्रृङ्गारादिरसानामनुचितेऽनर्हे सति प्रतिकूलानि विपरीतानि अक्षराणि वर्णा यस्मिंस्तत् प्रतिकूलाक्षरं दूषणं विदुर्जानन्ति। श्रृङ्गारादौ मधुरा प्रसादवती रचना, वीरादावोजस्विनी रचना ग्रन्थेषु प्रतिपादिता। सति च तद्वैपरीत्ये प्रतिकूलाक्षरदोष इति भावः। रसाननुगुणवर्णत्वं प्रतिकूलाक्षरत्वम्। उदाहरति—न मामिति। हे अङ्गद वालिपुत्र! रणे संगरे दारुणं कर्कशं मां रावणं दशाननं त्वं न जानासि नावगच्छसि तत एव च त्वमौद्धत्यं प्रकटयसीति शेषः। अत्र प्रतिपाद्ये वीररसे वीररसोचिता परुषवर्ण-

अभिप्रेत है किन्तु समास में उत्तुङ्गपद और पयोधरपद के मध्य में हारशोभिपद रखने से उत्तुङ्ग पद का हार के साथ सम्बन्ध हो जाता है। अतः यह अन्यसङ्गत का उदाहरण है। समास करने से असली ज्ञान में सन्देह का होना ही दोषत्व के प्रति कारण है। इस दोष को काव्यप्रकाश में अविमृष्टविधेयांश के अन्तर्गत माना है। क्लिष्ट, अविमृष्टविधेयांश, विरुद्धमतिकृत् और असंगत ये चारो दोष केवल समास के कारण ही होते हैं ॥ १४ ॥

इस प्रकार बीस पद दोषों का निरूपण करके वाक्यदोषों में प्रथम प्रतिकूलाक्षर दोष बतलाया जाता है—श्रृङ्गारादि रसों के विरोधी अक्षरों के होनेपर प्रतिकूलाक्षरदोष होता है। श्रृङ्गाररस में कोमल, मधुर और प्रसादवाले अक्षर होने चाहिए और वीररस में ओजस्वी, विकट, संयुक्त और कर्कश अक्षर होना जरूरी है। यह ग्रन्थों में बतलाया गया है। इस कथन से विपरीत अक्षर होनेपर अर्थात् श्रृङ्गारमें मधुर तथा कोमल अक्षर न हों और ओजस्वी अर्थात् कर्कश अक्षर हों तथा वीररस में विकट वर्ण न हों किन्तु मधुर, कोमल हो तो प्रतिकूलाक्षर दोष होता है। हे अङ्गद! रण में भयंकर मुझ रावण को नहीं जानता है। इसी लिये तू इतनी उद्धतता प्रकट करता है। यहां वीररस के वर्णन में उस के अनुकूल ओजस्वी, विकट अक्षर नहीं हैं किन्तु श्रृङ्गारोचित कोमल अक्षरों का विन्यास किया गया है

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मिन्नुपहतो लुप्तो विसर्ग इह तत्तथा।
कुसंधिः पटवागच्छ विसंधिर्नृपती इमौ ॥ १६ ॥

वती रचना नास्ति। अपि तु शृङ्गारोचिता कोमला रचनात्र स्वीकृतेति प्रतिकूलाक्षर-दोषः। प्रतिपाद्यरसाप्रतीतिर्दूषकताबीजम्। मधुरादिपञ्चरचना एव वृत्तयः। ताश्चाग्रे षष्ठे मयूखे २३-२६ श्लोकेषु द्रष्टव्याः ॥ १५ ॥

उपहतविसर्गत्वलुप्तविसर्गत्वे आह—यस्मिन्निति। यस्मिन्काव्ये। उपहत उपघातं प्राप्त उत्वं प्राप्त इति यावत्, लुप्तश्च लोपं प्राप्तश्च विसर्गो विसर्जनीयः 'अः' इत्यचः परो विन्दुद्वयरूपो वर्णो यस्मिंस्तत् पदम्। इह दोषकथने तथा तेनैव प्रकारेण तद्दूषणमुपहतविसर्गं लुप्तविसर्गं चाहुर्बुधाः। अयमाशयो यत्रानवरतमुपहतविसर्गता लुप्तविसर्गता च स्यात्तत्र तन्नामानावेव दोषौ भवत इति। इदमेवानयोरुदाहरणम्। 'उपहतो लुप्तो विसर्गः' इति वाक्यमुपहतविसर्गोदाहरणम्। 'हशि च' इति सूत्रेणोकारादेशात्। 'विसर्ग इह तत्तथा' इति वाक्यं च लुप्तविसर्गोदाहरणम्। 'भोभगोअघोअपूर्वस्य योऽशि' इति सूत्रेण रोः स्थाने यकारादेशे 'लोपः शाकल्यस्य' इत्यनेन च तल्लोपे ( यकारलोपे ) लुप्तविसर्गत्वात्। अत्राकारप्रश्लेषादिनाऽन्यार्थप्रत्यायकता दूषकताबीजम् ॥ कुसन्धित्वविसन्धित्वे आह—कुसन्धिरिति। सन्धिवैरूप्यं

अतः प्रतिकूलाक्षर दोष है। वर्णनीय रस का ज्ञान न होना ही दूषकता का कारण है। मधुरा, प्रौढा, परुषा, ललिता और भद्रा ये पांच प्रकार की रसानुकूल रचनाएँ प्रसिद्ध हैं ॥ १५ ॥

उपहतविसर्ग और लुप्तविसर्ग ये दोनों दोष बतलाये जाते हैं—जहां विसर्ग को उकार होके उसके स्थान में ओकार हो जावै और जहां विसर्ग का लोप हो जावै वहां क्रम से उपहतविसर्ग और लुप्तविसर्ग ये दो दोष होते हैं। अर्थात् विसर्ग को जहां ओकार हो जाता है वहां उपहतविसर्ग और जहां विसर्ग का लोप हो जावै वहां लुप्तविसर्ग दोष होता है। तात्पर्य यह है कि जहां विसर्गों को उकार अधिक हो अथवा उनका लोप अधिक हो वहां ये दोनों दोष होते हैं। 'उपहतो लुप्तो विसर्गः' यहां दोनों जगह विसर्गों को 'हशि च' इस सूत्र से रु को उकार आदेश हुआ है अतः यह उपहतविसर्ग का उदाहरण है। "विसर्ग इह तत्तथा' यहां विसर्ग का लोप हो गया इसलिये लुप्तविसर्ग दोष है। इन दोनों दोषों में क्रम से अकार तथा एकार आदि की मिलावट हो सकती है अतः ये ही दोष के निमित्त हैं ॥ कुसन्धि और विसन्धि ये दोनों दोष ये हैं—जहां सन्धिद्वारा अश्लीलता और क्लिष्टता

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कुसन्धित्वम् । वैरूप्यं चाश्लीलतया क्लिष्टत्वेन च भवति । यथा हे पटो हे दक्ष ! त्वमत्रागच्छेति पदे 'पटवागच्छ' इति सन्धावश्लीलत्वेन कुसन्धित्वम् । क्लिष्टत्वेन च यत्र कुसन्धित्वं तदुदाहरणं यथान्यत्र 'उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः । नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्' इत्यादि ज्ञेयम् । सन्ध्यभावो विसन्धित्वम् । स च द्वेधा शास्त्रीय ऐच्छिकश्च ।

'संहितैकपदे नित्या, नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षते'

इत्यादिनोक्तः शास्त्रीयो विसन्धिः । अयमपि प्रकृतिभावोत्पन्नः 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धहेतुकश्चेति द्विधा । 'नृपती इमौ' इत्यत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यनेन प्रगृह्यसंज्ञायां सत्यां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे विसन्धित्वम् । असिद्धहेतुकविसन्धेरुदाहरणं यथा–'तत उदित उदारहारहारि' इत्यादि । अत्र 'लोपः शाकल्यस्य' इत्यनेन यकारलोपे सत्यपि 'आद्गुणः' इत्यनेन गुणसम्भावनायां 'पूर्वत्रासिद्धम्' इत्यनेन गुणं प्रति यकारलोपस्यासिद्धत्वान्न गुणादेशः । तेनात्रासिद्धहेतुको विसन्धिः । ऐच्छिको विसन्धिश्च सकृदेव दोषः । शास्त्रीयश्चासकृत्करणे दोष इति ज्ञेयम् । बन्धनशैथिल्यमत्र दूषकताबीजम् ॥ १६ ॥

---

होवे वहां कुसन्धि दोष होता है । जैसे 'हे पटो आगच्छ' ( ओ चतुर ! यहां आवो ) इस वाक्य की 'पटवागच्छ' ऐसी संधि करने में अश्लीलता क्लिष्टता आ गई है अतः यहां कुसन्धि दोष है । जहां संधि न की जावे वहां विसन्धि दोष होता है । जहां अपनी इच्छा से सन्धि न की जावे वहां सर्वथा दोष है और जहां शास्त्र के आज्ञानुसार सन्धि का अभाव हो और वह अधिक स्थानोंपर हो वहां भी दोष माना जाता है । व्याकरणशास्त्र में दो प्रकार से सन्धि का निषेध लिखा है । एक तो प्रगृह्य की प्लुतसंज्ञा होने पर प्रकृतिभाव का होना, दूसरा 'पूर्वत्रासिद्धम्' इस सूत्र से 'तत उदित' इत्यादि स्थानों पर गुण आदि का निषेध । उक्त शास्त्रीय सन्धि के अभाव की अधिकता पर विसंधि दोष होता है । उदाहरण देखिए—

'नृपती इमौ' ( ये दोनों राजा हैं ) यहां पर 'इदूदेद्द्विवचनं प्रगृह्यम्' इस व्याकरण के सूत्र से प्रगृह्यसंज्ञा हुई और पीछे 'प्लुतप्रगृह्या अचि नित्यम्' इस सूत्र से सन्धि का निषेध हुआ, ऐसे विसन्धि के अधिक प्रयोग होने पर विसन्धि दोष होता है । ऐसे प्रयोगों से रचना में शिथिलता होती है और वह दूषकता का कारण है ॥ १६ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हतवृत्तमनुक्तोऽपि च्छन्दोदोषश्चकास्ति चेत् ।
विशाललोचने ! पश्याम्बरं तारातरङ्गितम् ॥ १७ ॥
न्यूनं त्वत्खड्गसंभूतयशःपुष्पं नभस्तटम् ।

हतवृत्तत्वं व्याचष्टे–हतवृत्तमिति । चेद् यदि । अनुक्तोऽकथितोऽपि । छन्दोदोषो वृत्तदोषः । चकास्ति भासते तदा हतं वृत्त छन्दो यस्मिंस्तद् हतवृत्तम् । छन्दोलक्षणानुसरणेऽप्यश्रव्यतयाऽश्राव्यच्छन्दोवत्त्वं हतवृत्तत्वम् । उदाहरणं व्याचष्टे–विशालेति । विशाले महती लोचने यस्याः सा तत्सम्बुद्धौ हे विशाललोचने ! ताराभिर्नक्षत्रैस्तरङ्गितं सञ्जाततरङ्गमम्बरमाकाशं पश्य विलोकय । अनुष्टुब्वृत्ते प्रतिपादमष्टाक्षराणि भवन्ति । अत्र च तृतीयपादाष्टमाक्षरस्य चतुर्थपादाद्यक्षरेण सन्धौ विहिते छन्दोलक्षणानुसरणेऽपि यतिभङ्गजन्या काचिदश्राव्यता जायत इति हतवृत्तत्वमत्र । रसाननुगुणेऽप्राप्तगुरुभावान्तलघुनि च वृत्तेऽपि हतवृत्तत्वं भवति । अत्राश्राव्यतया श्रोतुर्वैमुख्यं दूषकताबीजम् ॥ १७ ॥

न्यूनत्वमाह—न्यूनमिति । न्यूनयतीति न्यूनो दोषः । निपूर्वकात् 'ऊन परिहाणे' इति धातोः पचाद्यच्प्रत्ययः । अपेक्षितपदानुपादानत्वं न्यूनत्वम् । उदाहरणमाह-

हतवृत्त का स्वरूप यह है—जहां श्रवणमात्र से ही छन्द का दोष मालूम पड़े वहां हतवृत्त दोष होता है । छन्दोलक्षण के अनुकूल रचना होने पर भी जहां अश्राव्यता हो शृङ्गारादिरस के अनुकूल छन्द न हो तथा पादान्त में गुरु अक्षर न हों तो हतवृत्त दोष माना जाता है । जैसे—'विशाललोचने' उदाहरण में देखिए—हे विशाल नेत्र वाली प्रिये ! तुम तारागणोंसे युक्त आकाश को देखो, कैसा मनोहर दिखाई देता है । यहां प्रत्येक पाद में आ अक्षर होते हैं । कवि ने यहां तृतीयचरण के अष्टम अक्षर को चतुर्थ चरण के प्रथम अक्षर से मिला दिया । अतः यहां छन्दोलक्षण के ठीक २ मिल जाने पर भी यतिभङ्ग के कारण छन्द सुनने के समय विरसता की प्रतीति होती है इसलिये यहां हतवृत्त दोष है । तात्पर्य यह हुआ कि पाद के अन्त में यति ( विराम ) होनी चाहिए वह संधि हो जाने के कारण नहीं होती अतः उक्त दोष यहां है । 'जिह्वा जाने छन्दरस' इस युक्ति के अनुसार छन्द में अश्राव्यता होने के कारण ऐसे काव्य की उपादेयता न होना ही दोष में हेतु है ॥

न्यूनदोष बतलाया जाता है—अपेक्षित पद के न होने पर न्यून दोष होता है । उदाहरण देखें–तेरे खड्गसे उत्पन्न कीर्तिरूपी पुष्प से व्याप्त यह आकाश है ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अधिकं भवतः शत्रून् दशत्यसिलताफणी ॥ १८ ॥
कथितं पुनरुक्ता वाक् श्यामाब्जश्यामलोचना ।

त्वदिति । त्वत्खड्गेन तवासिना सम्भूतं समुत्पन्नं यश एव कीर्तिरेव पुष्पं प्रसूनं यस्मिंस्तत् तादृशं नभस्तटमाकाशमस्ति । आकाशेऽपि तव कीर्तिर्व्याप्तेति भावः । अत्र यशसि पुष्पारोपे कृते खड्गेऽपि लतात्वारोप आवश्यक आसीत् । स च न विहित इत्यत्र न्यूनत्वम् । अधिकत्वमाह– अधिकेति । अनपेक्षितपदोपादानत्वमधिकत्वम् । उदाहरणमाह–भवत इति । असिलता खड्गवल्ली । सैव फणी सर्पो भवतः शत्रून् वैरिणः दशति भक्षयति । तव खड्गेन शत्रवो हन्यन्त इति भावः । अत्र 'असिफणी' इत्येव वक्तव्यमुचितं पुनरसिशब्दे लतारोपोऽधिकः । अनपेक्षितत्वात् । ततोऽत्राधिकं दूषणम् । न्यूनाधिकपदप्रयोजनानुसंधानव्यग्रतयोद्देश्यज्ञाने विलम्बत्वं दूषकताबीजम् ।

कथितत्वमाह—कथितमिति । पुनरुक्ता पुनर्भाषिता वाक् वचनं कथितं दूषणं भवति । यत्र पौनरुक्त्यं भवेत्तत्र कथितदोषः । पुनरुक्तवाक्त्वं कथितत्वम् । उदाहरणमाह—श्यामेति । श्यामं च तद् अब्जं च श्यामाब्जं तद्वद् श्यामे नीले लोचने नयने

अर्थात् आकाश तक तेरी कीर्ति व्याप्त हो रही है । यहां यश में पुष्प का आरोप तो किया, किन्तु खड्ग में लता का आरोप नहीं किया यह न्यूनता है । जब खड्ग को लता बनावें तो उससे यशरूपी पुष्प का उत्पन्न होना सुन्दर मालूम पड़ सकता है; अन्यथा नहीं । अतः यहां न्यून दोष है ।

अधिक दोष यह है—जहां अनावश्यक पद की सत्ता हो वहां अधिक दोष माना जाता है । उदाहरण देखिए–खड्गलतारूपी सर्प आपके शत्रु राजाओं का भक्षण करता है । अर्थात् आपके खड्ग से शत्रु मारे गये । यहां खड्ग में सर्प का आरोप ही अच्छा था, किन्तु कवि ने खड्ग में पहले लता का आरोप किया पुनः उसी में सर्प का आरोप किया । खड्ग में लता के आरोप से कोई आवश्यक विशेष अर्थ की प्रतीति नहीं होती, अतः यहां खड्ग में लता का आरोप करना अधिक नामक दोष होता है । न्यूनाधिक पदों के कारण अर्थज्ञान में विलम्ब का होना ही दोष होने में कारण माना गया है ॥ १८ ॥

कथित दोष का निरूपण किया जाता है—जहां शब्द की पुनरुक्ति हो वहां कथित दोष होता है । जैसे 'श्यामाब्जश्यामलोचना' नील कमल के समान नीले नेत्रवाली स्त्री–यहां श्यामपद उसी अर्थ में दो बार आया है अतः यहां कथित दोष है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विकृतं दूरविकृतैरैयरुः कुञ्जराः पुरम् ॥ १९ ॥
पतत्प्रकर्षं हीनाऽनुप्रासादित्वे यथोत्तरम् ।
गम्भीरारम्भदम्भोलिपाणिरेष समागतः ॥ २० ॥

---

यस्याः सा। तादृशी कामिनीयमस्ति। अत्र श्यामपदं पुनरुक्तम्। पुनरुक्तपदेन श्रोतुर्वैरस्यापत्तिर्दूषकताबीजम्। विकृतत्वमाह—विकृतमिति। दूरविकृतैर्महतो धातुप्रत्ययादिविकाराद् विकृतित्वं भवति। अनेकप्रत्ययादिनिष्पन्नशब्दवत्त्वं विकृतत्वम्। यथा—कौ जायत इति कुञ्जः। पृषोदरादित्वात्सिद्धम्। कुञ्जो हनुरस्यास्तीति कुञ्जरः। ते कुञ्जरा हस्तिनः पुरं नगरम्। ऐयरुः प्रापुः। अत्र 'ऐयरुः' पदमनेकप्रत्ययादिनिष्पन्नमिति विकृतत्वम्। जौहोत्यादिकात् 'ऋ गतौ' इत्यस्माद्धातोर्लङि अडागमे, झौ, शपः श्लौ, द्वित्वे, उरदत्वे, हलादिशेषे, 'अर्तिपिपर्त्योश्चे'त्यभ्यासस्येत्वे, 'अभ्यासस्य' इत्यनेनेयङि जाते, 'सिजभ्यस्ते'ति जुसि 'जुसि चे'ति गुणे, 'आटश्चे'ति वृद्धौ च ऐयरुरिति रूपं निष्पद्यते। अत्र झटित्यर्थाबोधकत्वं दूषकताबीजम् ॥ १९ ॥

पतत्प्रकर्षत्वमाह—पतदिति। यथोत्तरमुत्तरत्रोत्तरत्र। अत्र वीप्सायामव्ययीभावः। हीना रहिता अनुप्रासादयोऽलङ्कारा यस्मिंस्तत् तस्य भावस्तस्मिन्। तथोक्ते सति पतन् ह्रसन् प्रकर्षो रचनातिशयो यस्मिंस्तद् वाक्यं पतत्प्रकर्षम्। प्रारम्भे स्वीकृतस्यानुप्रासस्य यमकस्य वाऽन्ते त्यागः पतत्प्रकर्षत्वम्। प्रक्रान्तानुप्रासादित्यागत्वं पतत्प्रकर्षत्वम्। उदाहरति—गम्भीरेति। दम्भोलिर्वज्रं पाणौ यस्य स दम्भोलिपाणिः

---

पुनरुक्त पद के होने से उसके सुनने में उपेक्षा होना ही दूषकता में निमित्त है। विकृतदोष यह है—व्याकरण के अनेक सूत्रों द्वारा अनेक प्रकृति-प्रत्यय से बने हुए शब्द के प्रयोग में विकृत दोष होता है। 'कुञ्जराः पुरमैयरुः' हाथी पुर में पहुंच गये 'ऐयरुः' पद में विकृत दोष है। यह जुहोत्यादि गण के 'ऋ गतौ' धातु के लङ् ( अनद्यतनभूत ) का प्रयोग है। क्रम से लङ्, अडागम, झि, शप्, श्लु, द्वित्व, उरत्, अ अभ्यासको इत्त्व, इयङ्, जुस्, गुण और वृद्धि आदि अनेक सूत्र तथा प्रत्ययों द्वारा ऋधातु का ऐयरुः रूप बना है। अतः यहां विकृत दोष है। अर्थज्ञान में विलम्ब होना दूषकता में कारण है ॥ १९ ॥

पतत्प्रकर्ष का स्वरूप देखिए—पूर्व भाग में किए हुए अनुप्रास वा यमक का उत्तर भाग में अभाव हो वहां पतत्प्रकर्ष दोष होता है। सारांश यह हुआ कि किसी अंश के आरम्भ से अन्त तक एक साथ ही अनुप्रासादि की रचना होनी चाहिए। 'गम्भीरेति' यह श्लोकार्ध इसका उदाहरण है। ये गम्भीर उद्योगवाले इन्द्र आ गये।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् ।
नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः ॥ २१ ॥
अर्धान्तरपदापेक्षिक्रीडानृत्येषु सस्मितम् ।

---

गम्भीर आरम्भ उपक्रमो यस्य तादृशश्चासौ दम्भोलिपाणिश्च । सैष इन्द्रः समागतः समायातः । अत्रोपक्रान्तस्य भकारानुप्रासस्य 'पाणिरेष समागतः' इत्यस्मिन्स्थले त्याग इति पतत्प्रकर्षता । कवेरशक्त्युन्नयनेन श्रोतुर्वैरस्यं दूषकताबीजम् ॥ २० ॥

समाप्तपुनरात्तत्वमाह—समाप्तेति । समाप्तं जनितविवक्षितान्वयबोधं च तत् पुनरात्तं तदन्वयितया पुनरुपात्तं चेति समाप्तपुनरात्तम् । क्रियाकारकान्वयसमाप्तावपि पुनर्विशेषानाधायकतदन्वयिपदाभिधानत्वं समाप्तपुनरात्तत्वम् । उदाहरति—एष इति पीयूषभाजनममृतस्थानम् । नेत्रानन्दी नयनाह्लादकः । अम्बुधिबान्धवः सागरस्नेही । एष तुषारांशुश्चन्द्रः । उदेति उदयते । अत्रोदेतीति क्रियान्तेन वाक्यार्थे समाप्तेऽपि पुनस्तदन्वय्यम्बुधिबान्धवपदमुपात्तम् । एतच्च पदं न काञ्चन विशेषतां प्रकटयतीति समाप्तपुनरात्तत्वं दूषणम् । यदीदमम्बुधिबान्धवपदं विशेषार्थप्रबोधकं स्यात्तदा न दोषः । निराकाङ्क्षत्वमेव दूषकताबीजम् । अनित्यदोषोऽयम् । वाक्यान्तरारम्भे तदभावात् ॥ २१ ॥

अर्धान्तरपदापेक्षित्वमाह—अर्धेति । अन्यदर्धमर्धान्तरम्, तस्मिन् यत् पदं तदपेक्षत इत्यर्धान्तरपदापेक्षि प्रथमाद्यर्धम् । यत्र श्लोकपूर्वभागादि स्वोत्तरभागाद्यन्त-

---

इस श्लोकार्ध में भकार का अनुप्रास प्रथम पाद में किया गया किन्तु द्वितीय चरण में उस अनुप्रास को नहीं किया । अतः यहां उक्तदोष है ॥ २० ॥

समाप्तपुनरात्त दोष देखिए—वाक्य के समाप्त होने के बाद पुनः उसी वाक्य से सम्बन्ध रखने वाले अनावश्यक पद का प्रयोग हो वहां समाप्तपुनरात्त दोष होता है । 'एष' इत्यादि श्लोक इसका उदाहरण है । अमृत का स्थान, नेत्रों को आनन्द देनेवाला, समुद्र का बन्धु यह चन्द्रमा उदित होता है । यहां इस संस्कृत श्लोक मे उदेति क्रिया तक वाक्य समाप्त हो जाता है । पुनः कवि ने विशेष बात को नहीं प्रकट करने वाले 'अम्बुधिबान्धवः' पद का प्रयोग किया है । अतः समाप्तपुनरात्त दोष है । यदि दूसरे वाक्य का ही प्रारम्भ किया जावै तो यह दोष नहीं होता ॥ २१ ॥

अर्धान्तरपदापेक्षी दोष का यह लक्षण है । जहां श्लोक के पूर्वार्ध का अपने उत्तरार्ध के पदों से तथा उत्तरार्ध का अपने पूर्वार्ध के पदों से सम्बन्ध हो वहां अर्धा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मोघारम्भं स्तुमः शम्भुमर्धरम्भोरुविग्रहम् ॥ २२ ॥
अभवन्मतयोगः स्यान्न चेदभिमतोऽन्वयः ।

गतपदमपेक्षते तदर्धान्तरपदापेक्षित्वं दोषः। द्वितीयान्याद्यर्धपतितपदसाकाङ्क्षप्रथमान्याद्यर्धत्वमर्धान्तरपदापेक्षित्वम् । अथोदाहरति—अर्धेति । अत्र सम्पूर्णपद्यमुदाहरणम्, अर्धान्तरपदापेक्षीति पदं तु लक्षणमुक्तं तन्त्रेण । अर्धो रम्भोर्वाः पार्वत्या विग्रहः शरीरं यस्य स तम् । अर्धनारीश्वरमिति यावत् । अन्यदर्धमर्धान्तरं तस्य पार्वत्यर्धभागस्य यत्पदं चरणमपेक्षन्त इत्यर्धान्तरपदापेक्षीणि यानि क्रीडायाः केल्या नृत्यानि नर्तनानि तेषु । मोघो निष्फल आरम्भः समारम्भो यस्य स तम् । नृत्ये शिवचरणोत्थाने मानादिना पार्वतीचरणानुत्थानात् । सस्मितं मन्दहाससहितम् । शम्भुं शिवं स्तुमः । अत्र पूर्वभागगतमर्धान्तरपदेतिपदमुत्तरार्धपतितार्धरम्भोरुविग्रहेतिपदसाकाङ्क्षम् । तथा पूर्वार्धगतं सस्मितपदमुत्तरार्धगतमोघारम्भपदसाकाङ्क्षमित्यत्रार्धान्तरपदापेक्षित्वम् । झटित्यन्वयानुपपत्तिर्दूषकताबीजम् ॥ २२ ॥

अभवन्मतयोगत्वमाह—अभवदिति । चेद् यदि । अभिमतो विवक्षितोऽन्वयः पदसम्बन्धो न स्यात्तदाऽभवन्मतयोगो दोषः । न भवतीत्यभवन् अविद्यमानो मत इष्टो योगः सम्बन्धो यस्मिन् सोऽभवन्मतयोगो दोषः। अभिमततात्पर्यविषयान्वयनिर्वाहासम्भवकत्वमभवन्मतयोगत्वम् । अत्रान्वयस्यैवासम्भवः अविमृष्टविधेयांशे सत्यप्यन्वये उद्देश्यतानवगम इत्यनयोर्भेदः । अभवन्मतयोगत्वं च क्वचिद्विभक्तिभेदनिबन्धनं क्वचिन्न्यूनतादिनिबन्धनं क्वचिदाकाङ्क्षाविरहनिबन्धनं

न्तरपदापेक्षी दोष होता है । 'अर्धान्तर' का यह पूरा श्लोक ही उदाहरण है—मन्द मुसकराहट करते हुए अर्धनारीश्वर भगवान् शङ्कर की हम स्तुति करते हैं कि जिनका नृत्य पार्वती की सहायता के विना निष्फल हो रहा है । भाव यह हुआ कि अर्धनारीश्वर शङ्कर के नृत्य करने पर मानवती पार्वती नृत्य में योग नहीं देतीं अतः उनका नृत्य निष्फल हो जाता है । यहां संस्कृत श्लोक के पूर्व भाग का 'अर्धान्तरपदा०' इत्यादि पद उत्तरार्धगत अर्धरम्भोरुविग्रह पद के विना तथा पूर्वभाग का सस्मित पद उत्तर भाग के मोघारम्भपद के विना असम्बद्ध-सा मालुम पड़ता है । अतः यहां दोष है । अर्थ के बोध में विलम्ब का होना ही दूषकता में निमित्त है ॥ २२ ॥

अभवन्मतयोग दोष का स्वरूप बतलाया जाता है—जहां पदों का सम्बन्ध ( अन्वय ) कवि के अभिप्रेत न हो वहां अभवन्मतयोग दोष होता है । इस दोष में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येन बद्धोऽम्बुधिर्यस्य रामस्यानुचरा वयम् ॥ २३ ॥
द्विषां संपदमाच्छिद्य यः शत्रून् समपूरयत् ।

क्वचिद्वाच्यव्यङ्ग्ययोर्विवक्षितयोगाभावनिबन्धनं क्वचित्समासच्छन्नतया मतयोगाभावनिबन्धनं क्वचिद् व्युत्पत्तिविरोधनिबन्धनं च भवति । तत्राद्यमुदाहरति—येनेति । येन रामेण अम्बुधिः सागरः बद्धः सेतुबन्धने नियमितः। यस्य रामस्य च वयमनुचराः सेवकाः स्मः । अत्र येनेति पदस्य रामस्येत्यनेन पदेन सहान्वयोऽभिमतः स च भिन्नविभक्तिकत्वाद्वाक्यभेदाच्च नोपपन्नः । अयं भावः—विशेषणानां प्रधानान्वयापेक्षित्वमिति न्यायेनोद्देश्यतयाऽप्रधानानां यदर्थानां परस्परमन्वयो न घटत इत्यत्र दोषता । यदि च 'स एष रावणं हन्तुमुद्यतः' इत्यत्र वाक्यार्थपूर्तिः स्यात्तदा न दोषता । प्रधाने ( विशेष्ये ) सर्वविशेषणान्वयात् । अर्थान्तरबोधकत्वं दूषकताबीजम् ॥ २३ ॥

अस्थानस्थसमासत्वमाह—द्विषामिति । अस्थानेऽनर्हस्थाने तिष्ठतीत्यस्थानस्थः समासो यस्मिन्सोऽस्थानस्थसमासस्तस्य भावस्तत्त्वम् । इदम् विद्वज्जनानां विदुषां मनोरमं प्रियं नास्ति । अस्थानस्थसमासो दोष इति भावः । अनभिमतस्थानस्थितसमासत्वमिति यावत् । उदाहरणमाह—यो राजा द्विषां शत्रूणां सम्पदमाच्छिद्य

---

अन्वय नहीं होता और अविमृष्टविधेयांश में अन्वय होने पर भी उद्देश्य की प्रतीति नहीं होती यह इन दोनों दोषों में भेद है। 'येन बद्धः' यह श्लोकार्ध उक्त दोष का उदाहरण है—'येन अम्बुधिर्बद्धः' जिसने सागर में सेतुबन्धन किया तथा 'यस्य रामस्य वयमनुचराः' जिस रामचन्द्र के हम सेवक हैं। यहाँ ये दो वाक्य हैं। इन में पहिले वाक्य में स्थित 'येन' पद का दूसरे वाक्य के 'रामस्य' पद के साथ अन्वय होना चाहिए। किन्तु इन पदों का अन्वय विभक्ति के भिन्न होने के कारण नहीं हो सकता। क्योंकि 'विशेषणों का विशेष्य के साथ सम्बन्ध होना चाहिए' इस नियम के अनुसार यहां विशेषणभूत यत् शब्दों का विभक्तिभेद के कारण विशेष्यभूत राम शब्द के साथ सम्बन्ध नहीं होता अतः यहां उक्त दोष है। उक्त वाक्यों के बाद यदि 'एष स रावणं हन्तुमुद्यतः' वह यह राम रावण को मारने के लिये तैयार है यह वाक्य होता तो वाक्यपूर्ति होती और दोष नहीं होता। यहां अन्य अर्थ की प्रतीति होना ही दोष होने में निमित्त है॥

अस्थानस्थसमास दोष लिखा जाता है—अनुचित स्थान में जहां समास किया जावे वहां अस्थानस्थसमास दोष होता है। 'द्विषाम्' इत्यादि श्लोक इसका उदाहरण है। जिस राजा ने शत्रुओं की सम्पत्ति को लेकर शत्रुओं को ही दे दिया

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्थानस्थसमासं न विद्वज्जनमनोरमम् ॥ २४ ॥
मिथः पृथग्वाक्यपदैः संकीर्णं यत्तदेव तत् ।

बलाद् गृहीत्वा शत्रून् वैरिणः समपूरयदभरत् । तद् विद्वज्जनमनोरमं सुधीजनरुचिक नास्ति। शत्रुभ्यः सम्पदमाहृत्य शत्रुभ्यः एवाददादिति विद्वन्मनोरमं नास्तीति भावः अत्र शत्रूणां सम्पत्तिहरणप्रसङ्गे शौर्यव्यञ्जको वीररसानुगुणो दीर्घसमास उचितोऽपि न कृतः तथा वीरानभिव्यञ्जककव्युक्तौ दीर्घसमासः कृत इत्यस्थानस्थसमासता। अस्थानस्थसमासो द्विविधः–अस्थाने दीर्घसमासत्यागो दीर्घसमासकरणं चेति। इद लक्षणमस्थानस्थपदस्यापि संग्राहकम् । उदाहरणं त्विदमेव। यथा न विद्वज्जनेत्या नकारस्थितिरन्ते समुचिता सा च न कृतेति दोषः। नकारस्यादावुपादाने सति विद्वदितिपदेनाविद्वदित्यर्थान्तरबोधो जायतेऽनभिमत इत्यस्थानस्थपदताऽप्यत्र बोध्य न च प्रतिकूलाक्षरेऽन्तर्भाव इति वाच्यम्, तत्र वर्णानां रसाननुगुणत्वमत्र तु वर्णसमू हरूपसमासस्येति भेदात्। न च पतत्प्रकर्षेऽन्तर्भाव इति वाच्यम्। तत्र प्रथमोपात्तस प्रकर्षस्याग्रे त्यागोऽत्र तु तद्वैपरीत्यमिति ज्ञेयम्। सहृदयवैमुख्यं दूषकताबीजम् ॥२४॥

संकीर्णत्वमाह–मिथ इति। वाक्यानि च पदानि चेति वाक्यपदानि, पृथग् वाक्य

यह बात विद्वानों को रुचिकर नहीं होती। यहां शत्रुओं से जय प्राप्त करने के वर्णन में वीररस के अनुकूल दीर्घ समास करना उचित था सो यहां नहीं किया तथा कवि की उक्ति में वीररस के न होने पर भी वीररस का प्रकाशक लम्बा समास किया। अतः उक्त दोष को यहां अवकाश मिलता है। उचित स्थान में दीर्घ समास न करना और अनुचित स्थान में दीर्घ समास करना ये दो भेद अस्थानस्थसमास के हैं। यहां अस्थानस्थसमास दोष से अस्थानस्थपद का भी ग्रहण होता है। 'न विद्वज्जनमनोरमम्' इसका उदाहरण है। क्यों कि यहां निषेधवाचक नकार अन्त में होना चाहिए। प्रारम्भ में नकार के रख देने से यहां नकार के साथ भी समास मालुम पड़ जाता है और उससे मूर्ख (न विद्वान) की प्रतीति होती है अतः यहां अस्थानस्थपद दोष जानना चाहिए। प्रतिकूलाक्षर में रस के विरोधी अक्षर होते हैं। यहां वर्णसमूहरूप समास रस का विरोधी है। प्रारम्भ में गृहीत अनुप्रासादिक के त्याग में पतत्प्रकर्ष होता है और यहां प्रारम्भ में भी उक्त रचना का त्याग किया जा सकता है। अतः यह दोष उक्त दोनों दोषों से भिन्न है। उक्त दोषवाले काव्य से सहृदय उदासीन रहते हैं यह दोष होने में बीज है ॥२४॥

संकीर्णदोष का स्वरूप देखिए—जहां पद और वाक्य किसी दूसरे वाक्य में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते ॥ २५ ॥
ब्रह्माण्डं त्वद्यशःपूरगर्भितं भूमिभूषण ।
आकर्णय पयःपूर्णसुवर्णकलशायते ॥ २६ ॥

---

पदानि पृथग्वाक्यपदानि तैः । अत्र पृथक्त्वमुभयविशेषणम् । यदि पदमन्यवाक्ये समुपात्तं तदा पदपृथक्त्वम् । तथा चान्यवाक्यं वाक्यान्तरे समुपात्तं तदा स वाक्यपृथक्त्वम् । एवं च पृथग्वाक्यपदैर्मिथो यत्सङ्कीर्णत्वं व्याप्तत्वं तदा तदेव सङ्कीर्णमेव दूषणं भवति । इदं च दूषणं द्विविधम्—यदा वाक्यान्तरस्य पदानि वाक्यान्तरेऽनुप्रविशन्ति तदैकम्, यदा वाक्यान्तरस्य वाक्यान्तरे प्रवेशस्तदा द्वितीयम् । अन्यवाक्यपदान्यवाक्यप्रवेशकत्वं सङ्कीर्णत्वम् । तत्र पदसङ्कीर्णोदाहरणमाह—वक्त्रेणेति । रात्रिर्निशा चन्द्रेण चन्द्रमसा भ्राजते शोभते । कान्ता रमणी च वक्त्रेण मुखेन राजते द्योतते । अत्र राज्यन्वितचन्द्रस्य कान्तार्थप्रतिपादके वाक्य उपादानम्, कान्तान्वितस्य वक्त्रपदस्य राज्यर्थबोधके वाक्ये चोपादानमिति पदसङ्कीर्णत्वम् ॥ २५ ॥

वाक्यसङ्कीर्णोदाहरणमाह—ब्रह्माण्डमिति । भूमेर्भूषणं भूमिभूषणम् तत्सम्बुद्धौ हे भूमिभूषण राजन् ! त्वद्यशःपूरैस्तव कीर्तिनिवहैर्गर्भितं व्याप्तं ब्रह्माण्डं त्रैलोक्यं पयसा नीरेण पूर्णो भृतो यः सुवर्णस्य हेम्नः कलशो घटः स इवाचरति । जलपूर्णसुवर्णकलशवत्तव कीर्त्या व्याप्तं ब्रह्माण्डं शोभते । तव कीर्तिः सर्वत्र व्याप्तेति भावः । इतित्वमाकर्णय श्रृणु । अत्र 'त्वमाकर्णय' इति वाक्यं राज्ञो यशोवर्णनार्थके ब्रह्माण्डमि-

---

सम्मिलित हो जावे वहां सङ्कीर्ण दोष है । जहां कोई पद किसी दूसरे वाक्य में प्रविष्ट हो वहां पदसङ्कीर्ण, जहां एक वाक्य किसी दूसरे वाक्य में संनिविष्ट हो वहां वाक्यसङ्कीर्ण दोष होता है । पदसङ्कीर्ण का यह उदाहरण है—जैसे रात्रि चन्द्रमा से शोभित होती है उसी प्रकार कामिनी अपने सुन्दर मुख से शोभित होती है । यहां रात्रिपद से सम्बद्ध चन्द्रमा पद का दूसरे ( कान्ता के ) वाक्य में और कान्तापद से सम्बन्ध रखनेवाले मुखपद का दूसरे ( चन्द्रमा के ) वाक्य में संनिवेश किया है । अतः यहां पदसङ्कीर्ण दोष है ॥ २५ ॥

'ब्रह्माण्डम्' इत्यादि श्लोक वाक्यसङ्कीर्ण का उदाहरण है—तेरी कीर्ति से व्याप्त यह ब्रह्माण्ड जल ( या दूध ) से पूर्ण सुवर्णकलश के समान मालुम पड़ता है । यह तुम सुनो । अर्थात् आपकी कीर्ति ब्रह्माण्ड में व्याप्त हो रही है । इसके मूल श्लोक में 'त्वमाकर्णय' तुम सुनो यह वाक्य राजा के यश वर्णन करनेवाले

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

६५ भग्नप्रक्रममारब्धशब्दनिर्वाहहीनता ।
अक्रमः कृष्ण पूज्यन्ते त्वामनाराध्य देवताः ॥ २७ ॥

स्यादिवाक्येऽनुप्रविष्टमिति वाक्यसङ्कीर्णतात्र। प्रतीतिविलम्बो दूषकताबीजम् । न चास्य क्लिष्टत्वदोषेऽन्तर्भाव इति वाच्यम् । क्लिष्टत्वं ह्येकवाक्ये सत्येव भवति । इदं त्वनेकवाक्यत्व एव भवतीति भेदलाभात् ॥ २६ ॥

भग्नप्रक्रमत्वमाह—भग्नेति । यत्रारब्ध उद्देश्यस्थाने समुपात्तो यः शब्दस्तस्य निर्वाहे प्रतिनिर्देश्यस्थाने तच्छब्दस्यैवोपादाने हीनता न्यूनता उद्देश्यस्थानस्थित-शब्दातिरिक्ततेति यावत्; स्यात् तत्र भग्नप्रक्रमं दूषणं भवति । भग्नो विनष्टः प्रक्रमः प्रस्तावो यस्मिंस्तद् भग्नप्रक्रमं दूषणम् । आरब्धधात्वाद्यनुपादानत्वं भग्नप्रक्रमत्वम् । अयमाशयः-यत्र वाक्ये एकस्मिन् विधेये उद्देश्यतया यो धात्वादिः समुपात्तः पुन-स्तत्रैव विधेयान्तरे तदनुपादानं भग्नप्रक्रमम् । तदेतत् प्रकृति-प्रत्यय-सर्वनाम-पर्याय-उपसर्ग-वचन-कारक-क्रमभग्नादि-विषयतयाष्टधा भवति। तत्र प्रकृतिभग्नप्रक्रमत्व-मुदाहरति-अक्रमेति हे कृष्ण ! त्वां भवन्तं कृष्णम् । अनाराध्यासम्पूज्य देवता अन्ये देवाः । पूज्यन्ते सेव्यन्त इत्येषोऽक्रमः अनौचित्यमिति भावः । प्रथमं तव

वाक्य के अन्तर्गत है । अतः यहां वाक्यसङ्कीर्णता है। अर्थज्ञान में विलम्ब का होना ही इस दोष में निमित्त है । क्लिष्ट दोष तो एक वाक्य में होता है और यह दोष अनेक वाक्य होने पर ही होता है यह इन दोनों दोषों में भेद जानना चाहिए ॥ २६ ॥

भग्नप्रक्रम दोष का प्रतिपादन किया जाता है—प्रारम्भ (उद्देश्य) में जिस क्रम से जिस शब्द का प्रयोग किया गया हो, अन्त में (पुनर्निर्देश) भी उसी (पूर्व प्रयुक्त) शब्द को प्रयोग में लाना चाहिये । जहां अन्त में उसी शब्द का प्रयोग न किया हो वहां भग्नप्रक्रम दोष होता है, पहिले से चले हुए क्रम के विनाश को भग्नप्रक्रम कहते हैं । सारांश यह हुआ कि वाक्य में एक बात बतलाने के लिये जिस धातु-प्रत्यय आदि का प्रयोग किया गया है उसी बात के पुनर्निर्देश में यदि उसी पूर्वप्रयुक्त धातु-प्रत्यय आदि का प्रयोग न किया जावे तो भग्नप्रक्रम दोष होता है । प्रकृति, प्रत्यय, सर्वनाम, पर्याय, उपसर्ग, वचन, कारक और क्रम आदि के भेद से भग्नप्रक्रम के आठ भेद होते हैं । यहां ग्रन्थकार ने 'अक्रमः' यह श्लोकार्ध प्रकृति (धातु) के भेद से भग्नप्रक्रम का उदाहरण दिया है-हे कृष्ण! आपकी पूजा के विना ही अन्य देवताओं की पूजा की जाती है । यह उचित है । क्योंकि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पूजोचिता तदनन्तरं च तेषामित्यौचित्यं तथा च न क्रियत इत्ययोग्यम् । अत्रोद्देश्यस्थाने राधधातुः समुपात्तः पुनश्च तस्यैव प्रतिनिर्देश्यस्थाने राधधातुमपहाय पूजधातोरुपादानं विहितं कविनेति धातुभेदेन भग्नप्रक्रमत्वमत्र दूषणम् । यदि 'त्वामनाराध्य देवताः' इत्यस्य स्थाने 'त्वामसम्पूज्य देवताः' इति पाठः स्यात्तदा न दोषः । न चास्य कथितपददोषेऽन्तर्भावः । तत्रोद्देश्यप्रतिनिर्देश्यत्वाभावात् । अत्र तु वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यभावत्वं वर्त्तते । उद्देश्यः प्राक्प्रत्यायित एव प्रतिनिर्देश्यः पुनः प्रत्याय्यो यः स इति तद्विग्रहः । उद्देश्यप्रतिनिर्देश्यभावश्च त्रिधा भवति यथा-एकविधेयार्थमुद्दिष्टस्य विधेयान्तरे प्रतिनिर्देश इत्येकः । एकोद्देश्येन विहितस्योद्देश्यान्तरे विधेयतया प्रतिनिर्देश इत्यपरः । एकोद्देश्येन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इति तृतीयो भेदः । उदाहरणानि त्वाकरग्रन्थेषु द्रष्टव्यानि । प्रकृत्यादीनां भिन्नतया विलम्बेनार्थप्रत्यायकत्वं दूषकताबीजम् । अक्रमः कृष्णेत्यत्र तन्त्रेणाक्रमदोषोऽपि प्रतिपादितः । अनुचितक्रमत्वमक्रमत्वम् । अनौचित्यं च लोकशास्त्रादिविरु-

---

पहिले आपकी पूजा होना और पीछे अन्य देवताओं की पूजा होना उचित होता है । यहाँ पूजा के वर्णन में पहिले तो 'त्वामनाराध्य' इस जगह पूजार्थक राध धातुका प्रयोग किया और फिर उसी पूजा के वर्णन में पूज धातुका प्रयोग किया अतः यहाँ भग्नप्रक्रम दोष है । यदि 'त्वामनाराध्य' के स्थानपर 'त्वामसंपूज्य' यह पाठ होता तो दोष नहीं होता । कथितपददोष में उद्देश्य और प्रतिनिर्देश्य भाव नहीं होता और यहाँ वचन और प्रतिवचन में उद्देश्य तथा प्रतिनिर्देश्यभाव रहता है अतः ये दोनों दोष भिन्न २ हैं । पहिले जिसकी प्रतीति करादी गई है उसी को पुनः बतलानेको उद्देश्य-प्रतिनिर्देश्य भाव कहते हैं । यह तीन प्रकारका होता है। जहाँ किसी विधेयमें उद्देश्य से अन्वित पदार्थ को दूसरे विधेय में उद्देश्यसे अन्वित करनेके लिये पुनः ग्रहण करै वह प्रथम भेद है । उद्देश्यसे विहित किसी एक पदार्थ का पुनः दूसरे उद्देश्य के लिये विधान किया जावै वह दूसरा भेद है और जहाँ किसी एक के उद्देश्यसे विहित पदार्थ किसी दूसरे विधेयका उद्देश्य हो वहां तीसरा भेद होता है । धातु-प्रत्यय आदि के भिन्न होने के कारण विलम्ब से अर्थ की प्रतीति होना ही दोष होने में हेतु माना है । 'अक्रमः कृष्ण ?' इस उदाहरण के श्लोकमें अक्रमदोषकी भी सूचना दी गई है । जहां लोक वा शास्त्र के विरुद्ध क्रम से वर्णन किया जावै वहां अक्रम दोष होता है । पहिले कृष्ण की पूजा पुनः अन्य


CC-O. Vasishtha Tripathi Collection. Digitized by eGangotri

अमतार्थान्तरं मुख्येऽमुख्येनार्थे विरोधकृत् ।
त्यक्तहारमुरः कृत्वा शोकेनालिङ्गिताऽङ्गना ॥ २८ ॥

द्धोपादानेन भवति । पूर्वं कृष्णपूजा ततो देवपूजेति शास्त्रसिद्धम् । अत्र तु तद्विरुद्धं पूर्वं देवपूजा ततः कृष्णपूजा वर्णितेत्यक्रमत्वम् । अथवा क्रमदोषोऽस्थानस्थपददोषेऽन्तर्गत इति ज्ञेयम् । प्रकाशोक्तं प्रसिद्धिहतमप्रयुक्तान्तर्गतम् ॥ २७ ॥

अमतार्थान्तरत्वं व्याचष्टे—अमतेति । मुख्ये प्रधाने प्रकृते वा अर्थे । अमुख्येन प्रकृतविरुद्धेनाप्रकृतेनार्थेन । यद् विरोधं करोतीति विरोधकृद् विरुद्धं वाक्यं तदमतार्थान्तरं दूषणम् । अमतं प्रकृतविरुद्धमर्थान्तरं परार्थो यत्र तद्वाक्यममतार्थान्तरं भवति । प्रकृतविरुद्धरसाद्यभिव्यञ्जकपदसमभिहारत्वममतार्थान्तरत्वम् । उदाहरणं व्याचष्टे—त्यक्तेति । त्यक्तहारमपसारितमुक्ताहारमुरो वक्षःस्थलं कृत्वा विधाय । अङ्गना कामिनी । शोकेन दुःखेन आलिङ्गिताऽऽश्लिष्टा । शोकव्याकुला बभूवेति भावः । अत्र प्रकृतकरुणरसविरोधी श्रृङ्गाररसो व्यज्यतेऽशोकेनेति पदच्छेदेन । तथा हि-अशोकेन शोकरहितेन । नायकेन त्यक्तहारमपसारितहारमुरो वक्षःस्थलं कृत्वा विधाय । अङ्गना कामिनी । आलिङ्गिताऽऽश्लिष्टा । सुरतसमये भूषणानि व्यवधानमापादयन्तीति हारादिभूषणान्यपहाय कामिनी नायकेनालिङ्गितेति भावः । अत्र वर्ण्यमाने करुणरसेऽप्रकृतश्रृङ्गारसप्रतीतिर्विरुद्धा जायत इत्यमतार्थान्तरत्वम् । अत्र प्रकृतस्य करुण-

---

देवताओंकी पूजा करना शास्त्रसिद्ध है । यहां इस शास्त्र के विरुद्ध प्रथम देवपूजन और पीछे कृष्णपूजन का निर्देश किया है अतः यहां अक्रम दोष है । इस दोषका अस्थानस्थपद दोष में अन्तर्भाव भी हो सकता है । काव्यप्रकाश का प्रसिद्धिहत दोष अप्रयुक्त दोष के अन्तर्गत मानना चाहिए ॥ २७ ॥

अमतार्थान्तरदोष का यह स्वरूप है—जहां वर्णनीय रस का अवर्णनीय (अप्रकृत) रस के साथ विरोध हो वहां अमतार्थान्तर दोष होता है । दूसरा अर्थ कविके अभिप्रेत नहीं होना यह अमतार्थान्तर शब्द का यौगिक अर्थ है । 'त्यक्तहार०' यह इसका उदाहरण है—स्त्रीने मोतियों के हार आदि आभूषणों को उतार दिया और वह शोकव्याकुल होगई । यह करुणरस का वर्णन है । यहां पर 'अशोकेन' ऐसा पदच्छेद करने से करुण के विरोधी श्रृङ्गाररस की प्रतीति इस प्रकार होती है—शोकरहित ( आनन्दित ) नायकने मुक्ताहार को हटा के हृद आलिङ्गन किया । सम्भोग के समय आभूषणों की अपेक्षा नहीं रहती अतः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अपुष्टार्थो विशेष्ये चेन्न विशेषो विशेषणात् ।
विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः ॥ २९ ॥

रसस्य विरोधी शृङ्गाररसस्तस्य व्यञ्जको द्वितीयोऽर्थः। तादृशार्थोपस्थित्या प्रकृतकरुण-रसापकर्षकतैवास्य दूषकताबीजम्। नित्योऽयं दोषः। एषु वाक्यदोषेषु न्यूनपद-कथित-पद-अभवन्मतयोग-अविमृष्टविधेयांश-अस्थानस्थपदाः काव्याकाव्यसाधारणाः॥२८॥

एवमष्टादश वाक्यदोषानभिधाय वाच्येष्वर्थदोषेष्वपुष्टार्थत्वमाह-अपुष्टेति। चेद् यदि। विशेष्ये विशेषणात् विशेषणोपादानात्। कश्चिद्विशेषो न स्यात्तदा। अपुष्टार्थ-दोषः। अपुष्टोऽर्थो यस्मिंस्तदपुष्टार्थं दूषणम्। मुख्यानुपकारकविशेषणोपादानत्वमपु-ष्टार्थत्वम्। यत्र शब्दपरिवर्तनेऽप्यर्थे दूषकता स्यात्तदार्थगता दोषा इत्यर्थान्वयव्यतिरे-कतयाऽत्रार्थदोषाः ज्ञेयाः। उदाहरति-विशन्तीति। खञ्जनस्य त्विड् इव त्विड् येषां ते खञ्जनत्विषः खञ्जनसमानकान्तयः कान्ताकटाक्षा रमणीकटाक्षाः। हृदयं विशन्ति प्रविशन्ति। अत्र खञ्जनत्विष इति विशेषणेन विशेष्यस्य कान्ताकटाक्षपदस्य न कश्चि-द् हृदयप्रवेशानुकूलोऽतिशय आधीयत इत्यपुष्टार्थत्वमत्र। तदनुपादानेऽपि हृदयप्रवेशे बाधाभावात्। यदि तीक्ष्णताप्रतिपादकं किमपि विशेषणं 'शरसन्निभाः' इत्यादि स्यात्तदा न दोषः। हृदयादिप्रवेशे तीक्ष्णताया एवानुकूल्यात्। न चास्याधिकपदत्वेऽ-न्तर्भाव इति वाच्यम्। तत्र हि—पदान्वयसमकालमेवाधिकपदता प्रतीयते, अत्र

---

मुक्ताहार का हटा देना उचित है। यह करुणरस के विरोधी शृङ्गाररस की प्रतीति कविको अभिमत नहीं है अतः अमतार्थान्तर दोष है। विरोधी रस के ज्ञान से प्रकृत रस के बोध में न्यूनता रह जाती है यह दोष होने का कारण है। यह नित्य दोष है। न्यूनपद, कथितपद, अभवन्मतयोग, अविमृष्टविधेयांश, अस्थानस्थपद ये पांच दोष सम्पूर्ण संस्कृत भाषामें होते हैं॥ २८॥

अट्ठारह वाक्यदोषों का निरूपण करके अर्थदोषों में अपुष्टार्थ दोष का निरू-पण करते हैं—जहां विशेषणों से वर्ण्यमान (विशेष्य) में कोई विशेषता न बतलाई जावे वहां अपुष्टार्थ दोष होता है। 'विशन्ति०' यह इसका उदाहरण है। खञ्जनके समान कान्तिवाले कामिनीके कटाक्ष हृदयमें प्रविष्ट होते हैं। यहां 'खञ्जनत्विषः' इस विशेषण से कटाक्ष में किसी विशेषताकी प्रतीति नहीं होती अतः अपुष्टार्थदोष है। यदि कटाक्षोंमें तीक्ष्णता का प्रतिपादक 'शरसन्निभाः' बाणके सदृश इत्यादि कोई विशेषण होता तो 'कटाक्ष हृदयमें घुसते हैं' इस अर्थ की

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कष्टः स्पष्टाववोधार्थमक्षमो वाच्यसन्निभः ।
व्याहतश्चेद्विरोधः स्यान्मिथः पूर्वापरार्थयोः ॥ ३० ॥

---

त्वन्वयोत्तरं व्यर्थता विज्ञायत इत्यनयोर्भेदः । अपुष्टार्थकपदस्य वैशिष्ट्यप्रतिपादनानुसन्धानेऽर्थप्रतीतिविलम्बो दूषकताबीजम् ॥ २९ ॥

कष्टत्वं व्याचष्टे—कष्टेति। यत्र वाचि वचने न सत् सम्यङ् विभाति भासते तादृशोऽविद्यमानकल्पः । अर्थः पदार्थः । स्पष्टश्चासाववबोधश्च स्पष्टाववबोधस्तदर्थं स्फुटप्रतीत्यर्थम् । न क्षमत इत्यक्षमोऽसमर्थः स्यात्तदा कष्टत्वदोषः भवति । स्फुटबोधाभावेनाविद्यमान इव स्थित इति भावः । स्पष्टाववबोधाक्षमत्वं कष्टत्वम् । 'वाच्यसन्निभः' इत्युदाहरणम् । अत्र वाच्यसदृश इति द्राक् प्रतीतेः 'वाचि न सत् निभाति' इत्येषोऽर्थो महता कष्टेन विभाति । ततोऽत्र कष्टत्वम् । क्लिष्टदोषस्तु शाब्दः । सम्यक्प्रतीतिविरहो दूषकताबीजम् । व्याहतत्वमाह—व्याहत इति। चेद् यदि पूर्वः प्रथमः, अपरोऽन्यश्चेति पूर्वापरौ, पूर्वापरौतावर्थौ चेति पूर्वापरार्थौ तयोः प्रथमान्ययोरर्थयोर्मिथः परस्परं विरोधो व्याघातः स्यात्तदा व्याहतदोषः । पूर्वापरार्थविरुद्धत्वं व्याहतत्वम् ।

---

पुष्टि होती । अधिकपद दोष में पदों के अन्वय के साथ ही अधिक पद की प्रतीति होती है और यहां पदान्वय के अनन्तर विशेषण की व्यर्थता मालुम होती है, यह इन दोनोंमें भेद जानना चाहिये । यहां विलम्ब से अर्थ की प्रतीति होती है यह दोष होने में बीज है ॥ २९ ॥

कष्टत्वदोष का स्वरूप यह है—जो अर्थ शब्दों में रहता हुआ भी न रहते हुए के समान हो और उक्त कारण से ही स्फुट अर्थ की प्रतीति न कराता हो वह कष्टार्थ कहलाता है । 'वाच्यसन्निभः' वाचि, असत्, निभः अर्थात् वाणी में न रहने वाला । यह कष्टार्थ का उदाहरण है । यहां पर उक्तपद का वाच्य ( अर्थ ) के सदृश यह अर्थ शीघ्र प्रतीत होता है तथा 'वाणी में न रहनेवाला' यह अभीष्ट अर्थ बड़े कष्ट से जाना जाता है । अतः कष्टत्वदोष है । क्लिष्टत्व शब्दगत होता है और यह अर्थगत होता है । अच्छी तरह अर्थज्ञान का न होना दूषकता का कारण है । व्याहतदोष का स्वरूप देखिए—जहां पूर्व तथा उत्तर कथन में विरोध हो वहां व्याहत दोष होता है । संस्कृत भाषा में इसे 'वदतो व्याघातः' भी कह देते हैं । पहले किसी का उत्कर्ष वा अपकर्ष बतला दिया जावे और पीछे उसीका अपकर्ष वा उत्कर्ष बतलाने पर व्याहत दोष होता है । अर्थात् पहिले उत्कर्ष

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सहस्रपत्रमित्रं ते वक्त्रं केनोपमीयते ।

---

'उत्कर्षो वापकर्षो वा प्राग् यस्यैव निगद्यते ।
तस्यैवार्थस्तदन्यश्चेद् व्याहतोऽर्थस्तदा भवेत्' ॥

इति न्यायेन स्तुतिरूपार्थस्य निन्दने निन्दारूपार्थस्य वा स्तुतौ द्विविधो व्याहतदोषः ॥ ३० ॥

तत्राद्यमुदाहरति—सहस्रेति । सहस्रपत्रमित्रं कमलतुल्यं ते तव वक्त्रं मुखं केन वस्तुना । उपमीयते समानीक्रियते । अत्र पूर्वं कमलोपमां प्रदर्श्यापि पुनस्तदुपमा-निषेधो दर्शित इत्यत्र मिथो विरोध इति व्याहतता । कमलसादृश्येन पूर्वं मुखस्यो-त्कर्षः, पुनरत्रोपमाभावप्रदर्शनेन कमलसादृश्यमेवापकर्षद्योतकमिति प्रथमं व्याहत-दोषोदाहरणम् । द्वितीयमुदाहरणं तु—

'गोस्तनीमधुपीयूषमस्तु लोकमनोमुदे । मदनोन्मत्तचार्वङ्गीवचो मधु मुदे मम' ॥

अत्र पूर्वं मधुन्युपेक्षारूपा निन्दा पुनरुत्तरत्र च मधुन एवोत्कर्षार्थमारोपः । हेयो-

---

बतलाके उसी का पुनः अपकर्ष बतलाया जावे यह एक प्रकार का व्याहत हुआ । इसी प्रकार पहले अपकर्ष बतलाके पुनः उसी का उत्कर्ष जहां दिखलाया जावे वहां व्याहत का दूसरा भेद जानना चाहिए ॥ ३० ॥

प्रथम व्याहत दोष का 'सहस्रपत्रमित्र' यह उदाहरण है—कमलके समान तेरे मुखसे किसकी उपमा लगाई जावे अर्थात् किसी की उपमा तेरे मुखसे नहीं लगाई जा सकती । यहां पहिले तो मुख को कमलके सदृश बतला दिया और फिर यह कह दिया कि किसी की उपमा तेरे मुखसे नहीं लगाई जा सकती । अतः व्याहत दोष है । कमलके सादृश्यसे मुखमें उत्कर्ष बतलाके फिर अन्य उपमान के अभावसे कमलके सदृश ही तेरा मुख है अन्य किसी उत्कृष्ट वस्तुके सदृश तेरा मुख नहीं इस अपकर्ष की प्रतीति होती है अतः यह व्याहत दोष का प्रथम भेद है । इसके दूसरे भेद का 'गोस्तनी मधु०' इत्यादि श्लोक उदाहरण है—अगुरु, सहद, अमृत, आदि वस्तुएँ संसारमें मनुष्यों को आनन्दित करती रहैं किन्तु मेरे को हर्षित करनेवाला तो मदनोन्मत्त कामिनी का वाक्यरूपी मधु ही है । यहां पूर्वार्धमें मधु की उपेक्षा बतलाके उसकी निन्दा की और फिर उत्तरार्धमें उसी मधु पद का वाक्यमें उत्कर्ष बतलानेके लिये आरोप किया अतः यहां निन्दा करके स्तुति की गई है यह दूसरा व्याहत का भेद है । परस्परमें अर्थ का विरोध होना

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कुतस्तत्रोपमा यत्र पुनरुक्तः सुधाकरः ॥ ३१ ॥
दुष्क्रमग्राम्यसंदिग्धास्त्रयो दोषाः क्रमादमी ।

पादेयत्वविरोधो दूषकताबीजम् । नित्योऽयं दोषः । अत्र पुनरुक्तपदं तन्त्रेण लक्षणं लक्ष्यान्तर्गतं च । अर्थप्रतीतत्वेऽपि पुनस्तत्प्रतिपादकत्वं पुनरुक्तत्वम् । उदाहरति-कुत इति । तत्रोपमा सादृश्यं कुतः कस्मात् । यत्र सुधाकरश्चन्द्रः पुनरुक्तो व्यर्थः। अत्र कुत इति पदेनोपमाभावप्रदर्शनेन चन्द्रवैयर्थ्ये सिद्धेऽपि पुनः 'पुनरुक्तः सुधाकरः' इति वाक्योपादाने पुनरुक्तता । यद्वा 'वक्त्रं केनोपमीयते' इत्यस्यावृत्तिः । तेन 'वक्त्रं केनोपमीयते', 'कुतस्तत्रोपमा' इति वाक्यद्वयं पुनरुक्तम् । न चास्यापुष्टत्वदोषेऽन्तर्भावः । शब्देन प्रतिपन्नत्वे सति पुनस्तेनैव प्रतिपादने पुनरुक्तत्वम् । अर्थेन प्रतिपन्नस्य प्रतिपादने त्वपुष्टत्वम् । कथितपददोषे तु पुनस्तस्यैव पदस्योपादानं भवति । परिवृत्तिसहत्वात्पुनरुक्तस्यार्थदोषता । अनित्योऽयं दोषः, भीतादौ गुणत्वात् । पौनरुक्त्यं दूषकताबीजम् ॥ ३१ ॥

दुष्क्रमग्राम्यसन्दिग्धाख्यान् दोषान् व्याचष्टे—दुष्क्रमेति । क्रमात्क्रमशः । अमी दुष्क्रमग्राम्यसन्दिग्धाख्यास्त्रयो दोषा ज्ञेयाः । तत्र लोकशास्त्रविरुद्धक्रमाभिधानत्वं

ही दोषमें निमित्त है । यह दोष नित्य माना गया है । पुनरुक्त दोष का स्वरूप यह है—एक बार अर्थके ज्ञान होने पर भी पुनः उसी अर्थ का जहां प्रतिपादन किया जावे वहां पुनरुक्त दोष होता है । 'कुतस्तत्रो०' इत्यादि श्लोकार्ध इसका उदाहरण है—वहां उपमा नहीं लगाई जासकती कि जहां पर चन्द्रमा भी पुनरुक्त (व्यर्थ) हो जाता है ।

यहां पहिले उपमा का अभाव वतला दिया तो भी 'चन्द्रमा पुनरुक्त (व्यर्थ) है' यह कहा गया । अतः यह पुनरुक्त दोष है । अथवा 'वक्त्रं केनोपमीयते, कुतस्तत्रोपमा यत्र' मुखसे किसकी उपमा लगावै, उस मुख की उपमा कहांसे मिले, ये दोनों शब्द दो वार आगये हैं । अतः पुनरुक्तके उदाहरण हैं । यहां शब्दसे एक वार अर्थ का ज्ञान हो चुका हो और फिर भी शब्दसे उसी अर्थ का प्रतिपादन हो तो पुनरुक्त दोष होता है और अपुष्टार्थमें विशेषण पुनरुक्त नहीं होता किन्तु व्यर्थ होता है । कथितपद दोषमें एक ही पद की दो वार आवृत्ति होती है और पुनरुक्तमें अर्थ की आवृत्ति होती है । भीरु पुरुष की उक्तिमें यह दोष गुण होजाता है अतः यह अनित्य दोष है । पुनरुक्त अर्थ का होना दोष का बीज है ॥ ३१ ॥

दुष्क्रम-ग्राम्य सन्दिग्ध दोषों का स्वरूप देखिए—

जहां लोक और शास्त्रके विरुद्धक्रमसे वर्णन किया जावे वहां दुष्क्रम

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वद्भक्तः कृष्ण ! गच्छेयं नरकं स्वर्गमेव वा ॥ ३२ ॥
एकं मे चुम्बनं देहि तव दास्यामि कञ्चुकम् ।
ब्रूत किं सेव्यतां चन्द्रमुखीचन्द्रकिरीटयोः ॥ ३३ ॥

---

दुष्क्रमत्वम् । अविदग्धप्रतिपादनविषयत्वं ग्राम्यत्वम् । वक्तृतात्पर्यविषये निश्चयाभावत्वं सन्दिग्धत्वम् । एषु दुष्क्रमत्वमुदाहरति–त्वदिति । हे कृष्ण ! त्वद्भक्तस्तव सेवकोऽहं नरकं गच्छेयं स्वर्गं नाकं वा गच्छेयं व्रजेयमिति सम्भावना । कृष्णभक्तस्य पूर्वं स्वर्गगमनसम्भावना समुचिता ततश्च नरकगमनरूपा । अत्र तु पूर्वं नरकगमनरूपा समुपात्तेति दुष्क्रमाख्योऽत्र दोषः । स्वर्गस्य प्राङ् निर्देशे तु नायं दोषः । नित्योऽयं दोषः । सहृदयोद्वेगो दूषकताबीजम् ॥ ३२ ॥

ग्राम्योदाहरणमाह—एकमिति । हे प्रिये ! अद्यम् । एकं चुम्बनं देहि । अहं तव ते कञ्चुकं स्तनावरकं वस्त्रं दास्यामि वितरिष्यामि अत्र । स्पष्टमेव चुम्बनयाचनं ग्राम्यजनप्रयोज्यमिति ग्राम्यदोषः । तथोक्तम्—

'स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते ।
वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु' इति ॥

अनित्योऽयं दोषः। सहृदयवैमुख्यं दूषकताबीजम्। सन्दिग्धमुदाहरति–ब्रूतेति ।

---

दोष होता है । ग्रामीण मनुष्योंके प्रयोगमें ग्राम्यदोष होता है । कहनेवाले पुरुष के भावार्थमें सन्देह होना ही सन्दिग्ध दोष होता है । 'त्वद्भक्तः' यह श्लोकार्ध दुष्क्रम का उदाहरण है—हे कृष्ण ! मैं आपका सेवक हूँ । मैं नरकमें जाऊँ या स्वर्गमें जाऊँ । यहाँ पर पथम नरक का नाम लिया और पीछे स्वर्ग का नाम लिया । यह क्रम लोक वा शास्त्र के विरुद्ध है । कृष्णके सेवक को पहिले स्वर्गमें जाने की और पीछे नरकमें जाने की इच्छा प्रकट करनी चाहिए । इसके विरुद्ध प्रयोग करना दुष्क्रम दोष माना है । सहृदयोंका उद्वेग होना दूषकता में कारण है । यह दोष नित्य है ॥ ३२ ॥

ग्राम्यका उदाहरण देखिये—हे प्रिये ! मुझे तुम एक बार चुम्बन करा दो मैं तुम्हें कञ्चुकी देदूँगा । यहाँ ग्रामीण मनुष्यने चातुर्य के विना ही स्पष्टरूपसे कह दिया कि मुझे चुम्बन देदो । अतः ग्राम्यदोष है । यह अनित्य दोष है । ऐसे काव्य के सुनने में सहृदयों को उदासीनता होती है यह दोष में बीज है । 'ब्रूत किं सेव्य-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा।
प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम् ॥ ३४ ॥

चन्द्र इव मुखं यस्याः सा चन्द्रमुखी, कामिनी च, चन्द्रः किरीटे मौलौ यस्य चन्द्रकिरीटश्चन्द्रशेखरः शिवश्च तौ तयोर्मध्ये किं सेव्यतामाश्रीयतामिति यूयं ब्रूत कथयत। अत्र प्रकरणाद्यभावे शान्तशृङ्गाररसान्यतरसन्देहाद् वक्तुस्तात्पर्यं सन्देहः। यत्र सन्देह एव वक्तुस्तात्पर्यं तत्र न दोषः। उद्देश्यनिश्चयाभावो दूषकताबीजम् ॥ ३३ ॥

अनौचित्यमाह—अनौचित्यमिति। अयोग्यसम्बन्धत्वमनुचितत्वम्। उदाहरति- कीर्तीति। यः सदा कीर्तिलतां यशोवल्लीम्। तरङ्गयति तरङ्गितां करोति। अत्र लतानिष्ठतरङ्गवर्णनमनुचितम्। तरङ्गसम्बन्धः समुद्रसरित्प्रभृतिषु योग्यः। नान्यत्र। पल्लवयतीत्युचितम्। विरुद्धत्वमाह—प्रसिद्ध्येति। लोकशास्त्रादिप्रतिकूलत्वं विरुद्धत्वम्। अत्र विरुद्धपदस्यावृत्तिः कार्या। तेन यत् प्रसिद्ध्या, विद्यया शास्त्रेणापि वा विरुद्धं प्रतिकूलं तद्विरुद्धं प्रसिद्धिविरुद्धं विद्याविरुद्धं चेति द्विविधं ज्ञेयम्। प्रसिद्धिविरुद्धमपि लोकप्रसिद्धिविरुद्धं कविप्रसिद्धिविरुद्धं चेति द्विविधम्। विद्याविरुद्धं च विद्याभेदादनेकधा। विरुद्धार्थश्रवणेन सहृदयवैमुख्यं दूषकताबीजम् ॥ ३४ ॥

ताम्' यह सन्दिग्ध दोष का उदाहरण है। चन्द्रमुखी ( कान्ता ) और चन्द्रशेखर ( शिव ) इन दोनों में किसकी सेवा की जावे यह आप कहिए। यहाँ प्रकरण के विना वक्ता शृङ्गाररसका प्रेमी है वा शान्तरस का यह निश्चय नहीं होता। अपि तु सन्देह ही वना रहता है अतः यह सन्दिग्ध दोष है। जहाँ सन्देह का ही प्रतिपादन हो वहाँ यह दोष नहीं होता ॥ ३३ ॥

अनौचित्यदोष का यह स्वरूप है—जहाँ अयोग्य के साथ किसी वस्तु का सम्बन्ध वतलाया जावे वहाँ अनौचित्यदोष होता है। 'कीर्तिलताम्' यह श्लोकांश इसका उदाहरण है—जो सदा कीर्तिरूपी लता को "तरङ्गयुक्त" वनाता है अर्थात् पल्लवित करता है। यहाँ लता में तरङ्ग का सम्बन्ध वतलाना अनुचित है। तरङ्गों का सम्बन्ध समुद्र वा नदियों में दिखलाना चाहिए। विरुद्ध दोषका लक्षण यह है—जहाँ प्रसिद्धि वा विद्या के प्रतिकूल वर्णन किया जावे वहाँ क्रमसे प्रसिद्धिविरुद्ध और विद्याविरुद्ध ये दो दोष होते हैं। लोकप्रसिद्धिविरुद्ध वा कविप्रसिद्धिविरुद्ध ये दो भेद प्रसिद्धिविरुद्ध के हैं। अनेक विद्याओं के भेद से विद्याविरुद्ध के वहुत भेद होते हैं। विरुद्ध अर्थ के श्रवण में उपेक्षा का होना दोष होने में कारण है ॥ ३४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

{ न्यस्तेयं पश्य कन्दर्पप्रतापधवलद्युतिः।
केतकी शेखरे शम्भोर्धत्ते चन्द्रकलातुलाम् ॥ ३५॥ }

प्रसिद्धिविरुद्धमुदाहरति—न्यस्ते-इति। इयं कन्दर्पस्य कामस्य यः प्रतापस्तस्य धवला श्वेता द्युतिः। न्यस्ता स्थापितेति त्वं पश्य। अत्र प्रतापस्य रक्तवर्णरूपां कविप्रसिद्धिमपहाय श्वेतो वर्णः प्रतापस्य प्रतिपादित इति कविसमयविरुद्धमेतत्। तथोक्तं केशवमिश्रेणालङ्कारशेखरे—

'असतोऽपि निबन्धेन सतामप्यनिबन्धनात्।
नियमस्य पुरस्कारात्संप्रदायस्त्रिधा कवेः' ॥ इत्यादि

अधिकं तु साहित्यदर्पणीयसप्तमपरिच्छेदे, अलङ्कारशेखरस्य पञ्चदशतमे मरीचौ च द्रष्टव्यम्। विद्याविरुद्धमुदाहरति—केतकीति। शम्भोः शिवस्य शेखरे मुकुटे न्यस्ता केतकी केतकवृक्षखण्डम्। चन्द्रकलातुलां शशिकलासाम्यम्। धत्ते दधाति। केतकीपुष्पं शम्भोः पूजायां वर्जितमित्यत्र तद्वर्णनं पुराणादिविद्याविरुद्धम्। यथोक्तं सनत्कुमारसंहितान्तर्गते कार्तिकमाहात्म्ये—

'शृणु केतक ते पुष्पैर्नरो मामर्चयिष्यति।
लक्ष्मीसन्ततिहीनोऽसौ रौरवं नरकं व्रजेत्' ॥ (३ अ० ४६ श्लो०) इति।

एकदा स्वोत्कर्षार्थं विवदमानौ विष्णुब्रह्माणौ विवादनिर्णयाय यदा शिवसमीपं गतौ तदा शिवेन कथितौ यद् ब्रह्मोपरि भागे, विष्णुश्च निम्नभागे गत्वा मम लिङ्ग-

---

'न्यस्तेयम्०' यह श्लोकार्ध प्रसिद्धिविरुद्ध का उदाहरण है—कामदेवके प्रताप की धवल कान्ति को आप देखिए। यहाँ प्रतापके रक्त वर्ण को छोड़के श्वेत वर्ण का वर्णन करना कविप्रसिद्धिविरुद्ध दोष है। क्योंकि कवियों ने प्रताप का रङ्ग लाल माना है। साहित्यदर्पण के सप्तम परिच्छेद में तथा केशवमिश्ररचित अलङ्कारशेखर के पन्द्रहवें मरीचि में कवियों के संकेत को देखना चाहिए। 'केतकी शेखरे०' यह विद्याविरुद्ध का उदाहरण है भगवान् शङ्कर के मस्तक पर केतकी का पुष्प चन्द्रमाकी कला के समान शोभित हो रहा है। केतकी का पुष्प शङ्कर की पूजा में पुराण से वर्जित है अतः यहाँ पुराणविद्याविरुद्ध दोष है। सनत्कुमारसंहिता के अन्तर्गत कार्तिकमाहात्म्यके तीसरे अध्याय में यह कथा है। एक दिन आपसमें कौन बड़ा है इस झगड़े को निपटाने के लिये ब्रह्मा और विष्णु ये दोनों भगवान् शङ्कर के निकट पहुँचे। तब शङ्कर ने इन से कहा कि ब्रह्मा उपरिभाग में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सामान्यपरिवृत्तिः स्यात् कुण्डलच्छविविग्रहा ।

परिमाणं च ज्ञात्वा समायातु । यश्च लिङ्गदैर्घ्यं ज्ञास्यति स एव युवयोः श्रेष्ठो भविष्यतीति । ततो ब्रह्मोपरिगतः, विष्णुश्च निम्नभागे ( पाताले ) गतः । अथ विष्णुः पञ्चशतवर्षानन्तरमागत्योवाच–हे शिव ! मया ते लिङ्गसमाप्तिर्नाधिगतेति । ब्रह्मा तु सहस्रवर्षानन्तरमागत्योवाच मया ते लिङ्गसमाप्तिरधिगतेति । अत्र साक्षिणौ कामधेनुकेतकवृक्षौ स्तः । शिवश्च ब्रह्मणा साक्षिभ्यां चोक्तमसत्यं ज्ञात्वा 'ब्रह्मा कैरपि न पूज्यः, गोमुखे सदा विष्ठा पतिष्यति, केतको मम पूजावर्जितः' इति तेभ्यः शापं विष्णवे च कार्तिके विशेषपूजां ददाविति पौराणिकी कथात्रानुसन्धेया । अत्र विरुद्धार्थप्रतीत्या सहृदयवैमुख्यं दूषकताबीजम् । काव्यप्रकाशोक्तानवीकृतदोषस्तु कथितपदान्तर्गत इति पृथङ् नोक्तः ॥ ३५ ॥

सामान्यपरिवृत्तिस्वमाह–सामान्येति । सामान्यार्थबोधकपदापेक्षत्वे सत्यनपेक्षितविशेषार्थबोधकपदोपादानत्वं सामान्यपरिवृत्तित्वम् । सामान्यार्थप्रतिपादनापेक्षायां विशेषार्थप्रतिपादनत्वमिति यावत् । उदाहरति—कुण्डलेति । इयं कामिनी कुण्डलस्य कर्णभूषणस्य कनकस्येति भावः । छविः कान्तिस्तत्समो विग्रहः शरीरं यस्याः सा

---

और विष्णु अधोभाग में जाकर मेरे इस लिङ्ग के अन्तिम भाग को देख आवें। जो लिङ्ग का अन्तिम भाग देख लेगा वही दोनों में बड़ा है। ततः ब्रह्मा उपरि भाग में और विष्णु निम्न भाग में गये। इसके बाद विष्णु पांच सौ वर्ष के अनन्तर वापिस लौटे और बोले कि मुझे आप के लिङ्ग का अन्त नहीं मिला। ब्रह्मा एक हजार वर्ष के अनन्तर वापिस आये और असत्य कहने लगे कि मैंने आपके लिङ्ग का अन्त देख लिया। इसके साक्षी कामधेनु और केतक वृक्ष हैं। भगवान् शिवने ब्रह्मा के व साक्षियों के वाक्य को असत्य जानकर ब्रह्मा की पूजा नहीं होनी चाहिए, कामधेनु के मुख में विष्ठा रहेगी, केतक मेरी पूजा में वर्जित रहेगा, यह शाप इन तीनों को दे दिया और विष्णु के वाक्य को सत्य जानकर इनकी कार्तिक-माघ में विशेष पूजा हो यह विष्णु को वर दिया। विरुद्धार्थ के ज्ञान से ऐसे काव्य का अनादर होता है, यह दोष में कारण है। काव्यप्रकाश में कहे गये अनवीकृत दोष को कथितपद के अन्तर्गत मानना चाहिये ॥ ३५ ॥

सामान्यपरिवृत्ति दोष का लक्षण यह है—सामान्य अर्थ का बोधक और विशेष अर्थ का बोधक ये दो प्रकार के शब्द होते हैं। इनमें से सामान्य अर्थ ( साधारण अर्थ ) के बोधक पदकी आवश्यकता में विशेष अर्थ के बोधक पद के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विशेषपरिवृत्तिः स्याद्वनिता मम चेतसि ॥ ३६ ॥
द्वौ स्तः सहचराऽचारुविरुद्धान्योन्यसंगती ।

मम चेतसि विद्यत इति शेषः । अत्र कनककान्तिसमशरीरेति वक्तव्ये सामान्यकनकार्थबोधकं पदं परित्यज्य विशेषकुण्डलपदोपादानं कृतमिति सामान्यपरिवृत्तित्वमत्र । परिवर्त्तनं परिवृत्तिः सामान्यस्य परिवृत्तिर्यत्र सः सामान्यपरिवृत्तिर्दोषः । विशेषपरिवृत्तित्वं व्याचष्टे—विशेषेति । विशेषार्थबोधकपदापेक्षत्वे सत्यनपेक्षितसामान्यार्थबोधकपदोपादानत्वं विशेषपरिवृत्तित्वम् । उदाहरति—वनितेति । वनिता स्त्री मम मे चेतसि मानसे विद्यते । अत्र वनितापदेन सर्वासां वनितानां ग्रहणे सर्वासां च वल्लभात्वं न संघटत इत्यत्र वल्लभावनितानामग्रहणमुचितमिति वनिताविशेषोपादानेऽपेक्षिते सामान्यार्थप्रतिपादकवनितापदोपादानं कृतमिति विशेषपरिवृत्तिर्दोषः । विवक्षितार्थानिर्वाहकत्वं दूषकताबीजम् ॥ ३६ ॥

सहचराचारुत्व-विरुद्धान्योन्यसंगतिदोषद्वयमाह—द्वौ स्त इत्यादिना। सहचराचारुश्च विरुद्धान्योन्यसंगतिश्चेति तथोक्तौ द्वौ दोषौ स्तो भवतः । सहचरणं सहचरः । अचारुश्चासौ सहचरश्चेति सहचराचारुः। अत्र पूर्वप्रयोगार्हस्याचारुपदस्य परप्रयोगः । 'राज-

---

जहां प्रयोग किया गया हो वहां सामान्यपरिवृत्तिदोष होता है । सामान्यपद का परिवर्तन करना इसका यौगिक अर्थ है । 'कुण्डलच्छविविग्रहा' इसका उदाहरण है । सुवर्ण के कुण्डल की कान्तिके समान शरीर वाली कान्ता है । सुवर्ण के समान शरीर वाली इस वर्णन के लिये सुवर्णवाचक सामान्य पद की आवश्यकता थी । इस सामान्य सुवर्ण पद को छोड़ के कवि ने विशेष अर्थ के बोधक कुण्डलपद का प्रयोग किया अतः यहां सामान्यपरिवृत्ति दोष है । विशेष–परिवृत्ति दोष यह है—विशेषार्थ बोधक पद की आवश्यकतामें जहां सामान्य अर्थ के बोधक पद का प्रयोग किया जावै वहां विशेषपरिवृत्ति दोष जानना चाहिये । 'वनिता मम चेतसि' स्त्री मेरे हृदय में है, यह इसका उदाहरण है । यहां अपनी प्रियतमा स्त्रीविशेष का नाम लेना चाहिए था सो नहीं लिया अतः दोष है । स्त्रीवाचक वनिता पद से सब स्त्रियों का बोध होता है । और सब स्त्रियां प्रिय नहीं हो सकतीं। अतः स्त्रीविशेष का नाम लेना उचित था । ऐसे दोष से अपने भावार्थ का प्रतिपादन अच्छी तरह से नहीं होता यह दोष का बीज है ॥ ३६ ॥

सहचराचारु और विरुद्धान्योन्यसङ्गति ये दोष देखिए—जहां दो वस्तुओं के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ध्वाङ्क्षाः सन्तश्च तनयं स्वं परञ्च न जानते ॥ ३७ ॥

दन्तादिषु परम्' इति पाणिनीयानुशासनात्। यद्वा सहचरेषु समभिव्याहृतेषु, अचारु न रम्यम्। अचारुत्वं चोत्कृष्टत्वापकृष्टत्वाभ्यां भवति। एवं समभिव्याहृतारम्यार्थकत्वं सहचराचारुत्वम्। अन्यश्चान्यश्चेत्यन्योन्यौ तयोः संगतिरन्योन्यसंगतिः। विरुद्धा चासावन्योन्यसंगतिश्चेति विरुद्धान्योन्यसंगतिः। विवक्षितार्थविरुद्धसंगतित्वं विरुद्धान्योन्यसंगतित्वम्। सहचराचारुत्वमुदाहरति—ध्वाङ्क्षा इति। दोषोऽयं द्विधा जायते। उत्कृष्टैः सह निकृष्टस्य, निकृष्टैः सहोत्कृष्टस्य च साहचर्यात् अत्रेदमुभयोदाहरणम्। ध्वाङ्क्षाः काकाः सन्तः सज्जनाश्च स्वं परं च तनयं पुत्रं न जानते। स्वपरेषु भेददृष्टिशून्या भवन्तीति भावः। 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः', 'उदारचरितानां तु वसुधैव कुटुम्बकम्' इत्यादि न्यायेन सज्जनाः स्वपरभेदशून्याः। काकाश्चाज्ञानेन कोकिलपुत्रमेव स्वपुत्रं ज्ञात्वा तत्पालनं कुर्वन्ति। पक्षोत्पत्त्यनन्तरं च कोकिलपुत्राः स्वजातौ संमिलन्ति। अत एव च परभृत इति कोकिलाख्या प्रचलिता। अत्र काकसज्जनयोः साहचर्यं न रम्यमिति सहचराचारुत्वदोषः। सहचरितानां प्रायः एकरूपतया सर्वेषामुपादेयत्वं हेयत्वं वा प्रतीयते। तथा सति काकादिपरित्यागेनात्र सज्जनानामपि परित्यागो भवेत्, यद्वा सज्जनोपादेयतया काकाचरणस्यापि समुपा-

साहचर्य में सुन्दरता की प्रतीति न हो वहां सहचराचारु दोष होता है। और जहां विरुद्ध दो पदार्थों का एक जगह समावेश किया जावे वहां विरुद्धान्योन्यसङ्गति दोष माना है। 'ध्वाङ्क्षाः सन्तश्च' यह सहचराचारु का उदाहरण है—कौवे और सज्जन अपनी वा पराई सन्तान में भेदभाव नहीं रखते। दोनों को बराबर दृष्टि से देखते हैं। तात्पर्य यह हुआ कि सज्जन लोग सम्पूर्ण संसार को ही अपना कुटुम्ब मानते हैं। वे किसी से राग-द्वेष नहीं करते। और कौवे अपनी मूर्खता के कारण कोकिल की सन्तान को अपनी ही सन्तान मानकर उसका पालन करते हैं। पीछे वह कोकिल की सन्तान बड़ी होने पर अपने वर्ग (कोकिलसमूह) में जाकर शामिल हो जाती है। अत एव कोकिल को संस्कृत भाषा में परभृत (दूसरे से पालित) भी कहते हैं। यहां कौवे और सज्जनों का साहचर्य अच्छा नहीं मालुम पड़ता। अतः दोष है। क्योंकि साथ रहने वालों का प्रायः (एकसा) स्वभाव होता है। इसी कारण बुरे के साथ अच्छे आदमी के वर्णन में बुरेपन की और अच्छे आदमी के साथ बुरे आदमी के वर्णन में अच्छेपन की प्रतीति हो जाती है। यहां काक के साथ सज्जनों का वर्णन करने से काक के समान

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सरोजनेत्र पुत्रस्य मुखेन्दुमवलोकय ।
पालयिष्यति ते गोत्रमसौ नरपुरन्दरः ॥ ३८ ॥

देयतेति तद् द्वयमप्यचारु । एतदेव च दूषकताबीजम् । अत्र द्विविध एव सहचराचारुत्वदोषो ज्ञेयः । नित्योऽयं दोषः ॥ ३७ ॥

विरुद्धान्योन्यसंगतित्वमुदाहरति–सरोजनेत्रेति । सरसि जातं सरोजम् । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । सरोजवन्नेत्रे नयने यस्य स तत्सम्बुद्धौ हे सरोजनेत्र कमलनयन ! । पुत्रस्य तनयस्य । मुखेन्दुं मुखचन्द्रमवलोकय पश्य । असौ नरपुरन्दरो नरेन्द्रस्ते पुत्रः । ते गोत्रं कुलं पालयिष्यति रक्षिष्यति । सति चन्द्रे कमलं संकुचितं भवतीत्यत्र सरोजनेत्र–मुखेन्दुपदयोः संगतिर्विरुद्धा । तथा पुरन्दरस्य गोत्रपालकत्वमपि विरुद्धम् । तस्य गोत्रभेदकत्वात् । अतः पुत्रे पुरन्दरारोपः सुतरां विरुद्ध इति ज्ञेयम् । अयमेव दोषः काव्यप्रकाशादौ प्रकाशितविरुद्धनाम्ना व्यवह्रियते । विरुद्धार्थप्रकाशनं दूषकताबीजम् । नित्योऽयं दोषः । न च विरुद्धमतिकृद्दोषेऽन्तर्भावः । प्रथमप्रतीतेन विवक्षितार्थेनैव विरुद्धार्थज्ञानमत्र भवति । अथ वा—अर्थनिबन्धनात्र विरुद्धार्थप्रतीतिः । उक्तदोषे तु तथा नेति ततो भेदः । काव्यप्रकाशोक्तं विध्ययुक्तत्वानुवादायुक्तत्वरूपदोषद्वयं त्वविमृष्टविधेयांशभग्नप्रक्रमदोषयोः क्रमशोऽन्तर्गतमिति नात्र पृथग्दर्शितम् । एवमन्येषामपि यथायथमन्तर्भावो बोध्यः ॥ ३८ ॥

---

सज्जनों में भी दुष्टता की प्रतीति हो सकती है । अथवा सज्जनों के समान कौवे के आचरण में भी उपादेयता आजाती है । अतः दोष है ॥ ३७ ॥

विरुद्धान्योन्यसङ्गति का उदाहरण देखिए—हे कमल के समान नेत्र वाले पुरुष ! तुम अपने पुत्र के मुखरूपी चन्द्रमा को देखो । मनुष्यों में इन्द्र के सदृश यह तुम्हारा पुत्र तुम्हारे कुल का पालन करेगा । यहाँ सरोजनेत्र ( कमलनेत्र ) और मुखेन्दु पदका तथा पुरन्दर और गोत्रपालन पद का एक वाक्यमें वर्णन आपस में विरुद्ध हो जाता है । क्योंकि चन्द्रमा के उदित होने पर कमल सङ्कुचित होते हैं और पुरन्दर (इन्द्र) गोत्र का पालन नहीं करता अपितु गोत्र (पर्वतों के पक्ष ) का भेदक माना गया है । अतः यहाँ विरुद्धान्योन्यसङ्गति दोष है । विरुद्धमतिकृत् दोष पदनिष्ठ होता है और उसमें कविके अभीष्ट अर्थ से ही विरुद्ध अर्थका ज्ञान हो जाता है । प्रकृतदोष अर्थगत है और इसमें वाक्यार्थ के अनन्तर विरुद्ध अर्थ की प्रतीति होती है । काव्यप्रकाशका विध्ययुक्ततादोष अविमृष्टविधेयांश के और अनुवादायुक्तत्वदोष भग्नप्रक्रमदोष के अन्तर्गत मानना चाहिए ॥ ३८ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदे तदंशे वाक्यांशे वाक्ये वाक्यकदम्बके।
यथानुसारमभ्यूहेद्दोषान् शब्दार्थसंभवान् ॥ ३९ ॥

---

इत्थं दोषानुक्त्वा तदाश्रयान् कथयन्नुपसंहरति-पद इति। शब्दश्चार्थश्च शब्दार्थौ ताभ्यां संभवो येषां ते तान् शब्दार्थगतान् दोषान् यथानुसारं लक्षणानुकूलम्। पदे सुप्तिङन्तरूपे, तदंशे पदांशे प्रकृतिप्रत्ययादौ, वाक्यांशे समासे खण्डवाक्ये च, वाक्ये महावाक्ये, वाक्यानां कदम्बके समूहे प्रबन्धे च। अभ्यूहेद् विचारयेत्। जानीयादित्यर्थः। 'अनुक्तमप्यूहति पण्डितो जनः' इतिवदत्र परस्मैपदम्। अयमाशयो यत् शब्दनिष्ठा दोषाः पदादिगतत्वेन पञ्चधा, अर्थदोषस्त्वेकविध एव। काव्यप्रकाशादौ त्वर्थदोषो रसदोषश्चेति द्विविधोऽर्थदोषः। अलङ्कारादिदोषास्तूक्तेभ्यो दोषेभ्यो न भिन्ना इति तेऽत्र न परिगणिताः। व्यक्तिविवेके महिमभट्टेन द्वितीयविमर्शे, तद् यथा-'विधेयाविमर्शः, प्रक्रमभेदः, क्रमभेदः, पौनरुक्त्यम्, वाच्यावचनं च' इति पञ्चैव दोषाः संगृहीताः। चिरञ्जीवभट्टाचार्यकृते काव्यडाकिनीग्रन्थे दोषा एव प्रतिपादिता इत्यधिकं तत्रैव द्रष्टव्यम्। प्रस्तुतग्रन्थे प्रतिपादितानां दोषाणां त्वियं संकलना-श्रुतिकटुत्वम्, च्युतसंस्कृतित्वम्, अप्रयुक्तत्वम्, असमर्थत्वम्, निहतार्थत्वम्, अनुचितार्थत्वम्,

---

इस प्रकार कवि दोषों का वर्णन करके अब उनके आश्रयों (रहने की जगहों) को बतलाता है—शब्द और अर्थ में रहने वाले दोष क्रम से पद, पदांश, वाक्यांश, महावाक्य और वाक्यसमूह ( प्रबन्ध ) में वर्त्तमान रहते हैं। सारांश यह हुवा कि—शब्दनिष्ठ दोष पद, पदांश, वाक्यांश, महावाक्य और वाक्यसमूह ( प्रबन्ध ) इन पाचों स्थानों में रहते हैं। और अर्थदोष केवल अर्थमें ही रहते हैं। काव्यप्रकाशादिग्रन्थों में अर्थदोष अर्थ और रस इन दो आश्रयों ( स्थानों ) में रहते हैं। वामनादि आचार्योंने काव्यालङ्कारादि ग्रन्थों में अलङ्कार के दोष भी बतलाये हैं। किन्तु वे अलङ्कारदोष उक्त दोषोंमें ही अन्तर्गत हो जाते है अतः यहां पृथक् रूपसे उनका स्वरूप नहीं बतलाया गया है। महिमभट्टने अपने ग्रन्थ व्यक्तिविवेक के द्वितीय विमर्श में विधेयाविमर्श, प्रक्रमभेद, क्रमभेद, पौनरुक्त्य और वाच्यावचन ये पांच ही दोष बतलाये हैं। काव्यडाकिनी ग्रन्थमें चिरंजीव भट्टाचार्यने केवल दोषोंका ही विवेचन किया है अतः दोषों का अधिक विवेचन वहां-ही देखना चाहिए। प्रस्तुत ग्रन्थ में तो दोषों का संकलन इस प्रकार है—श्रुतिकटु, च्युतसंस्कृति, अप्रयुक्त, असमर्थ, निहतार्थ, अनुचितार्थ,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम् ।

निरर्थकत्वम्, अवाचकत्वम्, व्रीडाजनकाश्लीलत्वम्, जुगुप्साजनकाश्लीलत्वम्, अमङ्गलजनकाश्लीलत्वम्, संदिग्धत्वम्, अप्रतीतत्वम्, शिथिलत्वम्, ग्राम्यत्वम्, नेयार्थत्वम्, क्लिष्टत्वम्, अविमृष्टविधेयांशत्वम्, विरुद्धमतिकृत्त्वम्, अन्यसंगतत्वम्, इत्येते विंशतिदोषाः, एषु श्रुतिकटुत्वत्रिविधाश्लीलत्वानुचितार्थत्वादयस्त्रयो दोषाः पददोषाः, वाक्यदोषाश्च । निरर्थकत्वावाचकत्वक्लिष्टत्वादयः पदमात्रगाः, क्लिष्टत्वविरुद्धमतिकृत्त्वाविमृष्टविधेयांशत्वादयस्त्रयः समासगता एव पददोषाः । श्रुतिकटुत्वादयो यथायथं पदांशवृत्तयोऽपीति ज्ञेयम् । अथ तेऽष्टादश वाक्यमात्रगाः—प्रतिकूलाक्षरत्वम्, उपहतविसर्गत्वम्, लुप्तविसर्गत्वम्, कुसन्धित्वम्, विसन्धित्वम्, हतवृत्तत्वम्, न्यूनत्वम्, अधिकत्वम्, कथितत्वम्, विकृतत्वम्, पतत्प्रकर्षत्वम्, समाप्तपुनरात्तत्वम्, अर्धान्तरपदापेक्षित्वम्, अभवन्मतयोगत्वम्, अस्थानस्थसमासत्वम्, संकीर्णत्वम्, भग्नप्रक्रमत्वम्, अमतार्थान्तरत्वमिति । एते चतुर्दश दोषा अर्थमात्रगताः—अपुष्टार्थत्वम्, कष्टत्वम्, व्याहतत्वम्, पुनरुक्तत्वम्, दुष्क्रमत्वम्, ग्राम्यत्वम्, सन्दिग्धत्वम्, अनौचित्यम्, प्रसिद्धिविरुद्धम्, विद्याविरुद्धम्, सामान्यपरिवृत्तित्वम्, विशेषपरिवृत्तित्वम्, सहचराचारुत्वम्, विरुद्धान्योन्यसङ्गतित्वमिति ॥ २९ ॥

उक्तदोषापवादकं दोषाङ्कुशं व्याचष्टे-दोषमिति । यः स्वान्ते मानसे आपतितं

---

निरर्थक, अवाचक, व्रीडाजनक-अश्लील, जुगुप्साजनक-अश्लील, अमङ्गलजनक-अश्लील, सन्दिग्ध, अप्रतीत, शिथिल, ग्राम्य, नेयार्थ, क्लिष्ट, अविमृष्टविधेयांश, विरुद्धमतिकृत् और अन्यसङ्गत, ये बीस पदगत दोष हैं । इनमें श्रुतिकटु, तीन प्रकार का अश्लील और अनुचितार्थ ये दोष वाक्य में भी होते हैं । क्लिष्ट, विरुद्धमतिकृत् और अविमृष्टविधेयांश ये तीनों समास होने पर ही पद-दोष होते हैं । श्रुतिकटु आदिदोष यथासंभव पदांश में भी होते हैं । प्रतिकूलाक्षर, उपहतविसर्ग, लुप्तविसर्ग, कुसन्धि, विसन्धि, हतवृत्त, न्यून, अधिक, कथित, विकृत, पतत्प्रकर्ष, समाप्तपुनरात्त, अर्धान्तरपदापेक्षी, अभवन्मतयोग, अस्थानस्थसमास, सङ्कीर्ण, भग्नप्रक्रम, अमतार्थान्तर ये अठारह वाक्यदोष हैं । अपुष्टार्थ, कष्टत्व, व्याहत, पुनरुक्त, दुष्क्रम, ग्राम्य, संदिग्ध, अनौचित्य, प्रसिद्धिविरुद्ध, विद्याविरुद्ध, सामान्यपरिवृत्ति, विशेषपरिवृत्ति, सहचराचारु, विरुद्धान्योन्यसङ्गति ये चौदह दोष अर्थगत हैं ॥ २९ ॥

अब दोषाङ्कुश का निरूपण किया जाता है—जो निरन्तर विचार में आये

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् ॥ ४० ॥
दोषे गुणत्वं तनुते दोषत्वं वा निरस्यति ।
भवन्तमथ वा दोषं नयत्यत्याज्यतामसौ ॥ ४१ ॥
मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ।
अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् ॥ ४२ ॥

---

ज्ञातमपि । विश्रृङ्खलमप्रतिबन्धम् । यथा तथा । प्रसरन्तं विकसन्तम् । त्रेधा निवारयति दूरीकरोति । तं दोषाणामङ्कुशं निवारकं दोषाङ्कुशमुशन्ति-वाञ्छन्ति । बुधा इति शेषः । 'वश कान्तौ' इति धातोः कर्तरि लटि बहुवचनम् । येन दोषा गुणा निर्दोषाश्च भवन्ति स दोषाङ्कुशो भेदत्रयवानित्यर्थः ॥ ४० ॥

दोषाङ्कुशभेदत्रयमाह—दोष इति । असौ दोषाङ्कुशः । दोषे ग्राम्यादिदोषे सति । गुणत्वं गुणतामुपादेयतामिति यावत् । तनुते कुरुते । वा दोषत्वं विद्याविरुद्धादित्वं हेयतां निरस्यति निवारयति । अथवा भवन्तं वर्तमानं निरर्थकत्वादिदोषम् । अत्याज्यतामुपादेयताम् । नयति प्रापयति । दोषे गुणत्वमित्येको भेदः । दोषे निर्दोषत्वमिति द्वितीयो भेदः । दोषे उपादेयतेति तृतीयो भेदः ॥ ४१ ॥

तत्र प्रथममुदाहरति-मुखमिति । श्वेतश्मश्रूण्येव कपोलचिबुकश्वेतकेशा एव कराङ्कुराः किरणप्ररोहास्तैः । मुखं वृद्धवदनम् । चन्द्रश्रियं चन्द्रशोभां धत्ते बिभर्ति । अत्र श्वेतश्मश्रुपदे ग्राम्यत्वदोषः । स च हास्यरसस्योद्देशे प्रतिपादने सति गुणतामनुकूलतां

---

हुवे दोषों को तीन प्रकार से निवारण करे वह दोषाङ्कुश होता है। दोषों का अङ्कुश ( निवारक ) यह इसका यौगिक अर्थ है ॥ ४० ॥

दोषाङ्कुश के तीन भेद ये हैं—दोष को गुण बना देना, दोष को निर्दोष (दोषरहित) कर देना और दोष का ग्राह्य होना ये दोषाङ्कुश के तीन भेद होते हैं। ग्राम्यादिदोष हास्यरस में गुण बन जाते हैं, विद्याविरुद्धादिदोष कवियों के सङ्केत से दोषरहित ( निर्दोष ) होते हैं, और—निरर्थकादिदोष श्लेषादि अलङ्कारों में ग्राह्य होते हैं ॥ ४१ ॥

ग्राम्यदोष हास्य रस में गुण बन जाता है इसका उदाहरण 'मुखं चन्द्र०' यह श्लोक है । श्वेत डाढ़ी-मूछों के बाल रूपी किरणों से यह मुख चन्द्रमा के समान शोभित होता है । श्वेत डाढ़ी-मूछों के बालों को चन्द्रमा की किरणों के समान बतलाना ग्रामीण मनुष्यों की कल्पना है । अतः यहाँ ग्राम्यदोष है । हास्यरस की पुष्टि ग्राम्यदोष द्वारा अधिक होती है इसलिये उक्त ग्राम्यदोष यहाँ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तव दुग्धाब्धिसंभूतेः कथं जाता कलङ्किता ।
कवीनां समयाद्विद्याविरुद्धोऽदोषतां गतः ॥ ४३ ॥
दधार गौरी हृदये देवं हिमकराङ्कितम् ।

गतः प्राप्तः । ग्राम्यपदानामेव हास्यरसव्यञ्जकतेति ज्ञेयम् ॥ ४२ ॥

द्वितीयमुदाहरति—तवेति । हे चन्द्र ! दुग्धस्याम्बुधिः क्षीरसागरः स एव सम्भूतिरुत्पत्तिस्थानं यस्य स तस्य क्षीरसागरोत्पन्नस्य तव कलङ्किता कलङ्कित्वं कथं केन प्रकारेण जातोत्पन्ना । अत्र विद्याविरुद्धदोषः कवीनां समयात् संकेतात् । अदोषतां निर्दोषतां गतः प्राप्तः । अयं भावः, क्षीरसागरसमुत्पन्नश्चन्द्रो निष्कलङ्कः, अत्रिनेत्रजातस्तु सकलङ्कः इति पुराणप्रसिद्धिः । कविसम्प्रदाये तु द्वयोरक्यं कलङ्कित्वं च । एवं प्रथमचन्द्रे कलङ्कित्ववर्णनं पुराणविद्याविरुद्धमपि कविसमयानुकूल्यान्न दोषतां भजति । न च गुणतां प्राप्नोति । वैचित्र्याभावात् । अतोऽत्र विद्याविरुद्धो न दोषो न गुण इति ज्ञेयम् ॥ ४३ ॥

तृतीयमुदाहरति—दधारेति । गौरी गौराङ्गी पार्वती च । हृदये स्वान्ते । मकरो मीनस्तेनाङ्कितं चिह्नितम् । तथा हिमकरश्चन्द्रस्तेनाङ्कितं चन्द्रशेखरम् । देवं कामं शिवं च ।

हास्यरस के अनुकूल होने के कारण गुण बन जाता है ॥ ४२ ॥

विद्याविरुद्ध दोष कवियों के संकेतित वर्णन में दोषाभाव को प्राप्त होता है इसका उदाहरण 'तव दुग्धाब्धि०' यह श्लोक है । हे चन्द्र ! क्षीर सागर से उत्पन्न होने पर भी तेरे में कलङ्क कहाँ से आ गया । क्योंकि क्षीरसागर से उत्पन्न चन्द्रमा निष्कलङ्क है और अत्रिऋषि के नेत्र से उत्पन्न ही चन्द्रमा में कलङ्क है यह पुराणप्रसिद्ध है । उक्त पुराणप्रसिद्धि के विरुद्ध वर्णन करना विद्याविरुद्धदोष होता है । कविसम्प्रदाय में तो दोनों प्रकार से उत्पन्न चन्द्रमा एक ही माना जाता है और उसमें कलङ्क भी माना जाता है । अतः उक्त वर्णन पुराणविरुद्ध होता हुआ भी कविसमयानुसार दोष नहीं होता । और विशेष विचित्रता न होने के कारण यह गुण भी नहीं हो सकता । इसलिये यहाँ यह दोष दोषाभाव को प्राप्त होता है ॥ ४३ ॥

'दधार गौरी०' यह श्लोकार्ध दोषाङ्कुश के तृतीय भेद का उदाहरण है, यहाँ श्लेषालङ्कार से पार्वती तथा कान्ताके पक्षमें दो अर्थ निकलते हैं—पार्वती ने हिमकर (चन्द्रमा) से युक्त देव शिव का मन में ध्यान किया । तथा गौरी (कामिनी) ने


CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ॥ ४४ ॥
महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।

दधार दधौ । अत्र वाक्ये श्लेषस्यालङ्कारस्योदयादुत्पत्तेः । कामपक्षे हीति निरर्थकप न त्याज्यम् । तद्विना श्लेषानुदयात् । कामपक्षे हिमकराङ्कितपदस्थाने मकराङ्कितपद मादायार्थनिर्वाहो भवतीति तत्र हीतिपदे निरर्थकदोषः । किन्तु तस्य श्लेषनिर्वाहक त्वेन न त्याज्यता । एषा हि दिक् प्रदर्शिता । विस्तरस्तु काव्यप्रकाशादौ द्रष्टव्यः तस्यैव शब्दस्यानुकरणे प्रायः सर्वेषामेव दोषाणां निर्दोषता जायते । ये दोषाश्चाऽनि त्याः कुत्रापि गुणाः, क्वापि निर्दोषाः, क्वचिच्चोपादेया भवन्ति । त इमे सन्ति यथा-श्रु तिकटुत्वम्, अप्रयुक्तत्वम्, निहतार्थत्वम्, निरर्थकत्वम्, त्रिविधाश्लीलत्वम्, सन्दि ग्धत्वम्, अप्रतीतत्वम्, ग्राम्यत्वम्, न्यूनत्वम्, अधिकत्वम्, कथितत्वम्, पतत्प्रक र्षत्वम्, सङ्कीर्णत्वम्, समाप्तपुनरात्तत्वम्, कष्टत्वम्, प्रसिद्धिविरुद्धत्वम्, विद्याविरु द्धत्वम्, इत्यादि । रसदोषाणामपि गुणत्वं निर्दोषत्वमुपादेयता च भवतीति रस दोषप्रतिपादकग्रन्थादौ द्रष्टव्यम् । इत्थं दोषाः प्रतिपादिता इत्यनवद्यम् ॥ ४४ ॥

अधुना द्वितीयमयूखसमाप्तिं व्याचष्टे—महादेवेति । महादेवः सत्रेति प्रथम

मकर याने मछली से चिह्नित कामदेव को अपने मनमें विचारा । यहां कामदेव के पक्ष में हिमकराङ्कितपद में से हि पद को हटाके मकर (मीन) से अङ्कित यह अर्थ करने पर हि पदमें निरर्थक दोष तो यद्यपि आ जाता है किन्तु इस निरर्थक दोष के बिना यहाँ श्लेषालङ्कार की स्थिति नहीं रह सकता अतः उक्तदोष यहां अत्याज्य (ग्राह्य) है । यह दोषों के निवारण करने की कुछ रीति बतला दी गई है इसका विस्तार काव्यप्रकाश, साहित्यदर्पणादि ग्रन्थों में देखना चाहिये । किसी की उक्ति के अनुकरण करने पर ( ठीक २ वैसे ही कहने पर ) दोष नहीं होते यह भी जानना चाहिये । दोषाङ्कुश से जो दोष अनित्य माने गये हैं वे निम्नलिखित हैं— श्रुतिकटु, अप्रयुक्त, निहतार्थ, निरर्थक, अश्लील के तीनों भेद, सन्दिग्ध, अप्रतीत, ग्राम्य, न्यून, अधिक, कथित, पतत्प्रकर्ष, संकीर्ण, समाप्तपुनरात्त, कष्ट, प्रसिद्धि विरुद्ध, विद्याविरुद्धादि । रस दोषों में भी अनित्य दोष होते हैं । यह दोषों का वर्णन समाप्त हुआ ॥ ४४ ॥

'महादेवः सत्र०' यह प्रथम मयूख का सोलहवां श्लोक है । इसी श्लोक

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयस्तेनासौ सुकविजयदेवेन रचिते ।
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ ४५ ॥

इति चन्द्रालोकालङ्कारे दोषनिरूपणो नाम द्वितीयो मयूखः ।

## तृतीयो मयूखः

अथ लक्षणानि ।

अल्पाक्षरा विचित्रार्थख्यातिरक्षरसंहतिः ।

---

मयूखषोडशश्लोक एवात्रापि ज्ञेयः । तस्य तृतीयपादांशः 'द्वितीयस्तेनासौ' इति परिवर्तनीयः । द्वितीयो मयूखश्चन्द्रालोके सुमनसः सुखयत्विति भावः ॥ ४५ ॥

इति श्रीजयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन वेदान्तभूषणोपाधिविभूषितेन भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीय-प्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीय-पाठ्यनिर्धारणसमितिजुषा जयपुरराजकीयसंस्कृतकालेज-साहित्यमहाध्यापकेन कथाभट्टनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमा-ख्यायाश्चन्द्रालोकव्याख्याया द्वितीये मयूखे पर्यवसानम् ॥ २ ॥

'निर्दोषा लक्षणवती' इत्यादिकाव्यलक्षणानुसृत्या प्रथमं दोषान्निरूप्य लक्षणानि निर्दिशति–अथेत्यादिना । लक्ष्यते काव्यस्वरूपमेभिरिति लक्षणानि। यथा सामुद्रिक-

---

तृतीयपाद की जगह 'द्वितीयस्तेनासौ सुकविजयदेवेन रचिते' यह परिवर्तन करके द्वितीय मयूखकी समाप्ति करनी चाहिए ॥ ४५ ॥

कथाभट्टनन्दकिशोरशर्मसाहित्याचार्यकृत कथाभट्टीयनामक हिन्दी व्याख्यामें चन्द्रालोक का द्वितीय मयूख समाप्त हुआ ।

ग्रन्थकार इस तृतीय मयूख में काव्य के लक्षण ( चिह्न ) बतलाते है—जिन से काव्यका स्वरूप जाना जावे वे लक्षण कहे जाते हैं । जैसे सामुद्रिकादिशास्त्र में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उषाकान्तेनानुगतः शूरः शौरिरयं पुनः ॥ १ ॥

शास्त्रोक्तैरूर्ध्वरेखादिचिह्नैर्मनुष्ये नृपत्वं प्रत्याय्यते तथैवैभिरक्षरसंहत्यादिभिः काव्यलक्षणैः काव्यत्वमिति काव्यत्वप्रत्यायकत्वं लक्षणत्वमिति तत्स्वरूपं ज्ञातव्यम्। यद्यपि भूयांसि काव्यलक्षणानि तथापि दिक्प्रदर्शनायात्र कानिचिन्निर्दिश्यन्ते।

आदावक्षरसंहतिमाह—अल्पेति। अल्पानि सूत्रसदृशानि अक्षराणि वर्णा यस्यां सा स्तोकवर्णेति यावत्। सूत्रलक्षणं च वैयाकरणैरिदमुक्तम्—

'अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' ॥

विचित्रश्चासावर्थश्च विचित्रार्थस्तस्य ख्यातिः प्रकाशनम्। अक्षराणां वर्णानां संहतिः संघो यस्यां सा। यत्राल्पाक्षराणां बह्वर्थप्रत्यायकता स्यात्तत्राक्षरसंहतिर्भवतीति भावः। बह्वर्थबोधकाल्पाक्षरशब्दत्वमक्षरसंहतित्वम्। उदाहरति-उपेति। उषा-बाणासुरपुत्री तस्याः कान्तेनानिरुद्धेनानुगतोऽनुयातः। अयं शूरस्य यादवविशेषस्याऽपत्यं पुमान् शौरिः कृष्णः। वृष्णित्वेऽपि बाह्वादित्वात् ( ४।१।९६ ) इञ् प्रत्ययः। पुनः शूर एव वीर एव, यादवविशेष एव वा। अत्र शूरपदे वीरयादवार्थकतया श्लेषः। उषापरिणये बाणासुरविजेतायं कृष्णो महान् वीर इति भावः। अत्रोषाकान्तेनानुगत इति विशेषणेनोषापरिणयवृत्तं भगवतः कृष्णस्य पौरुषं च स्मारितमित्यल्पाक्षरे-

कहे गये ऊर्ध्वरेखाप्रभृति चिह्नों को देखकर निश्चय किया जाता है कि यह मनुष्य राजा है, वैसे ही काव्यके अक्षरसंहति आदि लक्षणों से काव्य के स्वरूप का निश्चय किया जाता है। काव्यके लक्षण ( ज्ञापक चिह्न ) बहुत होते हैं। उनमें से यहाँ कतिपय लक्षणों का उल्लेख किया जाता है। अक्षरसंहतिलक्षणका स्वरूप देखिए—जहाँ थोड़े शब्दों से बहुत से चमत्कारी अर्थ की प्रतीति हो वहाँ अक्षरसंहति लक्षण होता है। 'उषाकान्त' यह श्लोकार्ध इसका उदाहरण है। उषा के पति अनिरुद्धसे अनुगत शूर ( यादव विशेष ) के वंशज भी भगवान् कृष्ण शूर ( यादव विशेष और श्लेषालङ्कार से वीर ) ही हैं। यहाँ शूरपदके वीर और यादव ये दोनों अर्थ हैं। अर्थात् उषा और अनिरुद्धके विवाह में बाणासुरको जीतनेवाले भगवान् कृष्ण बड़े पराक्रमी हैं। उषाकान्त ( अनिरुद्ध ) से अनुगत इस विशेषण से भगवान् श्रीकृष्णकृत बाणासुरदमन का पराक्रम स्मृतिपथ में आ जाता है। अतः यहाँ थोड़े अक्षरों से बहुत बड़ी चमत्कारिक भगवान् कृष्णकी कथा का स्मरण आने से अक्षरसंहति लक्षण है। बलिराजा के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शोभा ख्यातोऽपि यद्दोषो गुणकीर्त्त्या निषिध्यते ।
मुधा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते ॥ २ ॥

बह्वर्थप्रत्यायकत्वादत्राक्षरसंहतिः काव्यलक्षणम् । बलिपुत्रो बाणासुरः शोणितपुरे राज्यं चकार । तस्य पुत्रीमुषां कृष्णपौत्रोऽनिरुद्धः स्वयमुपयेमे । तेन बाणासुरश्रीकृष्णयोर्महद् युद्धं बभूव । बाणासुरभक्तिवशीभूतो भगवान् श्रीशङ्करोऽपि तत्रागतः श्रीकृष्णेन पराजितश्च । ज्वररोगसमुत्पत्तिरपि प्रथमं तस्मिन्नेव युद्धे जाता । श्रीकृष्णश्च विजयी बभूवेति महतीयं कथा भागवतदशमस्कन्धे ६२–६३ अध्याययोर्द्रष्टव्या । इयं समासोक्तिभिदेति कश्चित् ॥ १ ॥

शोभालक्षणमाह—शोभेति । ख्यातोऽपि विदितोऽपि । यस्य दोषः, यद्दोषः । गुणानां कीर्त्त्या कथनेन निषिध्यते निवार्यते सा शोभा । गुणप्रदर्शनेन प्रसिद्धदोषनिवारकत्वं शोभात्वम् । उदाहरणं व्याचष्टे—मुधेति । यत्र संसारे कंसारिः सर्वपापप्रणाशको भगवान् कृष्णः पूज्यते सत्क्रियते तं संसारं जना मुधा व्यर्थमेव निन्दन्ति । कृष्णपूजाश्रयः संसारो न निन्दनीय इति भावः । बहुविधदोषास्पदस्य संसारस्य श्रीकृष्णपूजनरूपगुणकीर्तनेन तद्दोषापाकरणात्तत्र शोभालक्षणम् ॥ २ ॥

---

पुत्र बाणासुर शोणितपुरमें राज्य करता था । इस बाणासुर की अनुमति के बिना ही इसकी पुत्री उषा के साथ भगवान् श्रीकृष्ण के पौत्र अनिरुद्ध ने विवाह कर लिया । इस कारण बाणासुर और भगवान् श्रीकृष्णका आपसमें बहुत बड़ा युद्ध हुआ और इस युद्ध में बाणासुर की तरफ से आये हुये भगवान् शङ्कर पर भी श्रीकृष्ण ने विजय प्राप्त की । सर्वप्रथम ज्वररोगकी उत्पत्ति भी इसी युद्ध में हुई । कृष्ण की इस युद्धमें विजय हुई । यह बहुत लम्बी कथा श्रीमद्भागवत के दशमस्कन्धमें के ६२–६३ अध्यायों में देखनी चाहिए । इस अक्षरसंहति को कोई समासोक्ति भी कहते हैं ॥ १ ॥

शोभालक्षणका स्वरूप यह है—जहाँ दोषयुक्त भी पदार्थको किसी एक गुण के सम्बन्ध से निर्दोष बतलाया जावै वहाँ शोभा लक्षण माना गया है । 'मुधा निन्दन्ति' यह इसका उदाहरण है । जहाँ कंसारि भगवान् श्रीकृष्ण की पूजा की जाती है उस संसार को व्यर्थ ही निन्दा की जाती है । अर्थात् श्रीकृष्ण की पूजा का स्थान संसार निन्दनीय नहीं हो सकता । यहाँ दुःखमय संसार को श्रीकृष्ण पूजारूपी गुण के कथन से निर्दोष बतलाया । अतः शोभा लक्षण जानना चाहिये ॥ २ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अभिमानो विचारश्चेदूहितार्थनिषेधकृत् ।
इन्दुर्यदि कथं तीव्रः सूर्यो यदि कथं निशि ॥ ३ ॥
हेतुस्त्यक्त्वा बहून् पक्षान् युक्त्यैकस्यावधारणम् ।
नेन्दुर्नार्कोऽयमौर्वाग्निः सागरादुत्थितो दहन् ॥ ४ ॥

अभिमानमाह—अभीति। चेद् यदि। ऊहितस्तर्कितश्चासावर्थश्चेत्यूहितार्थस्तस्य निषेधं प्रतिषेधं करोतीति तथोक्तः। विचारो विवेचनं स्यात्तदाभितः सर्वतो मानोऽभिमानो भवति । कल्पितार्थप्रतिषेधकहेतूपन्यासकत्वमभिमानत्वम् । उपपत्त्या कल्पितार्थनिषेध इति यावत्। उदाहरणं व्याचष्टे–इन्दुरिति। काचिद् विरहिणी रात्रौ सन्तापजनकं चन्द्रं विलोक्य मनसि चिन्तयते। यदि असाविन्दुश्चन्द्रस्तदा तीव्रस्तीक्ष्णः कथं प्रतीयते। तीक्ष्णत्वान्नायं चन्द्रः। यदि तीव्रत्वादयं सूर्यः संभाव्येत तदा स निशि रात्रौ कथं भासते। अतः सूर्योऽपि नास्ति। अत्र वियोगिन्या चन्द्रत्वेन तर्कितश्चन्द्रः, पुनः स संतापकतया निषिद्धः, ततश्च सूर्यत्वेनोहितो रात्रिसत्तया प्रतिषिद्ध इति तस्या विचारः कल्पितार्थप्रतिषेधकस्तेनात्राभिमानलक्षणं ज्ञेयम् ॥ ३ ॥

हेतुलक्षणमाह—हेतुरिति। युक्त्योपपत्त्या बहूननेकान् पक्षान् सिद्धान्तान् त्यक्त्वा विहाय युक्त्योपपत्त्यैकस्य सिद्धान्तस्यावधारणं निश्चयो हेतुः। युक्त्येति पदं मध्यमणिन्यायेन देहलीदीपन्यायेन वोभयत्र संबद्धम्। अन्यपक्षनिराकरणपुरःसरैकपक्षावधारणत्वं हेतुत्वम्। उदाहरणं नेन्दुरिति। विरहिणी सन्तापजनकं चन्द्रं विलोक्य चिन्तयति। अयं सागरादुत्थितः समुद्रोत्पन्नः। इन्दुश्चन्द्रो नास्ति। न चायं दहन्

अभिमान का स्वरूप यह है—विचार में आई हुई कल्पना का युक्तिपूर्वक खण्डन करना अभिमान कहा जाता है। 'इन्दुर्यदि' यह इसका उदाहरण है। कोई वियोगिनी रात्रि में संताप के देनेवाले चन्द्रमाको देखकर अपने मनमें विचार करती है। यह तापजनक है इसलिये चन्द्रमा इसे नहीं कह सकते। यदि तापक होने के कारण ही इसे सूर्य कहें तो यह रात्रि में कैसे प्रकाशमान है। यहाँ पहिले विरहिणी ने संतापक होने के कारण चन्द्रमा में सूर्य बुद्धि की, पुनः रात्रिमें प्रकाशित होने से सूर्यपने का भी खण्डन कर दिया। अतः अभिमान लक्षण जानना चाहिए ॥ ३ ॥

हेतु का स्वरूप यह है—युक्ति से अनेक मतों की कल्पना करके पुनः युक्ति से ही एक सिद्धान्त के निश्चय करने को हेतु कहते हैं। 'नेन्दुर्नार्को' यह इसका उदाहरण है। वियोगिनी कामिनी संतापकारक चन्द्रमा को देखकर विचार

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।
न युद्धेन भ्रुवोः स्पन्देनैव वीरा निपातिताः ॥ ५ ॥

---

ज्वलन् अर्कः सूर्यः । अपितु और्वाग्निर्वडवाग्निरेव । यतोऽयं सागरादुत्थितो दहंश्च । समुद्रोत्पन्नोऽपि चन्द्रो ज्वलन् न भवति । सूर्यश्च ज्वलति किन्तु सागरान्नोत्पन्नः, अत्र तु धर्मद्वयं वर्तत इति वडवाग्निरेव । अत्र चन्द्रसूर्यार्थत्यागेन वडवाग्निनिर्णयः अतो हेतुलक्षणम् । अन्येषां मते स्वयमपह्नुतिभेदः ॥ ४ ॥

प्रतिषेधमाह—प्रतिषेध इति । प्रसिद्धानां विदितानां कारणानां हेतूनाम् अनादरोऽग्रहणम् । प्रसिद्धकारणापाकरणेनाप्रसिद्धकारणादरत्वं प्रतिषेधत्वम् । उदाहरणं न युद्धेनेति । कामिन्या वीरा युद्धेन न निपातिता अपि तु भ्रुवोः स्पन्देनैव चालनेनैव ते पातिताः । यद्वा कोऽपि वीरो युद्धेन न, किन्तु भ्रुकुटिचालनमात्रेणैव भटान् निपातितवान् । विजये प्रसिद्धं युद्धमेव निमित्तम् । तदनाश्रयणेनाप्रसिद्धभ्रुकुटिस्पन्दनं विजये निमित्तमादृतमिति प्रतिषेधः । हेत्वपह्नुतिभेद इति कश्चित् ॥ ५ ॥

---

करती है । यह सागर से उत्पन्न हुआ चन्द्रमा नहीं है तथा ताप करता हुआ (जलाता हुआ) सूर्य भी नहीं है किन्तु वाडवाग्नि है । क्यों कि यह (चन्द्रमा) सागर से उत्पन्न हुआ है और मुझे संतप्त भी कर रहा है । ये दोनों धर्म इसमें वर्तमान हैं । चन्द्रमा समुद्रसे उत्पन्न हुआ है किन्तु वह शीतल होता है । सूर्य उतप्त करता है किन्तु वह समुद्र से उत्पन्न नहीं हुआ । उक्त दोनों धर्म चन्द्रमा तथा सूर्य में नहीं मिलते अतः यह दृश्यमान (चन्द्रमा) पदार्थ वाडवाग्नि है । यहाँ चन्द्रमा तथा सूर्यरूपी अपने दोनों मतों का त्याग करके एक तीसरे ही सिद्धान्त (वाडवाग्नि) का निश्चय करने से हेतु लक्षण माना है । इसे कोई-कोई विद्वान् अपह्नुति अलङ्कार कह देते हैं ॥ ४ ॥

प्रतिषेध का स्वरूप देखिए—जहाँ किसी कार्य की सिद्धि में प्रसिद्ध कारणों का अनादर करके अप्रसिद्ध कारण से कार्य-सिद्धिका वर्णन किया जावे वहाँ प्रतिषेध माना जाता है । 'न युद्धेन' इसका उदाहरण है । कामिनी ने युद्ध से नहीं, अपि तु भ्रुकुटि के चालन (कटाक्ष) से ही वीरों को गिरा दिया । विजयरूप कार्य की सिद्धि में युद्ध ही उपयुक्त साधन माना जाता है । यहाँ उस युद्ध का अनादर करके केवल कामिनी के कटाक्षमात्र से वीरनिपातनरूप कार्य की सिद्धि बतलाई अतः प्रतिषेध है । इसे कोई हेत्वपह्नुति भी कह देते हैं ॥ ५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथाऽनृतम् ।
ईदृशैश्चरितै राजन् सत्यं दोषाकरो भवान् ॥ ६ ॥
स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।

निरुक्तमाह—निरुक्तमिति । सत्यं तथाऽनृतं मिथ्या यत्र नाम्नः संज्ञाशब्दस्य निर्वचनं व्युत्पत्त्यर्थप्रकाशनं स्यात्तदा निरुक्तं भवति । सत्यासत्यतया नाम्नो निर्वचनत्वं निरुक्तत्वम् । यत्र नामनिर्वचनं व्याकरणसाध्यं तत्र सत्यम् । व्याकरणासाध्यं च मिथ्या । उदाहरणं व्याचष्टे—ईदृशैरिति । हे राजन् ! भवान् ईदृशैर्निर्मलैरनुचितैर्वा चरितैराचरणैः । सत्यं दोषाकरश्चन्द्रः दोषास्पद इति वा । अत्र चन्द्रपक्षे दोषाकरो रात्रिकर इति, राजपक्षे दोषाणामाकर इति च सत्यं नामनिर्वचनम् व्याकरणसिद्धत्वात् । अत्र कृञ इति टः । राजत इति राजा । 'राजृ दीप्तौ' इत्यस्य रूपम् । 'राजा प्रकृतिरञ्जनात्' इति न्यायेन तदसाध्यत्वान्मिथ्यानिर्वचनम् । अतोऽत्र निरुक्तम् । यत्रान्वर्थं नामनिर्वचनं तत्र सत्यम् , निरर्थकं नामनिर्वचनं च मिथ्येति तत्त्वम् ॥ ६ ॥

मिथ्याध्यवसायत्वमाह—स्यादिति । साध्यं साधनं च साध्यसाधने । असती मिथ्याभूते स्यातां तदा मिथ्याध्यवसायः स्यात् । साध्यसाधनमिथ्यात्वं मिथ्या-

---

निरुक्त का यह लक्षण है—जहाँ सत्य तथा मिथ्या रूप से पदों का व्युत्पत्त्यर्थ बतलाया जावै वहाँ निरुक्त होता है । व्याकरण से व्युत्पत्ति होने पर सत्य निरुक्त होता है और व्याकरण के अलावा किसी अन्य युक्ति से व्युत्पत्त्यर्थ बतलाने को मिथ्यानिरुक्त कहते हैं । 'ईदृशैश्चरितैः' इन दोनों का उदाहरण है । कोई कवि प्रकारान्तरसे किसी राजा का वर्णन करता हुआ कहता है कि हे राजन् ! ऐसे ( निर्मल तथा अनुचित ) आचरणों से आप सच्चे ही दोषाकर ( चन्द्रमा और दोषों के स्थान ) हैं । यहाँ दोषाकर शब्द की चन्द्रमा के पक्ष में दोषा याने रात्रि को करने वाला और राजा के पक्ष में दोषों का स्थान ये दोनों व्युत्पत्तियां व्याकरण से होती हैं अतः सत्य निरुक्त है । 'राजा प्रकृतिरञ्जनात्' । जो प्रजा को प्रसन्न रखै वह राजा होता है यह राजा शब्दकी व्युत्पत्ति प्रजा को प्रसन्न न करने के कारण व्याकरण से सिद्ध नहीं होती अतः उक्त राजन् शब्द का निर्वचन यहां मिथ्या निरुक्त है ॥ ६ ॥

मिथ्याध्यवसाय का स्वरूप देखिए— जहाँ कार्य और कारण की मिथ्या कल्पना करके कार्यसिद्धिका वर्णन किया जावै वहाँ मिथ्याध्यवसाय जानना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥ ७ ॥
सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥ ८ ॥
युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।

---

ध्यवसायत्वम् । उदाहरणं चन्द्रेति । चन्द्रस्यांशव एव सूत्राणि तैर्ग्रथितां निर्मिताम्। नभःपुष्पाणामाकाशकुसुमानां स्रजं मालां वह धारय। अत्र चन्द्रकिरणसूत्रग्रथनं साधनम् । आकाशपुष्पमाला कार्यम् । एते द्वे अपि मिथ्याभूते । तेनात्र मिथ्याध्यवसायो लक्षणम् ॥ ७ ॥

सिद्धिमाह—सिद्धिरिति । यदि ख्यातेषु प्रसिद्धेषु तुल्यतोक्तये सादृश्यप्रतिपादनाय । नाम कीर्त्यते कथ्यते तदा सिद्धिः । तुल्यताप्रत्यायकप्रसिद्धपदार्थसाहचर्यप्रदर्शनत्वं सिद्धित्वम्। उदाहरति—युवामिति। हे राजन् ! इह लोके त्वं बलैः, जलधिः सागरो जलैर्नीरैः । युवामेव विख्यातौ प्रसिद्धौ । अत्र प्रसिद्धिप्रतिपादनायागाधनीरपूरभृततया प्रसिद्धेन जलधिना सह राज्ञो वर्णनं कृतमिति सिद्धिर्लक्षणम् । यद्यपि राज्ञो नामधेयकीर्तनावश्यकतात्र तथापि त्वमितिपदेन तस्या निर्वाहः कार्यः । इयं तुल्ययोगितान्तर्गतेति केचित् ॥ ८ ॥

युक्तिमाह—युक्तिरिति । यदा अन्योऽर्थोऽर्थान्तरम् । विचित्रं च तद् अर्थान्तरं

---

चाहिए । 'चन्द्रांशुसूत्रग्रथिताम्' इसका उदाहरण देखिए । चन्द्रमाकी किरणरूपी सूत्र ( डोरे ) में गुथी हुई आकाशरूपी पुष्पों की माला को आप धारण करें । चन्द्रमा के किरणरूपी सूत्र ( डोरे ) कारण हैं और आकाशरूपी पुष्पों की माला कार्य है । ये दोनों कार्यकारण ही स्वाभाविक नहीं हैं अपि तु कल्पनात्मक ( मिथ्याभूत ) हैं अतः यह मिथ्याध्यवसाय का उदाहरण है ॥ ७ ॥

सिद्धि का स्वरूप देखिये—उत्कर्ष बतलाने के लिये गुणों से विख्यात पदार्थ के साथ जहां किसी का वर्णन किया जावे वहां सिद्धि होती है । इसका उदाहरण 'युवामेवेह०' यह श्लोकार्ध है । हे राजन् ! इस संसार में आप बल से और समुद्र जल से एवं आप दोनों ही विख्यात हैं । यहां उत्कर्ष बतलाने के लिये अगाध व अनन्त जल की पूर्णता से प्रसिद्ध समुद्र के साथ राजा के बल का वर्णन किया गया है । अतः सिद्धि माना जाता है । इसे कोई तुल्ययोगिता के अन्तर्गत मान लेते हैं ।

युक्ति का लक्षण यह है । उत्कृष्ट धर्म के सम्बन्ध से उपमान में उपमेय की

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नवस्त्वं नीरदः कोऽपि स्वर्णैर्वर्षसि यन्मुहुः ॥ ९ ॥
कार्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथ वा ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १० ॥

---

चेति विचित्रार्थान्तरं तस्यान्वयः सम्बन्धस्तस्मात् चमत्कृतार्थसम्बन्धात् । विशेषसिद्धिर्विशेषतापादानं स्यात्तदा युक्तिर्भवति । चमत्काराधायकविचित्रार्थसम्बन्धेन विशेषार्थसाधनं युक्तित्वम् । उत्कृष्टधर्मसम्बन्धेनोपमानापेक्षयोपमेये विशेषतासाधनं तत्त्वमिति यावत् । उदाहरति—नव इति । हे राजन् ! त्वं कोऽपि नवो नूतनः। नीरदो मेघोऽसि । यत् त्वं मुहुः स्वर्णैः सुवर्णैः सुजलैः सह । जलं वर्षसि । सुवर्णदाने सङ्कल्पजलमपि वितीर्यते इति जलवर्षावर्णनमपि समुचितम् । अत्रोपमेये वर्णनीये नृपे सुवर्णवृष्टिप्रतिपादनेन प्रसिद्धनीरदापेक्षया नवनीरदरूपविशेषधर्मसिद्धिरित्यत्र युक्तिर्लक्षणम् । इयं व्यतिरेकालङ्कारान्तर्गतेति कश्चित् ॥ ९ ॥

कार्यमाह—कार्यमिति । चेद् यदि । अन्यदीयव्यापारात् कार्यात् । अथवा अन्यदीयवस्तुतः स्वरसतः । स्वत इति यावत् । अन्यत्र फलोपलम्भः फलप्राप्तिः स्यात्तदा कार्यं लक्षणं भवति । स्वाभाविकास्वाभाविकान्यतरकार्यजन्यफलोपलम्भत्वं कार्यत्वम् । द्वयोरुदाहरणं व्याचष्टे—असाविति । असौ दृश्यमानः । शीतांशुश्चन्द्रः । सुभ्रुवां कान्तानां मानच्छेदाय माननिरसनाय । उदेति—उद्गच्छति । अत्र चन्द्रोदय-

---

अपेक्षा किसी चमत्कारी अर्थ की सिद्धि होने पर युक्ति होती है । 'नवस्त्वं नीरदः कोऽपि' यह इसका उदाहरण है । हे राजन् ! आप कोई अद्भुत मेघ हैं कि जो बार २ सुवर्ण की वृष्टि करते हैं । दान करने के समय संकल्प का जल भी दिया जाता है अतः सुवर्ण के साथ जल वर्षा का वर्णन भी राजा में घटता है । यहां उपमेयभूत राजा में सुवर्ण-वृष्टि का वर्णन करके प्रसिद्ध मेघों से राजा में अद्भुत मेघरूपी विशेषता का साधन किया । अतः युक्ति लक्षण मानना चाहिये । इसे कोई विद्वान् व्यतिरेकालंकार कह देते हैं ॥ ९ ॥

कार्य का स्वरूप यह है—एक पदार्थ के कार्य से अथवा उसकी स्वाभाविक-चेष्टा से जहां दूसरी जगह फल की सिद्धि हो वहां कार्य माना गया है । 'असावुदेति' इसका उदाहरण है । कामिनियों का मान भङ्ग करने वाला यह चन्द्रमा उदित होता है । यहां चन्द्रमा के उदयरूपी कार्य से कामिनी का मानभङ्ग बतलाना एक पदार्थ ( चन्द्रमा ) के कार्य से दूसरी जगह ( कामिनी में ) फल ( मानभङ्ग ) की प्राप्तिरूप प्रथम भेद का उदाहरण है । तथा मानभङ्ग से नायक का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यादि लक्षणं भूरि काव्यमाहुर्महर्षयः ।
स्वर्णभ्राजिष्णुभालत्वप्रभृतीव महीभुजः ॥ ११ ॥

---

रूपव्यापारेणान्यत्र कामिन्यां मानच्छेदवर्णनमिति व्यापारेण मानच्छेदफलं प्रथमो भेदः । मानच्छेदेन नायककार्यसिद्धिरिति स्वतः फलप्राप्तिर्द्वितीयो भेदः । इदं परिणामालङ्कारान्तर्गतमिति केचित् ॥ १० ॥

उपसंहरति—इत्यादीति । महीभुजो राज्ञः । स्वर्णवत्सुवर्णवद् भ्राजिष्णुर्देदीप्यमानश्चासौ भालो ललाटश्चेति तथोक्तः । तस्य भावस्तत्त्वं तत्प्रभृतीव काञ्चनतेजस्विललाटत्वादीव । इत्यादि पूर्वोक्तं काव्यस्य लक्षणं चिह्नं भूरि बहु महर्षय आहुः कथयन्ति । यथा|भरतनाट्यशास्त्रे १६ अध्याये-विभूषणम्, अक्षरसंगतिः, शोभा, अभिमानः, गुणकीर्तनम्, प्रोत्साहनम्, उदाहरणम्, निरुक्तम्, गुणानुवादः, अतिशयः, हेतुः, सारूप्यम्, मिथ्याध्यवसायः, सिद्धिः, पदोच्चयः, आक्रन्दः, मनोरथः, आख्यानम्, वादः, प्रतिषेधः, पृच्छा, दृष्टाङ्गम्, निर्भासनम्, संशयः, आशीः, प्रियम्, कपटम्, क्षमा, प्राप्तिः, पश्चात्तपनम्, अर्थानुवृत्तिः, उपवृतिः, युक्तिः, कार्यम्, नीतिः, परिदेवनं चेति लक्षणानि षट्त्रिंशदुक्तानि । ( १—५७ श्लोकाः )

यथानेकानि राजचिह्नानि भवन्ति तथैव काव्यलक्षणान्यपि भूयांसि वर्त्तन्ते । मयात्वत्र परिगणनाभावात् स्तोकान्येव दर्शितानीति विज्ञेयम् । लक्षणसङ्कलनेयम्—अक्षरसंहतिः, शोभा, अभिमानम्, हेतुः, प्रतिषेधः, निरुक्तम्, मिथ्याध्यवसायः, सिद्धिः, युक्तिः, कार्यं चेति दश लक्षणानि ॥ ११ ॥

---

कार्य अपने आप ही वन जाता है। इस स्वाभाविक ( मानच्छेदरूप ) कार्य से नायक का कार्य बन जाना दूसरे भेद का उदाहरण है। इसे कोई-कोई परिणामालंकार के अन्तर्गत मानते हैं ॥ १० ॥

कवि लक्षणों के वर्णन का उपसंहार करता है। सुवर्ण के समान देदीप्यमान ललाट का होना आदि अनेक चिह्न जिस प्रकार चक्रवर्ती राजाके बोधक होते हैं, उसी प्रकार काव्यमर्मज्ञ महर्षियों ने काव्य के भी अनेक चिह्न ( लक्षण ) वतलाये हैं। संस्कृत टीका में भरत नाट्यशास्त्रोक्त छत्तीस लक्षणों के नाम लिखे गये हैं। अक्षरसंहति, शोभा, अभिमान, हेतु, प्रतिषेध, निरुक्त, मिथ्याध्यवसाय, सिद्धि, युक्ति और कार्य ये दस लक्षण यहाँ वतलाये गये हैं ॥ ११ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
तृतीयस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १२ ॥

इति चन्द्रालोकालङ्कारे लक्षणनिरूपणो नाम तृतीयो मयूखः ।

## चतुर्थो मयूखः

अथ गुणाः—

श्लेषो विघटमानार्थघटमानत्ववर्णनम् ।

---

तृतीयमयूखसमाप्तिं प्राह—महादेव इति । सत्रेति प्रथममयूखोक्तः षोडश-श्लोक एवात्रापि ज्ञेयः । तत्र तृतीयपादांशः 'तृतीयस्तेनासौ' इत्यनेन परिवर्तनीयः । अन्यत्पूर्ववत् ॥ १२ ॥

इति श्रीजयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन वेदान्तभूषणोपाधिविभूषितेन भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीयप्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमिति जुषा जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायास्तृतीये मयूखे पर्यवसानम् ॥ ३ ॥

काव्यलक्षणे निर्दिष्टानां गुणानां स्वरूपं वक्तुमुपक्रमते—अथेत्यादिना । गुण्यन्त इति गुणाः । यथा शरीरे शौर्यादयो गुणा आत्मधर्मास्तथैव काव्ये आत्मभूत-

---

कवि तृतीय मयूख की समाप्ति बतलाता है—'महादेवः सत्रप्रमुख०' इत्यादि प्रथम मयूखके सोलहवें श्लोक के तृतीय पादमें 'तृतीयस्तेनासौ' इस परिवर्तनसे तृतीय मयूखकी समाप्ति कर लेनी चाहिए ॥ १२ ॥

कथाभट्टनन्दकिशोरशर्मसाहित्याचार्यकृत कथाभट्टीया नामक हिन्दी व्याख्यामें चन्द्रालोक का तृतीय मयूख समाप्त हुआ ।

कवि काव्यमें बतलाये हुए गुणों का निरूपण करता है—जैसे मनुष्यके शौर्यादिक गुण आत्मनिष्ठ माने जाते हैं वैसे ही काव्यमें माधुर्यादिक गुण

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याङ्गिनो रसस्य धर्मा गुणाः शब्दार्थयोः परम्परया वर्त्तन्त इति परिष्कृतः पन्थाः । वामनादयस्तु गुणानां शब्दार्थनिष्ठतामवदन् । तच्चाधुना न स्वीक्रियते । गुणसामान्यलक्षणं तु—

'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' ॥

इति काव्यप्रकाशे दर्शितम् । रसवृत्तित्वे सत्युत्कर्षहेतुत्वं गुणत्वम् भरतमुनीनां नाट्यशास्त्रे दश गुणाः प्रतिपादिताः—

'श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा दशैते' ॥

( १६ अ. ९२ श्लोकः ) ।

एवं भामहदण्डिवामनरुद्रटादिभिरपि । भोजराजेन सरस्वतीकण्ठाभरणे तु चतुर्विंशतिगुणा उक्ताः । तेषु दश नाट्यशास्त्रोक्ता एव । इतरे त्वेते-उदात्तता, और्जित्यम् , प्रेयः, सुशब्दता, सौक्ष्म्यम् , गाम्भीर्यम्, विस्तरः, संक्षेपः सम्मितत्वम् , भाविकम् , गतिः, रीतिः, उक्तिः, प्रौढिः इति । एते गुणाः शब्दार्थयोरेव धर्माः ।

---

अङ्गीभूत आत्मस्थानापन्न, शृङ्गारादि रसों के धर्म माने गये हैं । ये माधुर्यादि गुण रस के साक्षात् धर्म हैं और परम्परया ( शब्दार्थद्वारा रसव्यंजक होने के कारण ) शब्दार्थ के धर्म काव्यप्रकाशादि में माने गये हैं । वामनादि आचार्यों ने तो गुणों को साक्षात् शब्द और अर्थ के धर्म माने हैं । यह मत इस समय नहीं माना जाता । काव्यप्रकाशमें गुण का लक्षण यह माना गया है । जैसे शौर्य-दया आदि गुण शरीरके धर्म नहीं होते किन्तु आत्माके ही धर्म होते हैं । वैसे ही उत्कर्ष के कारण अविनाभाव ( अवश्य ) सम्बन्धसे रहनेवाले माधुर्यादिक गुण होते हैं । भरत मुनि ने नाट्यशास्त्रमें निम्नलिखित दश गुण माने हैं—श्लेष, प्रसाद, समता, समाधि, माधुर्य, ओज, सौकुमार्य अर्थव्यक्ति, उदारता और कान्ति ( १६ अ० ९२ श्लोक ) । इन्हीं दश गुणों को मम्मट, दण्डी, वामन, रुद्रट आदि आचार्यों ने अपने २ ग्रन्थोंमें स्थान दिया है । महाराज भोज ने अपने ग्रन्थ सरस्वतीकण्ठाभरणमें चौवीस गुण लिखे हैं । इनमें दश गुण ऊपर लिखे और चौदह ये हैं—उदात्तता, और्जित्य, प्रेय, सुशब्दता, सौक्ष्म्य, गाम्भीर्य, विस्तर, संक्षेप, संमितत्व, भाविक, गति, रीति, उक्ति और प्रौढि । ये चौवीस गुण

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काव्यप्रकाशादिभी रसधर्मा गुणा उक्ताः, ते च माधुर्यम्, ओजः, प्रसाद इति त्रय एव स्वीकृता न पुनर्दश चतुर्विंशतिर्वा। एषां व्यञ्जिका रचना रचनापवादश्च दर्शितः। एतदेव च मतमधुना सत्क्रियते। उक्तेषु दशगुणेषु भोजराजोक्तगुणानामन्तर्भावः। दशगुणेषु केषाञ्चिच्च माधुर्यौजःप्रसादेष्वन्तर्भावः केचिच्च दोषाभावरूपाः। यथा— श्लेषः, समाधिः, औदार्यम्, प्रसादः, ओजश्चैते ओजसि; माधुर्यं माधुर्ये; अर्थव्यक्तिः प्रसादे चान्तर्गताः, ग्राम्यदोषाभावः कान्तिः, श्रुतिकटुदोषाभावः सुकुमारता, समता च क्वापि दोषः, क्वापि चास्या उक्तगुणान्तर्भावः। अर्थगुणेषु—ओजःप्रसादमाधुर्यसौकुमार्योदारतागुणा अपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्यदोषाभावरूपाः। अर्थव्यक्तिः स्वभावोक्तिरलङ्कारे, कान्तिश्च रसध्वनिगुणीभूतव्यङ्ग्यादावन्तर्गतौ, श्लेषसमाधी वैचित्र्यमात्रद्योतकौ समता च दोषाभावरूपा। रसगङ्गाधरे तु 'आत्मनो निर्गुणत्वात्तत्र गुणानां स्थितिरनुचिते'ति प्रोक्तम्। तन्न, वेदान्तेऽपि

---

शब्द और अर्थ के ही धर्म माने गये हैं। काव्यप्रकाशादिक ग्रथों में जो गुण रसके धर्म माने गये हैं वे माधुर्य, ओज, प्रसाद, ये तीन ही हैं? न तो दश हैं और न चौबीस। इन तीनों गुणों के प्रकाशक शब्द वा अर्थ का विन्यास और कहीं कहीं उसका अपवाद भी बतलाया है। यह ही सिद्धान्त आजकल माना जा रहा है। भोजराज के चौबीस गुण का नाट्यशास्त्रके दश गुणों में अन्तर्भाव हो जाता है। नाट्यशास्त्र के दश गुणों में से कतिपय गुण माधुर्य, ओज, प्रासाद इन तीन गुणों के अन्तर्गत होते हैं और कतिपय दोषाभावरूप ही माने गये हैं। शब्दगुणों में से श्लेष, समाधि, औदार्य, प्रसाद, और ओज ये पाँच गुण ओज गुण में; माधुर्य माधुर्य में; अर्थव्यक्ति प्रसादमें अन्तर्गत हो जाते हैं। कान्ति गुण ग्राम्यदोष का अभावरूप है श्रुतिकटुदोषका अभाव सुकुमारता है और समता तो कहीं कहीं दोष ही बन जाती है। अर्थगुणों में से ओज, प्रसाद, माधुर्य, सौकुमार्य, उदारता गुण क्रमसे अपुष्टार्थ, अधिकपद, अनवीकृत, अमङ्गलजनक, अश्लील और ग्राम्यदोषों के अभावमात्र हैं। अर्थव्यक्ति का स्वभावोक्ति अलङ्कार में और कान्तिका रस, ध्वनि, गुणीभूतव्यङ्ग्य में अन्तर्भाव हो जाता है। श्लेष और समाधि वैचित्र्यमात्रद्योतक तथा समता गुण दोषाभावरूप माने गये हैं। रसगंगाधरकार पण्डितराज जगन्नाथने काव्यप्रकाशपर यह आक्षेप किया है कि आत्मा निर्गुण माना गया है अतः आत्मा में गुणों की सत्ता बतलाना अनुचित है। यह पण्डितराजका कहना अनुचित है। क्योंकि वेदान्त में भी व्यावहारिक आत्माको सगुण ही माना है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स तु शाब्दः सजातीयैः शब्दैर्बन्धः सुखावहः ॥ १ ॥

व्यावहारिकस्यात्मनः सगुणत्वात् । अत एव न्याये वैशेषिके चात्मनो गुणा इच्छा-द्वेषादयः स्वीक्रियन्ते । गुणानां रसधर्मत्वाभावस्वीकारे च गुणालङ्कारयोर्भेदको हेतुरपि नावशिष्यते । द्वयोरेव काव्योत्कर्षाधायकत्वात् । तेन गुणा रसधर्मा एव । अस्मिन्ग्रन्थेऽपि 'अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा' (४ मयू० १० श्लो०) इत्यनेन शौर्यादीनामात्मधर्मतेव गुणानां रसधर्मतापि सूचिता । अधिकं तु 'गुणानां रसधर्मत्वम्' इत्याख्ये मदीयनिबन्धे द्रष्टव्यम् । निबन्धोऽयं काशीप्रकाशितसुप्रभाताख्ये मासिकपत्रे १९२९ ई० वर्षीय जोलाई—अगस्तमासे मुद्रितः ।

अस्मिन् ग्रन्थे त्वष्टौ गुणाः प्रतिपादितास्तेषु प्रथमं श्लेषमाह—श्लेष इति ( ७८ पृष्ठे )। विघटमानस्यासंभविनोऽर्थस्याभिधेयस्य घटमानस्य भावो घटमानत्व संभवित्वं तस्य वर्णनं प्रतिपादनमर्थश्लेषः। असंभविनोऽर्थस्य युक्त्या संभवित्वप्रतिपादनमर्थश्लेषः । सजातीयैः समानाकारैः शब्दैः पदैः सुखावहश्चमत्कारी बन्धः पदरचना तु स शब्दश्लेष इति भावः । सजातीयशब्दजन्यसुखावहबन्धत्वं शब्दश्लेषत्वम् । बहूनां पदानामेकपदवद्भासनं वा शब्दश्लेषत्वम् ॥ १ ॥

इसी लिये न्याय और वैशेषिक शास्त्रमें इच्छा, राग, द्वेष प्रभृति गुण आत्मनिष्ठ माने हैं । यदि गुणों को रसका धर्म न मानकर शब्द -अर्थगत ही मान लें तो गुण और अलङ्कार में कोई भेद नहीं रह जाता । क्योंकि काव्य के उत्कर्षको बतलाने वाले अलङ्कार भी शब्द-अर्थ के ही धर्म माने जाते हैं । अतः गुण रसके ही धर्म हैं । ग्रन्थकार भी इसी मयूखके दसवें श्लोक में 'अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा' इससे गुणों को रसधर्म मानना चाहिए यह सूचना करेगा । इस विषयका विशेष आलोचन काशी से प्रकाशित सुप्रभात मासिकपत्र ( जौलाई—अगस्त १९२९ ई० ) में देखना चाहिए । यह गुणप्रकरणका सामान्य निरूपण हुआ है ।

इस ग्रन्थमें आठ गुण बतलाये हैं उनमें से प्रथम श्लेषका निरूपण किया जाता है । श्लेष दो प्रकार का है एक शब्दश्लेष और दूसरा अर्थश्लेष । जहाँ असंभव अर्थ को युक्ति से संभव बतलाया जावै वहाँ अर्थश्लेष होता है । और जहाँ संधि के कारण वा सजातीय पदों के कारण बहुत से पद एक पद के सदृश दीखते रहैं वहाँ शब्दश्लेष होता है ॥ १ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः ।
भीतया मानवत्यैव श्रियाऽऽश्लिष्ट हरिं स्तुमः ॥ २ ॥
यस्मादन्तःस्थितः सर्वः स्वयमर्थोऽवभासते ।
सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥ ३ ॥

---

शब्दार्थश्लेषयोरुदाहरणमाह—उल्लसदिति । अनन्ते शेषाख्यसर्पे सर्पराजे। पुलका लक्ष्मीरोमाञ्चा एव कण्टकास्तैः । उल्लसन्ती प्रकटीभूता चासौ तनुता च कृशता चेति ताम् । नीते प्रापिते सति । भीतया पुलककण्टकवेधभयेन भीतया। मानवत्यैव मानं प्रापितयैव । श्रिया लक्ष्म्या । आश्लिष्टमालिङ्गितम् । हरिं विष्णुम्। वयं स्तुमः । रोमाञ्चकण्टकैर्विद्धाच्छेषनागाद्भीता लक्ष्मीर्मानवत्येव हरिमालिलिङ्गेति भावः। मानवतीकृतालिङ्गनमसंभवि, तस्य पुलककण्टकविद्धशेषाहिजन्यभीतियुक्त्या संभवित्ववर्णनमित्यतोऽत्रार्थश्लेषः । नीतेऽनन्ते, श्रियाश्लिष्टमित्यादिवर्णानां साजात्यादेकपदवद्भानाद्वा शब्दश्लेषः स्फुट एव ॥ २ ॥

प्रसादमाह—यस्मादिति । यस्माद् यस्मात्कारणात् । सूक्तस्य काव्यस्यान्तःस्थितोऽन्तर्गतः सर्वः सकलोऽर्थः सलिलस्यान्तःस्थितः सर्वोऽर्थः पदार्थ इव स्वयमेवावभासते प्रकाशते स प्रसाद इति प्रसादाख्यगुणः स्मृतः कथितः प्राचीनैरिति शेषः । यथा स्वच्छजलेऽन्तर्गतं वस्तु बहिर्दृश्यते तथैव कवेरभिमतार्थस्य स्वयमेव

---

शब्द और अर्थ श्लेष का उदाहरण यह है—कामक्रीडा की इच्छा से उत्पन्न हुए लक्ष्मी के रोमाञ्चरूपी कण्टकों से शेषनाग ( भगवान् विष्णु की शय्या ) विद्ध हुआ । इस अपराध के कारण डरी हुई मानवती लक्ष्मी से आलिङ्गित विष्णु की हम स्तुति करते हैं । अर्थात् रोमाञ्चरूपी कण्टकों से विद्ध शेषनाग के भय से डरकर मानवती ही लक्ष्मी ने विष्णु का आलिङ्गन किया । मानवती नायिका का आलिङ्गन असम्भव है । उसे शेषनाग के भय से सम्भव बतलाया अतः यहां अर्थश्लेष है । 'नीतेऽनन्ते, श्रियाश्लिष्टम्' इत्यादिक पद समानता से वा सन्धि के कारण एक पद सदृश मालुम पड़ते हैं । अतः यह शब्दश्लेष का उदाहरण है ॥ २ ॥

प्रसाद गुण का स्वरूप यह है । जैसे स्वच्छ जल के अन्दर पड़ी हुई वस्तु स्वयमेव बाहर से दिखाई देती है उसी प्रकार काव्य में प्रतिपाद्य अर्थ बिना कठिनता वा प्रयास के जहां सरलता से जाना जावे वहां प्रसाद गुण होता है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

समतात्पसमासत्वं वर्णाद्यैस्तुल्यताऽथवा ।
श्यामला कोमला वाला रमणं शरणं गता ॥ ४ ॥

प्रकाशनं प्रसाद इति भावः । काव्यप्रकाशादिरसधर्मतावादिनां मते—अर्थो रसः तद्वभासकत्वं प्रसादत्वम् । शब्दार्थनिष्ठता त्वौपचारिकी प्रसादस्य । शब्दार्थयो- रसव्यञ्जकत्वात् । काव्यप्रकाशे प्रसादलक्षणं त्वेतत्—

'शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः' ॥ ( ८ उ० ७० )

सर्वरससाधारणत्वं चास्योक्तं काव्यप्रकाशटीकासारबोधिनीकारैः—

'समर्पकत्वं काव्यस्य यतः सर्वरसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः' ॥

अयं भावः—यदा विकासाख्यचित्तवृत्तिसमुत्पादकः प्रसादो वीररौद्रादिषु चित्तं व्याप्नोति तदा शुष्केन्धनाग्निवत् , यदा च श्रृङ्गारकरुणादिषु चित्तं व्याप्नोति तदा स्वच्छजलवत्स ज्ञेय इति । उदाहरणं त्वेतदेव पद्यम् । पद्यप्रतिपाद्यार्थस्य स्फुटतया स्वयंप्रकाशमानत्वात् ॥ ३ ॥

समतामाह–समतेति । अल्पश्चासौ समासश्चेत्यल्पसमासस्तस्य भावस्तत्त्वम् । दीर्घसमासाभावः समता । अथवा—वर्णाद्यैर्वर्णादिसंख्यासामान्येन पदादि तुल्यता वा समता । उभयोरुदाहरणं व्याचष्टे—श्यामलेति । श्यामा यौवनमध्यस्था सैव

---

गुणों को रसधर्म बतलानेवालों के मतमें जो रसोंका प्रकाश हो उसे प्रसाद कहते हैं। काव्यप्रकाश में प्रसाद का लक्षण यह बतलाया गया है—जैसे काष्ठ में अग्नि सब जगह व्याप्त हो जाती है। और स्वच्छ जल जैसे निर्मल वस्त्र में सब जगह व्याप्त हो जाता है उसी प्रकार जो चित्तमें सब जगह व्याप्त होता है वह प्रसाद गुण है। ( ८ उल्ला० ७० )। यह प्रसाद गुण सब रसों में रहता है। चित्त को विकसित करनेवाला प्रसाद गुण वीर-रौद्रादिक रसों में शुष्क काष्ठ में व्याप्त होनेवाली अग्नि के समान और श्रृङ्गार-करुणादिक रसों में स्वच्छ वस्त्र में प्रसृत होनेवाले निर्मल जल के समान माना गया है। इस श्लोक का अर्थ स्पष्ट प्रतीत होने से प्रसाद गुणका उदाहरण 'यस्यान्तः स्थितः' यह श्लोक ही है ॥ ३ ॥

समता गुण का स्वरूप यह है—जहाँ छोटे-छोटे समास हों अथवा पदों के अक्षरों की संख्या समान हो वहाँ समता होती है। इसका उदाहरण यह है कि सुकुमाराङ्गी युवती पति के निकट प्राप्त हुई। यहाँ समास नहीं है। अतः प्रथम


CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

समाधिरर्थमहिमा लसद्धनरसात्मना ।
स्यादन्तर्विशता येन गात्रमङ्कुरितं सताम् ॥ ५ ॥

---

श्यामला। कोमला सुकुमाराङ्गी बाला नवोढा। शरणं रक्षकं रमणं पतिं गता प्राप्ता। कामपीडिता मानं परित्यज्य तं प्राप्नोतीति भावः। अत्र दीर्घसमासाभावात्प्रथमलक्षणसमन्वयः। श्यामला, कोमला, रमणम्, शरणम्, इति पदचतुष्टये त्र्यक्षरत्वेन; बाला, गतेति पदद्वये द्व्यक्षरत्वेन पदतुल्यता। श्यामलेति प्रथमपादे आकारवर्णसाम्येन, रमणमिति द्वितीयपादे अकारवर्णसाम्येन च तुल्यता। ननु प्रथमलक्षणस्य पाञ्चालीरीत्यामन्तर्भावः। तत्राप्यल्पसमासस्येष्टत्वात्। तथा हि तल्लक्षणम्—'माधुर्यसौकुमार्योपपन्ना पाञ्चाली' इति वामन आह। तथा चैष श्लोकोऽपि—

'अश्लिष्टश्लथभावां तु पुराणच्छायया श्रिताम्।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः' ॥ इति ।

तन्न। पाञ्चाल्यां सर्वेष्वेव पादेषु समासाभावे तदुपस्थितिः। अत्र त्वेकपादेऽपि समासाभावे समतानिर्वाह इति द्वयोर्भेदलाभात्। द्वितीयं लक्षणं च नानुप्रासेऽतिप्रसक्तम्। अनुप्रासे केवलस्वरसाम्यस्याप्रयोजकत्वात् ॥ ४ ॥

समाधिमाह—समाधिरिति। लसन् प्रकाशमानो घनो निबिडश्चासौ रसश्चेति लसद्धनरसः स एवात्मा स्वरूपं यस्य स तेन। रसव्यञ्जकेनेति भावः। अन्तर्विशता चेतो विशता येनार्थेन सतां सहृदयानां गात्रं शरीरम्। अङ्कुरितं रोमाञ्चितं स्यात् सोऽर्थमहिमाऽर्थचमत्कारः समाधिः। 'अर्थदृष्टिः समाधिः' इत्याह वामनः समाधिलक्षणम्। रसव्यञ्जकचमत्कृतार्थत्वं समाधित्वम्। अत्र रसपदं ध्वन्यलङ्कारादीना-

---

लक्षण के अनुसार समता है। श्यामला, कोमला, रमण, शरण, इन चारों पदोंमें तीन-तीन अक्षरों से, बाला, गता, इन दोनों पदों में दो-दो अक्षरों से समानता है अतः दूसरे लक्षण के अनुसार भी यहाँ समता है। अब यहाँ यह सन्देह होता है कि पाञ्चाली रीति में भी समास नहीं होता। अतः प्रथम लक्षण पाञ्चाली रीति में चला जाता है और दूसरा लक्षण अनुप्रास में जाता है। इसका उत्तर यह है कि पाञ्चाली रीति में सब पादों में समास नहीं होता और यहाँ तो एक पाद में भी समास न होने पर ही समता हो जाती है। दूसरा लक्षण अनुप्रास में नहीं जाता। क्यों कि अनुप्रास में केवल स्वर की समानता नहीं होती और यहाँ स्वरसाम्य होने से भी समता हो जाती है ॥ ४ ॥

समाधि यह है—जिस चमत्कारी अर्थ के श्रवण से सहृदयों का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

माधुर्यं पुनरुक्तस्य वैचित्र्यं चारुतावहम् ।
वयस्य पश्य पश्यास्याञ्चलं लोचनाञ्चलम् ॥ ६ ॥

मुपलक्षणम्। तेनायं भावो यद् येनार्थेन सहृदयानां चमत्कारः स्यात्सोऽर्थः समाधिः। उदाहरणं त्विदमेव पद्यम्। चेतःप्रवेशनरोमाञ्चितगात्रादिचमत्कृतार्थव्यञ्जकत्वात्॥५॥

माधुर्यमाह—माधुर्यमिति। पुनरुक्तस्य पुनरुक्तपदस्य चारुतावहं रमणीयताजनकं द्रुतिजनकमिति यावत्। वैचित्र्यं विचित्रता स्यात्तदा माधुर्यं भवति। रमणीयतासंवलितविचित्रताजनकपुनरुक्तपदत्वं माधुर्यम्। यद्वा पुनः शब्दस्तु पदार्थे। तेन माधुर्यं तु उक्तस्य कथितस्य पदस्य चारुतावहं चित्तद्रवीभावजनकं वैचित्र्यमिति। अत्र पूर्वोऽर्थो ग्रन्थकृदभिमतः। 'चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते' इति साहित्यदर्पणे माधुर्यलक्षणमुक्तम्। काव्यप्रकाशे तु द्रवीभावजनकाह्लादो माधुर्यमित्युक्तम्। शृङ्गारादिरसे चित्तद्रवीभावो माधुर्यमित्यर्थः। इदं सम्भोगे करुणे विप्रलम्भे शान्ते च क्रमशोऽधिकम्। अस्य व्यञ्जिका रचना चेयमुक्ता—

'मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विताः।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा'। (साहित्यद० ८।२)।

उदाहरति—वयस्येति। हे वयस्य सखे! अस्याः कामिन्याः। चञ्चलं चपलम्। लोचनाञ्चलं नेत्रप्रान्तम्। पश्य पश्य विलोकय विलोकय। अत्र पश्य पश्येति पुनरुक्तपदस्य चारुताप्रतीतिर्भवति। वैचित्र्यजनितचमत्कारदर्शन एव पुनरुक्तपद-

---

हृदय रसाप्लुत हो जावै, उस अर्थ के चमत्कार को समाधि कहते हैं। चमत्कृत अर्थ होने के कारण इसी श्लोक को उदाहरण समझना चाहिए ॥ ५ ॥

माधुर्य का स्वरूप यह है—जहाँ पुनरुक्तपद से भी चमत्कारी अर्थ की प्रतीति होवे वहाँ माधुर्य होता है। इसका उदाहरण यह है—हे सखे! इस युवती के चञ्चल कटाक्ष को देखिए-देखिए। यहाँ देखिए-देखिए इस पुनरुक्ति से विचित्रता या अत्यन्त चञ्चलता की प्रतीति होती है। क्योंकि विचित्र वस्तु के देखने में शीघ्रता के कारण दो-तीन बार उसी शब्द का प्रयोग किया जाता है। साहित्यदर्पण में चित्त को पिघलानेवाले आह्लाद को माधुर्य लिखा है। यह माधुर्य क्रम से सम्भोग शृङ्गार, करुणरस, विप्रलम्भशृङ्गार और शान्त रसमें अधिक होता है। जहाँ वर्ग का प्रथम और पञ्चम ( ङ और क, ञ और च आदि ) वर्ण का संयोग हो; ट,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ओजः स्यात्प्रौढिरर्थस्य संक्षेपो वाऽतिभूयसः।
रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥ ७ ॥

प्रयोगात्। वर्गान्त्यवर्णजनितष्टठडढरहितो ञचवर्णप्रयोगो माधुर्यरचनानुकूल एव॥६॥

ओजोगुणमाह—ओज इति। अर्थस्य प्रौढिरनाश्रयस्याश्रयरूपेण वर्णनम्। अर्थगत ओजो गुणो वा अतिभूयसो महतोऽर्थस्य संक्षेपः संकोचः शाब्द ओजोगुणः।

'ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु'॥ (८ परि० ४)।

इति साहित्यदर्पणे ओजोलक्षणमुक्त्वास्य व्यञ्जिका रचनेयं प्रतिपादिता—

'वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।
उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।
तथा समासो बहुला घटनौद्धत्यशालिनी'॥ (८ परि० ५-६)।

उदाहरति—रिपुमिति। त्वदसिस्तव खड्गः। रिपुं शत्रुं हत्वा। यशः कीर्तिं कृत्वा कोशमाविशत् प्रविवेश। अत्र करणभूतस्य रिपुहननकर्तृत्वानाश्रयस्य खड्गस्य

---

ठ, ड, ढ ये चार अक्षर न हों, लघु रकार, णकार हो तथा समास बिल्कुल न हो और हों भी तो छोटे-छोटे समास हों वह रचना माधुर्य गुण की प्रकाशिका है ॥६॥

ओज गुण यह है—किसी कार्य के अनाधार को आधार बतला देना प्रौढि होती है और उसे ही अर्थगत ओज भी कहते हैं। बहुत लम्बी चौड़ी बात को संक्षेपसे स्वल्प अक्षरों में कहने को शब्दगत ओज कहते हैं। जिस अर्थ के श्रवण से चित्त का प्रकाशमय विस्तार हो अर्थात् चित्त में एक लम्बे (असीम) अर्थ की प्रतीति हो उसे ओज कहते हैं। यह साहित्यदर्पण में ओजका लक्षण बतलाया और इसकी प्रकाशिका रचना यह बताई है। वर्ग के प्रथम और तृतीय अक्षरों से उसी वर्ग के अन्तिम अक्षर ऊपर वा नीचे वा दोनों जगह से संयुक्त हों और रेफ भी उनमें शामिल हो, ट ठ ड ढ अक्षर भी होवें, शकार, षकार और लम्बे २ समासों से युक्त उद्धत रचना-शैली हो तो वह ओजोगुण की प्रकाशिका है यह गुण क्रम से वीर, बीभत्स, रौद्ररसों में अधिक रहता है। इस गुण का उदाहरण देखिए—हे राजन्! आपका खड्ग शत्रु को मारकर और आपकी कीर्ति को फैलाकर पुनः कोश (म्यान) में प्रविष्ट हो गया। शत्रु के मारण में राजा तो कर्ता है और खड्ग करण है। खड्ग मारण में कर्ता नहीं है तो भी उसे शत्रुमारण का यहाँ कर्ता बत

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात्।
स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥ ८ ॥
उदारता तु वैदग्ध्यमग्राम्यत्वात् पृथङ्मता।

रिपुहननकर्तृत्वाश्रयरूपेण वर्णनादर्थगतमोजः। रिपुहननादिमहतोऽर्थस्य संक्षेपाच्छब्दनिष्ठमोजः ॥ ७ ॥

सौकुमार्यं व्याचष्टे—सौकुमार्यमिति। पर्यायस्य शब्दान्तरस्य परिवर्तनाद् विनिमयाद् हेतोः। अपारुष्यं परुषवर्णाभावः सौकुमार्यम्। अमङ्गलशब्दपरित्यागेन तत्पर्यायवाचिशब्दप्रयोगः सौकुमार्यमिति भावः। अमङ्गलजनकाश्लीलत्वाभावोऽयं गुण इति काव्यप्रकाशादयः। उदाहरति—स कथेति। स पुरुषः। मरुत्सखमग्निम्। अत्र समासान्तष्टच्। समालिङ्ग्याश्लिष्य कथाशेषतां वार्तामात्रावशेषत्वम्। यातो गतः। अग्नौ प्रविश्य मृत इति भावः। अत्र—'अग्नौ प्रविश्य मृत' इत्यमङ्गलजनकस्यार्थस्य पर्यायपदान्तरैर्वर्णनमिति सौकुमार्यम्। पूर्वोक्तवर्णने तु झटित्यमङ्गलप्रतीतेः पारुष्यम्। पारुष्यमत्र न वर्णकृतं किन्त्वमङ्गलरूपम्। अपरे तु 'अग्नौ प्रविश्य मृतः' इति वर्णनस्यैवामङ्गलरूपार्थजनकतया वर्णकृतमेवावदन् ॥ ८ ॥

उदारतामाह—उदारतेति। विदग्धस्य भावो वैदग्ध्यं विदग्धप्रयोज्यत्वम्। उदारता। सा च न ग्राम्यदोषाभावरूपा अपि त्वग्राम्यत्वाद् ग्राम्यदोषाभावात्।

लाया। अतः कर्ता के अनाधार को भी उसका आधार बतला देने से अर्थगत ओज होता है। शत्रु का मारण, कीर्तिका विस्तार आदि बहुत विस्तृत अर्थ को संक्षेप से कहने के कारण यहां शब्दगत ओजगुण भी जानना चाहिये ॥ ७ ॥

सौकुमार्य का स्वरूप देखिये—अमङ्गलजनक अश्लील पद को हटा के जहां उसी अर्थ का बोधक अन्य शब्द रख दिया जावै वहां सौकुमार्य जानना चाहिये। इसका यह उदाहरण है—वह मनुष्य अग्नि का आलिङ्गन करके कथाशेषता को प्राप्त हो गया। अर्थात् अग्नि में पड़कर मर गया। यहां इस अमङ्गलजनक वर्णन का दूसरे शब्दों से वर्णन किया है अतः सौकुमार्य है ॥ ८ ॥

उदारता गुण यह है—चातुर्य से जो बात कही जावै उसे उदारता कहते हैं। अब यहां सन्देह होता है कि जो वात चातुर्य से नहीं कही जावेगी वहां ग्राम्यदोष होगा। और ग्राम्यदोष का दोषप्रकरण में निरूपण कर दिया गया है। अतः ग्राम्यदोष का जहां अभाव होगा वहां ही उदारता गुण हो जावेगा। फिर यहां उदारता का लक्षण अलग क्यों लिखा जाता है। इसका उत्तर यह है कि ग्राम्यदोषाभाव में उदारता नहीं होती। इसका स्थान अलग ही है। जैसे कि उदाहरण में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मानं मुञ्च प्रिये किंचिल्लोचनान्तमुदञ्चय ॥ ९ ॥
शृङ्गारे च प्रसादे च कान्त्यर्थव्यक्तिसंग्रहः ।
अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा ॥ १० ॥

---

पृथग् भिन्ना मता । 'मानं मुञ्च०' इत्युदाहरणम् । हे प्रिये ! मानं मुञ्च त्यज। किञ्चिदीषत् । लोचनान्तं नेत्रान्तमुदञ्चयोन्मीलय । विलोकयेत्युक्तावपि ग्राम्यदोषाभावः, उदारता तु न । सा न लोचनान्तमित्युक्तावेवेति नोदारता ग्राम्यदोषाभावरूपा । वामनस्तु 'अविकटत्वमुदारता' । पदानां नृत्यत्प्रायत्वं चाविकटत्वम्। अविकटत्वं चौजस्यन्तर्गतं काव्यप्रकाशादिमते । व्यङ्ग्यार्थप्रत्यायकत्वमुदारतेति तु दण्डी व्याचष्टे ॥ ९ ॥

वामनोक्तदशगुणान्तर्गतयोः कान्त्यर्थव्यक्तिगुणयोः क्वचिदन्तर्भावं दर्शयति—शृङ्गारे चेति । कान्तिश्चार्थव्यक्तिश्चेति कान्त्यर्थव्यक्ती तयोः संग्रहः क्रमेण शृङ्गारे शृङ्गाररसे प्रसादे प्रसादगुणे च भवति। शृङ्गारे कान्तिः, प्रसादे चार्थव्यक्तिरन्तर्गतेति भावः । ननु वामनेन दीप्तरसत्वं कान्तिरिति व्याहृत्य 'प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया' इत्याद्युदाहृतम् । तत्रेर्ष्यौत्सुक्यानुभावस्य दीप्तेर्वर्णनं न तु शृङ्गारदीप्तिरिति चेन्न । अनुभाववर्णनस्य शृङ्गाररसवर्णनाभिन्नत्वात् । प्रसादार्थव्यक्त्योरभेदस्तु स्फुट एव । गुणसंख्यामुपसंहरति—अमीति । पुंसि पुरुषे यथा शौर्यादयो गुणा वर्तन्ते तथैव काव्ये । अमी पूर्वोक्ता गुणाः श्लेषप्रसादादयो दशैव वर्तन्ते । दश गुणा इति वामनाचार्यमतेन स्वाभिमतास्त्वष्टावेवैते—श्लेषः, प्रसादः,

---

देखिये । उदारता का यह उदाहरण है—हे प्रिये ! अब अपने मान ( अहङ्कार ) को छोड़ो और जरा नेत्र-प्रान्त को खोलो । मेरी तरफ देखो इस बात को नेत्र-प्रान्त को खोलो इस चातुर्य से कहने के कारण यहां उदारता है । मेरी तरफ देखो ऐसा कहने पर ग्राम्यदोषाभाव तो होता है किन्तु उदारता नहीं होती । उदारता तो हे प्रिये ! मान को छोड़ और नेत्रप्रान्त को खोल इस अर्थ के कथन से ही होती है । इसलिये ग्राम्य दोष का अभाव उदारता नहीं हो सकता ॥ ६ ॥

वामनाचार्य के कान्ति और अर्थव्यक्ति गुणों का अन्तर्भाव बतलाया जाता है-शृङ्गाररस में कान्ति गुण का और प्रसाद गुण में अर्थव्यक्ति का अन्तर्भाव हो जाता है । जैसे पुरुष में शौर्यादिक गुण वर्त्तमान रहते हैं वैसे ही काव्य में श्लेष प्रसादादिक दश गुण रहते हैं । वामनाचार्यके मतसे दश गुणोंका निर्देश किया गया है। ग्रन्थकार के मत से तो श्लेष, प्रसाद, समता, समाधि, माधुर्य, ओज, सौकुमार्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तिलकाद्यमिव स्त्रीणां विदग्धहृदयङ्गमम् ।
व्यतिरिक्तमलङ्कारं प्रकृतेर्भूषणं गिराम् ॥ ११ ॥
विचित्रलक्षणो न्यासो निर्वाहः प्रौढिरौचिती ।

समता, समाधिः, माधुर्यम् , ओजः, सौकुमार्यम् , उदारतेति । सरस्वतीकण्ठाभरणोक्तचतुर्विंशतिगुणानामत्रैवान्तर्भावात् । ननु माधुर्यलाटानुप्रासयोः सांकर्यमिति चेन्न । माधुर्येऽतिशयमात्रविवक्षायाः सत्त्वात् । लाटानुप्रासे तु पुनरुक्तपदयोर्भिन्नाभिप्रायत्वात् । एवमष्टावेव गुणा ग्रन्थकृदभिमता इति भावः । यथा शौर्यकातरत्वादयः पुरुषधर्मास्तथैव श्लेषादयो गुणाः काव्यधर्मा इति भावः ॥ १० ॥

गुणालङ्कारभेददर्शनाय भूषणरूपमलङ्कारं व्याचष्टे—तिलकाद्यमिति । यथा स्त्रीणां प्रकृतेः शरीराद् व्यतिरिक्तं भिन्नं विदग्धानां चतुराणां हृदयङ्गमं हृदयहारकं तिलकाद्यं तिलकादिभूषणं भवति तथैव गिरां वाचां प्रकृतेः काव्याद् व्यतिरिक्तं भिन्नं विदग्धहृदयङ्गममलङ्कारमनुप्रासोपमादि भूषणमस्ति । तथा च तिलकाद्यलङ्कारः शरीरापेक्षया व्यतिरिक्तः सन् शरीरशोभाजनको न तु शरीरधर्मस्तथानुप्रासोपमादयोऽलङ्काराः काव्यापेक्षया भिन्नाः सन्तः काव्यशोभाजनका न तु काव्यधर्मा इति भावः । एवं च काव्यधर्मत्वं गुणत्वं काव्योत्कर्षाधायकत्वं चालंकारत्वमित्यनयोर्भेदः । काव्यप्रकाशादौ तु रसधर्मत्वं गुणत्वं काव्यधर्मत्वमलङ्कारत्वमिति ॥ ११ ॥

गुणाधिक्यशङ्कां निवारयति—विचित्रेति । वामनेन दश गुणा उक्ताः, भोजेन सरस्वतीकण्ठाभरणे तु चतुर्विंशतिगुणाः प्रतिपादिताः । एवमन्येऽपि गुणा न्यासादयो भवितुमर्हा न वेति शङ्कायामाह—न्यासः, निर्वाहः, प्रौढिः, औचिती, शास्त्रान्तररह-

और उदारता ये आठ ही हैं । सरस्वतीकण्ठाभरण में कहे गये चौवीस गुणों का इन्हीं गुणों में अन्तर्भाव हो जाता है । जिस प्रकार शौर्यादिक पुरुष के धर्म हैं वैसे ही श्लेषादिक गुण काव्य के धर्म माने गये हैं ॥ १० ॥

गुण और अलंकारों में भेद बतलाया जाता है—जैसे तिलकादिक अलङ्कार स्त्रियों के शरीर से भिन्न होते हुए शरीर की शोभा को बढ़ाते हैं, वैसे ही अनुप्रास, उपमादिक अलङ्कार काव्य से भिन्न होते हुए काव्य के भूषण माने गये हैं । आशय यह हुआ कि गुण काव्य के धर्म होते हैं और अलङ्कार काव्य के उत्कर्षाधायक होते हैं । यह इन दोनों में भेद हुआ । काव्यप्रकाश में तो रस के धर्म गुण और शब्दार्थ के धर्म अलङ्कार माने गये हैं ॥ ११ ॥

न्यास आदिक और भी गुण होते हैं या नहीं यह सन्देह निवारण किया

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शास्त्रान्तररहस्योक्तिः संग्रहो दिक् प्रदर्शिता ॥ १२ ॥

---

स्योक्तिः, संग्रहः इत्यादयो न गुणाः, अपि तु वैचित्र्यमात्रज्ञापकाः । इयं न्यासादिगणना मया दिक् प्रदर्शिता । अन्येऽपि वैचित्र्यमात्रज्ञापकाः सन्ति न तु गुणा इति भावः । न्यासादीनां स्वरूपमाह—विचित्रं लक्षणं सूत्रं यस्मिन्स एतादृशो यः प्रयोगः स न्यासः । विचित्रसूत्रसिद्धप्रयोगे न्यास इति भावः । यथा—'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इत्यनर्घराघवे मुरारिः । अत्र 'फलेग्रहिरात्मम्भरिश्च' इति पाणिनीयसूत्रस्थचकारात्कुक्षिम्भरिप्रयोगोऽपि सिद्ध्यति । चान्द्रव्याकरणे त्वेतत्सूत्रविलक्षणं सूत्रम् 'आत्मोदरकुक्षिषु' इति । तेन 'उदरम्भरयः' इति प्रयोगो विलक्षणसूत्रसिद्धोऽत्र प्रयुक्तस्तेनात्र विचित्रलक्षणो न्यासः । निर्वाहो यथा—'सोऽहमाजन्मशुद्धानाम्' इति । 'सोऽचि लोपे चेत्पादपूरणम्' इति पाणिनीयसूत्रे पादश्चेल्लोपे सत्येव पूर्येतेत्यवधारणं तु 'स्यश्छन्दसि बहुलम्' इति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते । तस्यात्र निर्वाहः । लक्ष्यवाचकशब्दप्रयोगत्वं प्रौढित्वम् । यथा 'मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम्' इत्यत्र मन्दाक्रान्ताच्छन्दोनामग्रहणात्प्रौढित्वम् । औचिती तु 'वागर्थाविव संपृक्तौ' इत्यत्र दृश्या । नतिफलत्वाभ्यां प्रस्तुताभ्यां वागर्थाभ्यां सह नमस्ययोरुपमानोपमेयभावस्यौचित्यात् । शास्त्रान्तर-

---

जाता है—न्यास, निर्वाह, प्रौढि, औचिती, शास्त्रान्तररहस्योक्ति और संग्रह इत्यादिक बातें वैचित्र्यमात्र की ज्ञापक होती हैं, गुण नहीं मानी गई हैं, इनके लक्षण ये हैं—विलक्षण सूत्र से सिद्ध शब्द के प्रयोग में न्यास होता है। जैसे 'उदरम्भरयश्चकोराः' यहां उदरम्भरि शब्द 'आत्मोदरकुक्षिषु' इस चान्द्रव्याकरण के सूत्र से सिद्ध होता है। 'फलेग्रहिरात्मम्भरिश्च' इस पाणिनीय सूत्र से सिद्ध नहीं होता। 'सोऽहमाजन्मशुद्धानाम्' यह निर्वाह का उदाहरण है 'सोऽचि लोपे चेत्पादपूरणम्' इस सूत्र का-पाद की पूर्ति होने पर ही सकारका लोप होवे-यह अर्थ है। और 'स्यश्छन्दसि बहुलम्' इस सूत्र से विकल्प से सकार का लोप प्राप्त होता है। इसीलिये उक्त उदाहरण में सकार का लोप नहीं किया—किन्तु उस सकार को ओकार करके 'सोऽहम्' रूप बना दिया ? यहां उस विकल्प का निर्वाह किया गया है। जहां छन्द आदि के नाम का प्रकारान्तर से ग्रहण किया जावे वहां प्रौढि होती है। 'मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम्' इक्षु (गन्ना) को मन्द दवाने से पूरा रस नहीं निकलता। यहां मन्दाक्रान्ता छन्द का नाम ग्रहण करने से प्रौढि है। 'वागर्थाविव संपृक्तौ' यहां औचिती है। क्योंकि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
चतुर्थस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १३ ॥

इति चन्द्रालोकालङ्कारे गुणनिरूपणं नाम चतुर्थो मयूखः ॥



---

रहस्योक्तिर्यथा 'ज्याकृष्टबद्धखटकामुख०' इत्यादौ संगीतशास्त्रसिद्धस्याङ्गुलिविन्यास विशेषस्य खटकामुखेत्यनेनोपादानात् । 'श्रृङ्गारी गिरिजानने' इत्यादौ तु नवानां रसानां संग्रहः । इयं मया दिक् प्रदर्शिता । केचित्तु 'इमानि भूषणान्तराणी'ति प्राहुः ॥ १२ ॥

चतुर्थमयूखसमाप्तिं प्राह—महादेव इति । महादेवः सत्रप्रमुखेति प्रथममयूखोक्तः षोडशश्लोक एवात्रापि समाप्तौ ज्ञेयः । किन्तु तस्य तृतीयपादांशः 'चतुर्थस्तेनासौ' इत्यनेन परिवर्त्तनीयः । अन्यत्पूर्ववत् ॥ १३ ॥

इति पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायाश्चतुर्थे मयूखे पर्यवसानम् ॥ ४ ॥



---

शब्द और अर्थ की प्राप्ति के लिये शब्द और अर्थ का ही पार्वती परमेश्वर के साथ उपमानोपमेय भाव बतलाना उचित है । 'ज्याकृष्टबद्धखटकामुख०' यह श्लोक शास्त्रान्तररहस्योक्ति का उदाहरण है । यहां अङ्गुलियों से बाजा बजाने के वर्णन का संगीतशास्त्र के प्रसिद्ध शब्द 'खटकामुख' पद से प्रतिपादन किया है । यह संगीतशास्त्र के रहस्य का कथन है । 'श्रृङ्गारी गिरिजानने' इस श्लोक में नौ प्रकार के रसों का संग्रह किया गया है । अतः यहां संग्रह जानना चाहिए ॥ १२ ॥

'महादेवः सत्र०' इस प्रथम मयूख के सोलहवें श्लोक के तृतीय पाद में 'चतुर्थस्तेनासौ सुकविजयदेवेन रचिते' यह परिवर्तन करके चतुर्थ मयूख की समाप्ति करनी चाहिए ॥ १३ ॥

कथाभट्टीया नामक हिन्दी व्याख्या में चन्द्रालोक
का चतुर्थ मयूख समाप्त हुआ ।




CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

# पञ्चमो मयूखः

अथालंकाराः ।

शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा ।

काव्यलक्षणे प्रतिनिर्दिष्टानलङ्कारान् व्याचष्टे—अथेत्यादिना । अलङ्क्रियतेऽनेनेति करणप्रधानव्युत्पत्त्याऽलङ्कारशब्दः शरीरसुपमाधायकत्वेन हारादीनामिव काव्यशोभासंपादकत्वेनानुप्रासोपमादीनामलङ्काराणां वाचकः । अलङ्कृतिरलङ्करणं वाऽलङ्कार इति भावप्रधानोऽलङ्कारशब्दस्तु साहित्यशास्त्रापरपर्यायः । यथा शरीरेहारादयः संयोगसम्बन्धेन, आत्मनि शौर्यादयः समवायसम्बन्धेन वर्तन्ते तथैव काव्ये शब्दार्थशरीरेऽनुप्रासोपमादयः संयोगवृत्त्या माधुर्यादयो रसे समवायवृत्त्या वर्तन्त इत्यनयोर्भेदोऽवधेयः । पूर्वस्मिन्समयेऽलङ्कारप्राधान्यमासीत् । अलंकारमतप्रवर्तकैर्भामहोद्भटवामनरुद्रटादिभिः काव्यालङ्कारनाम्ना ग्रन्था निर्मिताः । एतेषां ग्रन्थेषु रसविचारः स्वल्प एव प्रतिभाति । प्रतीयमानस्यार्थस्याप्रस्तुतप्रशंसासमासोक्त्याक्षेपाद्यलङ्कारेष्वन्तर्भावो दृश्यते पर्यायोक्तिवक्रोक्त्यतिशयोक्त्यादिषु च । तत आनन्दवर्धना-

अब काव्य के लक्षण में निर्दिष्ट अलङ्कारों का निरूपण किया जाता है 'अलंक्रियतेऽनेनेत्यलङ्कारः' जिससे भूषित किया जावे वह अलङ्कार है । इस करणप्रधान व्युत्पत्ति से अलङ्कार शब्द पुरुष के शरीर की शोभा करनेवाले हारादिक की तरह काव्य की शोभा करनेवाले अनुप्रास और उपमादि अलङ्कार का बोधक है । 'अलङ्करणमलङ्कारः' जो भूषण रूप हो वह अलङ्कार है । इस भावप्रधान अलङ्कार शब्द की व्युत्पत्ति से अलङ्कार शब्द साहित्यशास्त्र का वाचक है । जैसे शरीर में हार-कुण्डलादिक संयोग सम्बन्ध से और शौर्यप्रभृति गुण आत्मा में समवाय सम्बन्ध से वर्तमान रहते हैं, वैसे ही काव्य के शब्द-अर्थरूपी शरीर में अनुप्रास और उपमादि अलंकार संयोग संबन्ध से और आत्माभूत रस में माधुर्यादिक गुण समवाय सम्बन्ध से रहते हैं यह गुण और अलङ्कार का भेद जानना चाहिए । प्रारम्भिक समय में अलंकारों का ही प्राधान्य था । भामह, उद्भट, वामन और रुद्रट आदि आलंकारिकों ने अपने-अपने साहित्यिक ग्रन्थों का नाम काव्यालंकार ही रखा था । इनके ग्रन्थों में रस का विवेचन बहुत कम पाया जाता है । इन लोगों ने प्रतीयमान अर्थ का अप्रस्तुतप्रशंसा, समासोक्ति और आक्षेप आदि अलंकारों में तथा पर्यायोक्ति, वक्रोक्ति, अतिशयोक्ति आदि में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चार्यैर्ध्वनिरुद्भावितः। ध्वन्यालोके चास्य विवेचनं कृतम्। प्राधान्येनोपमैवालङ्कारः। सैव भूमिकाभेदादनेकालङ्कारतां प्राप्नोति। यथोक्तं चित्रमीमांसायामप्पय्यदीक्षितेन-

'उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः'॥

उपमेयोपमा-ऽनन्वय-प्रतीप-स्मरण-रूपक-संदेह-भ्रान्तिमद्-अपह्नुत्युत्प्रेक्षाऽतिशयोक्ति-तुल्ययोगिता-दीपक-प्रतिवस्तूपमा-दृष्टान्त-निदर्शना-व्यतिरेक-सहोक्ति-समासोक्ति-श्लेष-अप्रस्तुतप्रशंसेत्यादयोऽलङ्कारा उपमाभूमिकाभेदादेवोत्पन्नाः। भरतनाट्यशास्त्रे-उपमादीपकरूपकयमकेति चत्वारोऽलङ्काराः, दण्डिना काव्यादर्शे पञ्चत्रिंशदलङ्काराः, भामहेनैकोनचत्वारिंशत्, उद्भटेन चत्वारिंशत्, वामनेन त्रयस्त्रिंशत्, रुद्रटेन द्विपञ्चाशत्, मम्मटेन काव्यप्रकाशे सप्तषष्टिः (एषु षट् शब्दालङ्काराः), अलङ्कारसर्वस्वे एकाशीतिः (एषु षट् शब्दालङ्काराः), अस्मिन् ग्रन्थे (चन्द्रालोके) शतमलङ्काराः, कुवलयानन्दे च चतुर्विंशत्यधिकशतमलङ्काराः प्रदर्शिता इति। अथालङ्कारसामान्यलक्षणं व्याचष्टे—शब्दार्थयोरिति। कवेरालङ्का-

---

अन्तर्भाव माना है। इनके अनन्तर आनन्दवर्धनाचार्य ने ध्वन्यालोक में और अभिनवगुप्तपादाचार्य ने लोचन (ध्वन्यालोकटीका) में ध्वनि एवं रस का स्फुट विवेचन किया है। अर्थालंकारों में केवल एक उपमालङ्कार ही सब में प्रधान है। वही अनेक वाचोयुक्ति के कारण अनेक रूपों को धारण करता है। अप्पय्यदीक्षित ने अपनी चित्रमीमांसा में लिखा है कि जिस प्रकार नाटक में एक ही नटी अनेक रूप धारण करके आनन्दित करती है, उसी प्रकार एक ही उपमालंकार के अनेक भेद सहृदयों को आनन्दित करते हैं। उपमेयोपमा, अनन्वय, प्रतीप, स्मरण, रूपक, सन्देह, भ्रान्तिमान्, अपह्नुति, उत्प्रेक्षा, अतिशयोक्ति, तुल्ययोगिता, दीपक, प्रतिवस्तूपमा, दृष्टान्त, निदर्शना, व्यतिरेक, सहोक्ति समासोक्ति, श्लेष, अप्रस्तुतप्रशंसा आदि अलंकार उपमा के ही रूपान्तर हैं। भरत के नाट्यशास्त्र में उपमा, दीपक, रूपक, यमक, ये चार ही अलंकार लिखे हैं। दण्डीने काव्यादर्श में पैंतीस, भामहने एक कम चालीस, उद्भटने चालीस, वामनने तैंतीस, रुद्रटने बावन, मम्मटने काव्यप्रकाश में सड़सठ, अलंकारसर्वस्व में एक्यासी, इस चन्द्रालोक ग्रन्थ में सौ अलंकार और कुवलयानन्द में एक सौ चौबीस अलंकार माने गये हैं। अब अलंकार का सामान्य लक्षण देखिए—जैसे उचित स्थान में पहिने गये हार-कुण्डलादिक पुरुषों के अलंकार होते हैं उसी तरह कवियों के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हारादिवदलङ्कारः सन्निवेशो मनोहरः ॥ १ ॥

कस्य प्रसिद्ध्या वा प्रौढिवशेन प्रौढिकल्पनया वा शब्दार्थयोर्मनोहरश्चमत्कारजनकः सन्निवेशो विन्यासो हारादिवत् पुरुषस्य हारादिभूषणवदलङ्कारो भवति। अलङ्क्रियतेऽनेनेत्यलङ्कारः। शब्दानामर्थानां च यः कविप्रसिद्ध्या वा तस्य प्रौढिकल्पनया मनोहरः सन्निवेशः स क्रमशः शब्दगतोऽर्थगतश्चालङ्कारो ज्ञेय इति भावः। सन्निवेशपदोपादानेन काव्यरूप एवायमलङ्कारो न तु हारादिवत्पुंसः। पृथग्भूतः। अनुप्रासादेः शब्द एवान्तर्भावात्, उपमादेश्चार्थे। हारादिवदिति दृष्टान्तस्तु रमणीयतामात्रे न तु सर्वांशे। गुणानां मनोहरसन्निवेशरूपत्वेऽपि नालङ्कारत्वम्। तेषां तत्त्वेनाप्रसिद्धेरिति कश्चित्। वस्तुतस्तु हारादिवदित्यनेनालङ्काराणां काव्यात्पृथग्भावः सूचितः। तेन गुणालङ्कारभेदोऽपि संघटते। अत्र प्राचीनकविप्रसिद्धाः, अन्ये च मदीयप्रौढिकल्पिता अप्यलङ्काराः सन्तीति प्रौढिपदेन सूचितम्। अलङ्काराणां शब्दार्थगतत्वनिश्चयस्त्वन्वयव्यतिरेकानुविधायित्वेन बोधः। समानार्थकशब्दपरिवर्तनेऽपि योऽलङ्कारो वर्त्तते सोऽर्थनिष्ठः। अन्यथा तु शाब्दः स इति शब्दार्थनिष्ठबोधको हेतुर्दोषालङ्कारादीनाम्। कविप्रसिद्धिप्रौढ्यन्यतरजनितहारादिदृष्टान्तीभूतचमत्कृतिजनकशब्दार्थान्यतरसन्निवेशत्वमलङ्कारत्वम्। काव्यप्रकाशे त्वलङ्कारलक्षणमिदम्—

'उपकुर्वन्ति तं सन्तमङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः' ( ८ उल्लासे ६७ )॥

---

प्रसिद्धि से वा उनकी प्रौढकल्पना से सुन्दर शब्द और अर्थ की रचना को अलंकार कह देते हैं। तात्पर्य यह हुआ कि प्राचीन कवियों की तथा मेरी कल्पना के दो प्रकार के अलंकार यहाँ बताये जाते हैं। यहां कोई यह कहते हैं कि अलंकार लक्षण में **'संनिवेश'** पद का ग्रहण है। इससे यह जाना जाता है कि जैसे हार आदि भूषण मनुष्य से अलग हैं वैसे अलंकार काव्य से भिन्न नहीं हैं। हार का दृष्टान्त तो केवल सुन्दरता के लिए दिया गया है। इनको अन्य आलंकारिक नहीं मानते। वे कहते हैं कि **हारादिक** के दृष्टान्त से काव्य से भिन्न अलंकार की सूचना दी गई है। इस सिद्धान्त से गुण और अलंकारों का भेद भी बन जाता है। पर्यायवाचक दूसरे शब्द का प्रयोग करने में भी जो अलंकार वर्तमान रहता है, वह अलंकार अर्थनिष्ठ माना गया है। और जो पर्यायवाचक शब्दान्तर के प्रयोग से नहीं रहे वह अलंकार शब्दनिष्ठ माना गया है। यह

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**स्वरव्यञ्जनसंदोहव्यूहा मन्दोहदोहदा ।**

एवं च काव्यप्रकाशमतेन रसोपकारकत्वे सति तदवृत्तित्वम्, तथात्वे सति रसानियतस्थितिकत्वम्, अनियमेन रसोपकारकत्वमिति लक्षणत्रितयं फलितम्। कुवलयानन्दव्याख्यायां वैद्यनाथकृतायामलङ्कारचन्द्रिकायामलङ्कारलक्षणं परिष्कृत्योक्तमिति तद् व्याख्यायते। तथा च तल्लक्षणम्—रसवदादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमलङ्कारत्वमिति । अनुप्रासादिविशिष्टशब्दज्ञानमुपमादिविशिष्टार्थज्ञानं चमत्कृतिजनकम्। तेन तयोश्चमत्कृतिजनकता वर्तत एव। तदवच्छेदकता (विशेषणता) चानुप्रासोपमादिविशिष्टशब्दार्थयोर्वर्तते। तत्र चानुप्रासोपमादयो विशेषणीभूता (अवच्छेदकभूताः)। तेनैतेष्वलङ्कारलक्षणसमन्वयः। चमत्कृतिजनकतावच्छेदकता च शब्दार्थयोर्विषयतासम्बन्धेन वर्तत इति विषयतासम्बन्धोऽयं—चमत्कृतिजनकतावच्छेदकताया अवच्छेदकः। चमत्कृतिजनकतावच्छेदकता च शब्दार्थान्यतरनिष्ठविषयतासम्बन्धावच्छिन्ना वर्तते। तेन शब्दार्थान्यतरनिष्ठ विषयतासम्बन्धावच्छिन्ना या चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमलङ्कारत्वमिति लक्षणम्। ननु ध्वनिविशिष्टार्थज्ञानेनापि चमत्कारोदयाद् ध्वनिविशिष्टार्थज्ञाने चमत्कृतिजनकता तदवच्छेदकतावच्छेदकत्वं च ध्वनौ वर्तत इत्येतस्याप्यलङ्कारत्वमापतितम्। एतन्निवृत्तये च 'व्यङ्ग्यभिन्नत्वे सति' इति सत्यन्तं विशेषणं देयम्। एतेन ध्वनौ व्यङ्ग्यार्थस्य सत्त्वान्नालङ्कारत्वम्। एवं सत्यपि रसवत्प्रेयऊर्जस्विसमाहितेषु चतुर्ष्वलङ्कारेषु व्यङ्ग्यार्थसद्भावान्नालङ्कारत्वं स्यादेतेन लक्षणेन। मन्यते च तत्रालङ्कारत्वं सर्वैरिति चेत्तदा रसवदादिभिन्नव्यङ्ग्यभिन्नत्वे सतीति विशेषणविशिष्टं सत्यन्तविशेषणोपादानं कर्तव्यम्। तेन चोक्तलक्षणे न कोऽपि दोषः इत्यलङ्कारलक्षणनिरूपणम् ॥

अथ शब्दालङ्कारेषु प्रथमं छेकानुप्रासमाह—स्वरेति। अनु–अनुगतं प्रकर्षेण

---

शब्द और अर्थ के अलंकारों का लक्षण है। काव्यप्रकाश में अलङ्कार का लक्षण यह बतलाया है कि जो अनियम से शब्दार्थ के द्वारा रस के परिपोषक हैं वे अनुप्रासोपमादिक हार-कुण्डलादिक की तरह काव्य में अलंकार होते हैं। इस लक्षण का आशय यह हुआ कि जो रस के उपकारक हों और इसमें न रहें, अथवा रस के उपकारक हों और इसमें नियम से न रहें, तथा अनियम से रस के उपकारक हों वे अलंकार होते हैं। कुवलयानन्द की टीका अलंकारचन्द्रिका में अलंकार का लक्षण परिष्कृत किया गया है वह वहां ही देखना चाहिये ॥ १ ॥

यहां पहिले शब्दालङ्कारों का वर्णन किया जाता है—समान आकार (सदृश

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गौर्जगज्जाग्रदुत्सेका छेकानुप्रासभासुरा ॥ २ ॥

सनमनुप्रासः । 'अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्' ( साहित्य द० १० परि० २ ), 'वर्णसाम्यमनुप्रासः' ( काव्यप्र० ९ उ० १०४ ) इत्यनुप्रासलक्षणम् । सोऽयमनुप्रासो वर्णगतः शब्दगतश्चेति द्विधा । निरर्थकवर्णानुप्रासः प्रथमः । द्वितीयस्तु सार्थकवर्णानुप्रासस्वरूपः । तत्र प्रथमोऽपि छेकवृत्तिगतत्वेन द्विविधः। अत्र पूर्वं छेकानुप्रासमाह । स्वराः व्यञ्जनानि च तेषां सन्दोहः साम्यं स्तोमो वा तस्य व्यूह आवृत्तिर्यस्यां सा । मन्दः सकृत् थ ऊहो ज्ञानं तस्य दोहदा जनयित्री । जगति लोके जाग्रत् प्रकाशमान उत्सेकः प्रकर्षो यस्याः तादृशी । गौर्वाणी । छेका विदग्धास्तेषां योऽनुप्रासस्तेन भासुरा शोभमाना भवति । यद्वा 'छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे' इति चवर्गादौ रभसकोशेन छेका आलयस्थाः पक्षिणस्तेषामनुप्रासेन द्विर्भाषितेन भासुरा । एषां पक्षिणां द्विर्भाषितं भवतीति व्यवहारसादृश्येन छेकानुप्राससंज्ञा । अयं भावः—स्वरस्तोमानां व्यञ्जनस्तोमानामुभयेषां च यत्र सकृत् साम्यं तत्र छेकानुप्रासः, अत एव काव्यप्रकाशे 'सोऽनेकस्य सकृत्पूर्वः' अनेकस्य व्यञ्जनस्य सकृत्साम्यं छेकानुप्रास इत्युक्तम् । वृत्त्यनुप्रासे त्वेकस्यापि व्यञ्जनस्यासकृदावृत्तिर्भवति । साहित्यदर्पणे तु 'छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा' इति छेकानुप्रासलक्षणमुक्तम् । उदाहरणं त्विदमेव पद्यम् । अत्र स्वरव्यञ्जनमित्यत्र—अकाररूपस्वरस्तोमावृत्तेः, दोहव्यूहेत्यत्र व्यञ्जनावृत्तेः, दोहदोहेत्यत्रोभया-

---

वाले वर्णों के विन्यास को अनुप्रास कहते हैं। वह अनुप्रास वर्णगत और शब्दगत के भेद से दो प्रकार का है । जहाँ अनुप्रास के वर्णों को एकत्रित करने से कोई अर्थ न निकले वहां वर्णगत अनुप्रास होता है । जहां अनुप्रास के वर्णों का अर्थ होता हो वहां शब्दगत अनुप्रास होता है जैसे लाटानुप्रास में 'जितं जितम्' इन दोनों वर्णों का भिन्न आशय होता है । वर्णानुप्रास के छेकानुप्रास और वृत्त्यनुप्रास ये दो भेद हैं । छेकानुप्रास का स्वरूप यह है—जहां अनेक स्वर अथवा अनेक व्यञ्जन की एक वार आवृत्ति की जावे वहां छेकानुप्रास होता है। छेक ( चतुर ) पुरुषों के प्रिय अनुप्रास को छेकानुप्रास कहते हैं । वृत्त्यनुप्रास में तो एक ही व्यञ्जन की अनेक वार आवृत्ति होती है । अतः ये दोनों अलङ्कार आपस में भिन्न हैं । उदाहरण के लिये यह ही श्लोक देखिये । 'स्वरव्यञ्जनम्' यहां पर अकाररूप स्वर की आवृत्ति है 'दोहव्यूहा' यहां व्यञ्जनों की आवृत्ति है। 'दोहदोहा' यहां स्वर और व्यञ्जन इन दोनों की आवृत्ति है । अतः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसन्दोहस्वच्छन्दास्पदमन्दिरम् ॥ ३ ॥
लाटानुप्रासभूभिन्नाभिप्राया पुनरुक्तता ।

---

वृत्तेश्च सत्त्वाच्छेकानुप्रासः ॥ २ ॥

वृत्त्यनुप्रासं व्याचष्टे—आवृत्तेत्यादि । आवृत्तश्चासौ वर्णश्चावृत्तवर्णस्तेन सम्पूर्णं सम्पूरितं वचो वचनं वृत्त्यनुप्रासवद् भवति । वृत्तमादितोऽवसानपर्यन्तं वर्त्तनम् । तदस्यास्तीति वृत्ती तस्यानुप्रासः सोऽस्यामस्तीति वृत्त्यनुप्रासवद् । अथवा रसानुगुणा वर्णरचना वृत्तिः । तदनुकूलत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः । रसानुगुणा वृत्तयश्चाग्रे षष्ठमयूखीय २२—२८ श्लोकेषु द्रष्टव्याः । एता एव वृत्तयः काव्यप्रकाशादिभिरुपनागरिकापरुषाकोमलापदैर्व्यपदिश्यन्ते । एतद्वचः । अमन्दो भूयांश्चासावानन्दश्चेत्यमन्दानन्दस्तस्य सन्दोहः स्तोमस्तस्य स्वच्छन्दं स्वतन्त्रं सामग्र्यन्तरनिरपेक्षं च तदास्पदस्य स्थितेर्मन्दिरं गृहमस्ति । वृत्त्यनुप्रासवचनममन्दानन्दमन्दिरमिति भावः । एतेनैकस्यापि व्यञ्जनस्यासकृदावृत्तिर्वृत्त्यनुप्रास इति फलितम् । उदाहरणं त्विदमेव पद्यम् । एकस्य चकाररूपव्यञ्जनस्यात्रासकृदावृत्तेः सत्त्वात् । 'एकस्याप्यसकृत्परः ( १० उ० १०७ ) इति काव्यप्रकाशे वृत्त्यनुप्रासो लक्षितः । एकस्य व्यञ्जनस्यापि । असकृदनेकवारमावर्त्तनं वृत्त्यनुप्रास इति भावः ॥ ३ ॥

शब्दगतं लाटानुप्रासं व्याचष्टे—लाटेति । भिन्नोऽन्योऽभिप्रायोऽर्थाशयो यस्याः सेदृशी या पुनरुक्ततैकार्थकद्विर्भाषितम् । सा लाटस्य भूः स्थानम् । लाटजनप्रियत्वादेष लाटानुप्रासः । भिन्नाभिप्रायकपुनरुक्तत्वं लाटानुप्रासत्वम् । 'शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः' इति साहित्यदर्पणे लाटानुप्रासो लक्षितः ।

---

यहां छेकानुप्रास है ॥ २ ॥

वृत्त्यनुप्रास का स्वरूप देखिए—जहां एक वर्ण की वा अनेक वर्णों की अनेक वार आवृत्ति होवे वहाँ वृत्त्यनुप्रास होता है । रसानुकूल उपनागरिका आदि वृत्ति के अनुप्रास को वृत्त्यनुप्रास कहते हैं । 'अमन्दानन्दसन्दोहा०' यह श्लोकार्ध इसका उदाहरण है । यहां एक व्यञ्जन दकार अनेक वार आया है अतः वृत्त्यनुप्रास है ॥ ३ ॥

लाटानुप्रास का स्वरूप यह है—यह अनुप्रास शब्दगत होता है । जहां पुनरुक्तपद भिन्न २ अभिप्राय के प्रकाशक होवें वहां लाटानुप्रास होता है । यह लाट देश के मनुष्यों को अधिक अच्छा लगता है इसीलिये इसका लाटानुप्रास नाम है । अनेक पदों का, एक पदका, एक समास में, अलग-अलग समासों में,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्र स्यान्न पुनः शत्रोर्गर्जितं तज्जितं जितम् ॥ ४ ॥
श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ॥ ५ ॥

काव्यप्रकाशे तु पदानाम्, पदस्य, एकसमासे, भिन्नसमासे, समासासमासयोश्च नाम्नः सारूप्यात् पञ्चधा लाटानुप्रास उक्तः । उदाहरणं व्याचष्टे—यत्रेति । यत्र यस्मिन्स्थले शत्रोर्वैरिणः पुनर्गर्जितं हुङ्कारशब्दो न स्यात्तज्जितं जयनं जितं सफलमित्यर्थः । अत्र 'जितं जितम्' इति पुनरुक्तपदे द्वितीयजितपदस्य सफलतारूपाभिप्रायाल्लाटानुप्रासत्वम् ॥ ४ ॥

स्फुटानुप्रासं व्याचष्टे—श्लोकस्येति । श्लोकस्यार्धे श्लोकपूर्वार्धे उत्तरार्धे वा । तदर्धे पादे वा । यदि वर्णावृत्तिर्वर्णसाम्यम् । ध्रुवा नियता तदा मतिमतां सहृदयानां स्फुटानुप्रासता स्फुटानुप्रासत्वम् । मता स्वीकृता । यो वर्णः श्लोकपूर्वार्धावसाने स एवोत्तरार्धावसाने इत्येको भेदः । चतुर्षु पादान्तेष्वेको वर्ण इत्यपरो भेद इति तु शरदागमकृत् । वस्तुतस्तु श्लोकार्धे वर्णावृत्तिर्द्वेधा—आदितोऽन्तपर्यन्ता प्रथमा, पादावसाने स एव वर्ण इति द्वितीया । श्लोकार्धार्धे पादे तु सकविधैव । उदाहरणं त्विदमेव पद्यम् । अत्र तकारमकारयोरावृत्तिरादितोऽन्तपर्यन्ता नियतेति प्रथमभेदोदाहरणम् । श्लोकपूर्वार्धे वेत्यस्य तथा श्लोकोत्तरार्धे तामित्यस्य वर्णस्य चावृत्तेः सत्वाद् द्वितीयभेदोदाहरणम् । प्रथमपादे अर्धे, अर्धे, इति रकारयुक्तधकारा-

---

समास वा असमास में यह अनुप्रास पाँच प्रकार का होता है । 'यत्र स्यान्न०' यह इसका उदाहरण है । जहाँ शत्रु की फिर आवाज न आवे वह विजय ही विजय है अर्थात् सफल है । यहाँ 'जितं जितम्' इन पुनरुक्त पदों में दूसरे पद का सफलतारूप भिन्न तात्पर्य है—अतः यहाँ लाटानुप्रास है ॥ ४ ॥

स्फुटानुप्रास यह है—यदि श्लोक के पूर्वार्ध वा उत्तरार्ध में अथवा प्रत्येक पाद में वर्णों की आवृत्ति होवै उसे बुद्धिमान् पुरुष स्फुटानुप्रास कहते हैं । श्लोकार्ध वर्णावृत्ति दो प्रकार से होती है एक तो आदि से अन्त पर्यन्त वर्णों की आवृत्ति तथा चरण के अन्त में उसी वर्ण का रहना दूसरी आवृत्ति मानी गई है । उदाहरण इसी श्लोक में देखिए । श्लोक में उत्तर भाग में आदि से अन्त तक तकार, मकार की आवृत्ति प्रथम भेद का उदाहरण है । पूर्वार्ध के अन्त में वा शब्द का तथा उत्तरार्ध के अन्त में 'ताम्' पद का साम्य दूसरे भेद का उदाहरण है । प्रत्येक पाद में आवृत्ति का एक ही भेद होता है । जैसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उपमेयोपमानादावर्थानुप्रास इष्यते।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥ ६ ॥

वृत्त्या पादे स्फुटानुप्रासतोक्तेति लक्षणसङ्गतिः। अयं दर्पणोक्तश्रुत्यनुप्रासभेद इति केचित् ॥ ५ ॥

अर्थानुप्रासं व्याचष्टे—उपमेयेति। 'वर्णावृत्तिर्यदि ध्रुवा तदा' इति पूर्वतोऽनुवर्तते। उपमेयोपमानादौ वर्ण्यावर्ण्यादौ। यदि वर्णावृत्तिर्ध्रुवा नियता तदार्थानुप्रासोऽलङ्कार इष्यते। आदिपदेन रूपकादिग्रहणम्। उपमेयोपमानादौ वर्णसाम्येऽर्थानुप्रास इति भावः। उदाहरणं व्याचष्टे—चन्दनेति। गोविन्दस्य प्रभोश्चरणयोर्द्वन्द्वस्य पादयुगलस्य वंदनं नतिः खलु निश्चयेन चन्दनमिवास्ति। तापशमकत्वात्, शैत्यापादकत्वाच्च। अत्र गोविन्दपदं सम्बोधनमपि सम्भवति। अत्र वन्दनचन्दनपदयोरुपमेयोपमानयोर्नकारदकारवर्णावृत्तिर्वर्तत इत्यर्थानुप्रासता। ननु उपमेयोपमानयर्थसान्निध्येनात्र चारुताप्रतीतेः कथमत्र शब्दालङ्कारत्वमिति चेन्न। अत्र बहुतुल्यवर्णकपदबोध्यत्वसादृश्येनैव पूर्वमुपमानोपमेयभावप्रतीतिः। न तूपमानोपमेयभावबोधानन्तरवर्णावृत्तिप्रतीतिः। यद्यत्रार्थानुसन्धानेनोपमेयोपमानत्वप्रतीतिः स्यात्तदास्यार्थालङ्कारत्वं स्यात्। तथा च न। तेनार्थालङ्कारत्वमपि नेति स्फुटम्। अथवा पर्यायशब्दपरिवर्तनेऽपि योऽलङ्कारः स्यात्स एवार्थालङ्कारः। अन्यथा तु स शब्दगतः। अत्र तु तदर्थबोधकशब्दान्तरपरिवर्तने वर्णावृत्तेरभावान्नास्त्यर्थानुप्रासतेति शब्दालङ्कारतैवास्य स्फुटा। न च छेकानुप्रासेऽन्तर्भावः। तत्र सान्निध्यकृतताया रम-

यहाँ 'अर्धे' 'अर्धे' की आवृत्ति है। इसे कोई साहित्यदर्पण के श्रुत्यनुप्रास का भेद कह देते हैं ॥ ५ ॥

अर्थानुप्रास यह है—यदि उपमान और उपमेय में वर्णसाम्य हो वहां अर्थानुप्रास होता है। 'चन्दनं खलु गोविन्द' यह इसका उदाहरण है। गोविन्द के चरणद्वन्द्व का वन्दन ( नमस्कार ) चन्दन के समान शान्तिप्रद है। यहाँ वन्दन पद उपमेय और चन्दन पद उपमान है। इन उपमान और उपमेय दोनों में नकार तथा दकार वर्ण की आवृत्ति होने से अर्थानुप्रास है। अब यहाँ यह सन्देह होता है कि जब उपमान और उपमेयरूप अर्थ के ज्ञान से यहाँ अर्थानुप्रास होता है तो यह अलंकार शब्दगत क्यों माना जावे किन्तु यह तो अर्थगत होना चाहिए। इसका उत्तर यह है कि यहां अर्थज्ञान के अनन्तर उपमानोपमेयभाव का बोध नहीं होता किन्तु अर्थज्ञान से पूर्व ही समानवर्ण वाले पदों के ज्ञान से उसका बोध हो जाता है। अतः यह शब्दालङ्कार माना गया है। अथवा उसी अर्थ के बोधक दूसरे पद के रख देने से भी जहां अलङ्कारता नष्ट नहीं होवै वहां ही अर्थालंकारता मानी जाती है और जहां उसी अर्थ के बोधक दूसरे पद के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम्।
अंशुकान्तं शशी कुर्वन्नम्बरान्तमुपैत्यसौ ॥ ७॥
आवृत्तवर्णस्तबकं स्तवकन्दाङ्कुरं कवेः।

णीयतायाः सत्त्वात्। अत्र तु चन्दनवन्दनपदयोर्व्यवधानस्य सत्त्वात्। न चेदं लक्षणं स्फुटानुप्रासेऽतिव्याप्तम्। नियतवर्णावृत्त्यैव चारुत्वप्रतीतेः। किन्त्वत्रार्थसान्निध्याच्चारुताप्रतीतिरिति सर्वमवदातम् ॥ ६ ॥

पुनरुक्तप्रतीकाशं व्याचष्टे—पुनरिति। पुनरुक्तोऽर्थो यस्मिंस्तत् पुनरुक्तार्थं वाक्यम्। पुनरुक्तार्थेन सन्निभं सदृशं यद्वाक्यं तत्पुनरुक्तप्रतीकाशम्। प्रतिकाशत इति प्रतीकाशः। 'इकः काशे' (६।३।१२३) इत्यनेन दीर्घः। पुनरुक्तवत्प्रतीकाशः पुनरुक्तप्रतीकाशोऽलङ्कारः। आपाततो यत्रार्थः पौनरुक्त्येन भासते तत्रायमलङ्कार इति भावः। अयमेवालङ्कारः काव्यप्रकाशादौ पुनरुक्तवदाभासपदेनोच्यते। अयं शब्दार्थोभयालङ्कारोऽपि। शब्दपरिवृत्तिसहत्वासहत्वाभ्याम्। भिन्नार्थकत्वे सति भिन्नाकारशब्दगतपुनरुक्तवदाभासनत्वं पुनरुक्तप्रतीकाशत्वम्। उदाहरणं व्याचष्टे—अंशुकान्तमिति। असौ दृश्यमानः शशी चन्द्रः। अंशुभिः किरणैः कान्तं सुन्दरम्। कुर्वन् विदधत्। अम्बरान्तमाकाशान्तमुपैति गच्छति। अत्र 'अंशुकान्तमम्बरान्तम्' इति द्वयोः पदयोर्वसनाकाशरूपार्थभेदेऽपि केवलवसनरूपैकार्थत्वेन पुनरुक्ततया भानाल्लक्षणसङ्गतिः॥

यमकं व्याचष्टे—आवृत्तेति। माधुर्यं वचसि वचने येषां ते माधुर्यवचसः। धुर्या धुरीणाश्च ते माधुर्यवचसश्चेति धुर्यमाधुर्यवचसः प्रथमाः मुख्याः पूर्वकवयः। कवेः

---

रख देने से अलंकारता नष्ट हो जावै यहां शब्दगत अलंकार माना है। प्रकृतस्थल में तो चन्दनवन्दन पदों के परिवर्तन कर देने से अर्थानुप्रासता नहीं रहती अतः यह अलङ्कार शब्दगत ही मानना चाहिए। छेकानुप्रास में वर्णों की आवृत्ति में व्यवधान नहीं रहता। और यहां तो वन्दन और चन्दन पद दूर २ रखे गये हैं। स्फुटानुप्रास में नियत वर्णसाम्य से चारुता की प्रतीति होती है और यहां तो चारुता की प्रतीति में अर्थ की भी सहायता रहती है॥ ६॥

पुनरुक्तप्रतीकाश यह है—जहां पुनरुक्त अर्थ के सदृश पद होवें वहां पुनरुक्तप्रतीकाश अलङ्कार होता है। काव्यप्रकाशादि में इसे पुनरुक्तवदाभास कहते हैं—और इसे शब्दार्थोभयगत माना है। 'अंशुकान्तम्०' यह इसका उदाहरण है। अपनी किरणों से सुन्दरता को फैलाता हुआ चन्द्रमा आकाश में उदित होता है। अंशुक और अम्बर पद वस्त्ररूपी पुनरुक्त अर्थ के प्रकाशक-से मालूम हो रहे हैं अतः यहां पुनरुक्तप्रतीकाश है। अम्बर शब्द यहां आकाशवाचक है॥ ७॥

यमक का स्वरूप देखिए—मधुर भाषण करनेवाले प्राचीन विद्वानों ने कवि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यमकं प्रथमा धुर्यमाधुर्यवचसो विदुः ॥ ८ ॥

स्तवः स्तुतिस्तद्रूपो यः कन्दो बीजं तस्य वा यः कन्द आरम्भस्तस्याङ्कुरं प्रादुर्भावस्तथोक्तम् । आवृत्तः पुनरुक्तो वर्णानां स्तवकः समूहो यत्र तत् तथोक्तम् । यमकमलङ्कारं विदुः कथयन्ति । यमौ द्वौ समजातौ तौ तत्प्रकृति यमकम् । 'इवे प्रतिकृतौ' (५।३।९६) इति पाणिनिसूत्रेण कन्प्रत्ययः । अथवा यम्यते इति यमकम् । भिन्नार्थवर्णसमूहावृत्तित्वं यमकत्वम् । अनुप्रासे वर्णावृत्तेः स्थाननियमो नास्ति । अत्र तु वर्णावृत्तेः स्थाननियमोऽस्तीति द्वयोर्भेदः । क्वचिद्वर्णभेदेऽपि श्रुतिसाम्येन यमकं भवति ।

तदुक्तम्—'यमकादौ भवेदैक्यं डलयो रलयोर्बवोः ।
शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ।
सबिन्दुकाबिन्दुकयोः स्याद‌भेदप्रकल्पनम्' ॥ इति ।

यमकं हि एकस्मिन् द्वयोश्चतुर्षु वा पादेषु प्रयोक्तव्यं, न तु पादत्रये । 'यमकं तु विधातव्यं न कदाचिदपि त्रिपात्' इति निषेधात् । उदाहरणं त्विदमेव पद्यम् । 'स्तवकं स्तवकं माधुर्य माधुर्य' इति पादान्तवर्णावृत्तेः सत्त्वात् । यमकभेदा अनेके काव्यप्रकाशादावुक्ताः । तथा हि—मुख-संदंश-आवृत्ति-गर्भ-सन्दष्ट-पुच्छ-पङ्क्ति-परिवृत्ति-युग्मक-समुद्गक-महायमकान्येकादश भेदाः । पादभागवृत्तियमकेषु द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु च चत्वारिंशद्भेदाः । स्थानपरिवर्तने च-अन्तादियमक-आद्यन्तयमक-एतत्समुच्चय-मध्यादियमक आदिमध्ययमक-उभयसमुच्चय-अन्त्यमध्य-मध्यान्तिक-अन्त्यमध्यममध्यान्तसमु-

की प्रशंसा करनेवाले अनेक वर्णों की आवृत्ति के समूह को यमकालङ्कार बतलाया है । यम शब्द का अर्थ जोड़े का है । जो जोड़े के समान हो उसे यमक कहते हैं । अनुप्रास में वर्णों की आवृत्ति का कोई स्थान का नियम नहीं है । यहां तो स्थान का नियम है । यह इन दोनों का भेद जानना चाहिए । अक्षरों के भिन्न होने पर भी सदृश श्रवण होने के कारण यमक हो जाता है । जैसा कहा भी है डकार और लकार, र = ल, ब=व, श=ष, न=ण, सविसर्ग=अविसर्ग, बिन्दुसहित और बिन्दुरहित इन वर्णों की सत्ता में यमक माना गया है । यमक केवल तीन पाद में ही नहीं रहना चाहिए । यमक का उदाहरण यह ही श्लोक है 'स्तवकं स्तवकं' 'माधुर्य,माधुर्य' इस वर्णावृत्ति के पाद के अन्त में रहने से यहां पादान्तयमक है । काव्यप्रकाशादि ग्रन्थों में यमकके अनेक भेद लिखे हैं । यथा—मुख, संदंश, आवृत्ति, गर्भ, संदष्ट, पुच्छ, पंक्ति, परिवृत्ति, युग्मक, समुद्गक, महायमक ये एकादश भेद यमक के हैं । श्लोक के प्रत्येक चरण के दो-दो खण्ड करने पर यमक के बीस भेद, तीन-तीन खण्ड करने पर तीस भेद, चार-चार खण्ड करने पर चालीस भेद होते हैं । स्थानपरिवर्तन करने पर अन्तादियमक, आद्यन्तयमक और इन दोनों की एक जगह स्थिति, मध्यादियमक, आदिमध्ययमक, उभयसमु-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।
तेष्वाद्यमुच्यते श्लोकद्वयी सज्जनरञ्जिका ॥ ९ ॥
कामिनीव भवत्खड्गलेखा चारुकरालिका ।
काश्मीरसेका रक्ताङ्गी शत्रुकण्ठान्तिकाश्रिता ॥ १० ॥

चयादयो बहवो भेदाः । एतेषां लक्षणोदाहरणानि काव्यादर्शसरस्वतीकण्ठाभरण-काव्यप्रकाशादिषु द्रष्टव्यानि ॥ ८ ॥

चित्रालङ्कारमाह—काव्यविदिति । काव्यवित्प्रवरैः काव्यज्ञश्रेष्ठैः । चित्रं विचित्रं खड्ग इव बन्धो रचना यस्मिन्स खड्गबन्धः स आदिर्यस्य तत् । आदिपदेन पद्म-बंधादिग्रहणम् । तादृशी रचना चित्रालङ्कारो लक्ष्यते । यत्र खड्गादिसंनिवेशविशे-षेण न्यस्ता वर्णाः खड्गाद्याकारं प्रकटयन्ति तत्र चित्रालङ्कारः । खड्गबन्धादिविल-क्षणरचनात्वं चित्रालङ्कारत्वम् । शब्दपरिवृत्त्यसहत्वादस्य शब्दालङ्कारत्वम् । तेषु खड्गबन्धादिषु । सज्जनरञ्जिका सहृदयमनोविनोदिनी । श्लोकद्वयी द्वौ श्लोकौ खड्गबन्धात्मकौ । आद्यं खड्गबन्धाख्यं काव्यमुच्यते । इमावेव द्वौ श्लोकौ खड्गबन्धसन्निवेशविशिष्टौ लक्ष्यभूताविति भावः ॥ ९ ॥

खड्गबन्धान्तर्गतं द्वितीयं श्लोकमाह—कामिनीति । हे राजन् ! शत्रोः कामि-नीव कान्तेव । भवतः खड्गलेखाऽसिः । सज्जनरञ्जिका सहृदयमनोनुरञ्जिनी । अस्ति । तत्र कामिनीपक्षे तावत्–चारु सुन्दरं करालिकं हस्तललाटं यस्याः सा ता-दृशी । काश्मीरस्य कुङ्कुमस्य सेको यस्यां सा । तथा रक्तमङ्गं यस्याः सा रक्ताङ्गी रक्तवर्णा । अथवा काश्मीरसेकेनारक्तेति यावत् । शत्रोः कण्ठान्तिकं समीपमाश्रिता वैरिसमीपस्थेति यावत् । खड्गपक्षे चारुश्चासौ करालिका च तीक्ष्णा चेति चारुकरा-लिका । शत्रुकण्ठान्तिकाश्रिता वैरिकण्ठनिकटदेशमाश्रिता सती । काश्मीरसेकवत् कुङ्कुमलेपवद्रुधिरेणारक्तमङ्गं यस्याः सा तादृशी अस्ति । श्लोकद्वयीव कामिनी खड्ग-लेखा च सज्जनरञ्जिकास्तीति भावः ॥ १० ॥

चय, अन्त्यमध्य, मध्यान्तिक, अन्तमध्यम, मध्यान्तसमुच्चय आदि यमक के अनेक भेद होते हैं । इनका स्वरूप काव्यादर्श, सरस्वतीकण्ठाभरण, काव्यप्रकाशादि ग्रन्थों में देखना चाहिये ॥ ८ ॥

चित्रालंकार का स्वरूप यह है—काव्य के मर्मवेदियों ने खड्गबन्ध, पद्मबन्ध आदि को चित्रालंकार बतलाया है । उन खड्गबन्धादि चित्रालंकार के काव्यों में से सज्जनों के मनोरञ्जनार्थ दो श्लोकों का खड्गबन्ध बतलाया जाता है अर्थात् इसी मयूख के नवम और दशम ये दोनों श्लोक मिलकर खड्गबन्ध के रूप को धारण कर लेते हैं ॥ ९ ॥

'कामिनीव०' यह खड्गबन्ध का द्वितीय श्लोक है । शत्रुकामिनी के समान आपकी खड्गलता सज्जनों के मन को प्रसन्न करनेवाली है । कामिनी के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चममयूखीयनवमदशमश्लोकयोः खड्गबन्धचित्रमिदम् ।




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।
हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव ॥ ११ ॥

अर्थालङ्कारेष्वनेकालङ्कारव्यापितया प्रथममुपमां व्याचष्टे—उपमेति। यत्र वाक्ये। हृदये वक्षःस्थले। खेलतोः स्फुरतोः। उच्चैरुन्नतयोः। तनु अङ्गं यस्याः सा तस्याः स्तनयोः कुचयोरिव द्वयोरुपमानोपमेययोः सादृश्यस्य साधर्म्यस्य लक्ष्मीः शोभा समुल्लसति प्रकाशते। तत्रोपमालङ्कारः। उपमीयत इत्युपमा। उपमातेर्भावे 'आतश्चोपसर्गे' (३।३।१०६) इत्यनेनाङ्प्रत्ययः। उपमेयमुपमानं साधारणो धर्म उपमावाचकश्चेति चतुर्णां पदार्थानां सद्भावे पूर्णोपमा भवति। तत्र वर्ण्यमानमुपमेयमुपमातुं योग्यम्। उपमीयतेऽनेनेत्युपमानम्। द्वयोरनुगतो धर्मः साधारणो धर्मः। साधर्म्यबोधकंवस्तु तद्वाचकः पदार्थः। यत्र वर्ण्यमानः पदार्थ उत्कृष्टगुणवत्पदार्थेन सहोपमीयते तत्रोपमालङ्कारः। उदाहरणमपीदमेव पद्यम्। अत्र द्वयोरितीदं पदमुपमेयम्। स्तनयोरिति पदं चोपमानम्। सादृश्यलक्ष्मीरितिसाधारणधर्मः। इवपदमुपमावाचकम्। तेनात्र द्वयोरुपमानोपमेययोः स्तनयोरिव सादृश्यप्रतीतेः पूर्णोपमाल-

---

पक्ष में यह अर्थ है—सुन्दर हाथ पैरवाली कुङ्कुम लगाने से लाल शरीरवाली कामिनी शत्रुकण्ठ का आलिङ्गन करती है। खड्ग के पक्ष में यह अर्थ होता है—सुन्दर और तीक्ष्ण कुङ्कुम के रंग के समान रुधिर से लाल वर्णवाली खड्गलता शत्रुओं के गले में पड़ रही है। खड्गबन्ध का चित्र पृ० १०१ पर दिया गया है॥

अब अर्थालंकारों में सर्वप्रथम उपमा का निरूपण किया जाता है—कामिनी के वक्षस्थल में स्फुरण करते हुए दोनों स्तनों के समान जहाँ उपमान और उपमेय की समान शोभा प्रकाशित होवे वहाँ उपमालंकार जानना चाहिए। उप पूर्वक माङ् धातु से भाव में अङ् प्रत्यय करने पर उपमा शब्द बनता है। उपमान उपमेय साधारण धर्म और उपमावाचक इन चार पदार्थों के रहने पर पूर्णोपमा अलंकार होता है। उपमा के योग्य पदार्थ को उपमेय कहते हैं जिससे उपमा दी जावै उसे उपमान कहते हैं। उपमान और उपमेय इन दोनों में रहने वाले पदार्थ को साधारण धर्म कहते हैं। इव, यथा, आदि शब्द साधारण धर्म के वाचक होते हैं। उदाहरण के लिये 'उपमा यत्र सादृश्य०' यह ही श्लोक देखिए। इस श्लोक में 'द्वयोः' पद उपमेय है, 'स्तनयोः' पद उपमान है, 'सादृश्यलक्ष्मीः' यह पद साधारण धर्म है और इवपद उपमावाचक है। उपमान और उपमेय कामिनी के दोनों स्तनों की तरह हैं। अतः यहां पूर्णोपमालंकार है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ङ्कारः उक्तेषु चतुर्षु पदार्थेषु मध्ये कस्याप्येकस्यापि लोपे लुप्तोपमा भवति। तथा चोपमाभेदाः साहित्यदर्पणे परिगणिताः। तथा हि–पूर्णोपमा श्रौत्यार्थीभेदेन द्विधा। तेऽपि वाक्यसमासतद्धितगतत्वेन षड्विधे। एवं पूर्णोपमायाः षड् भेदाः। धर्मलुप्तोपमा च तद्धितगतश्रौतीमन्तरोक्तभेदैः पञ्चधा। पुनरपि सा धर्मलुप्ता कर्मविहितक्यचि, आधारविहितक्यचि, कर्मविहितणमुलि, कर्तृविहितणमुलि, क्यङि, पञ्चधा भवति। उपमानलोपे वाक्यसमासगतत्वेन द्वौ भेदौ। वाचकलोपे समासे क्विपि च द्वौ भेदौ। धर्मोपमानलोपे समासवाक्यगततया द्वौ भेदौ। धर्मवाचकलोपे च क्विपि समासे च द्वौ भेदौ। उपमेयलोपे क्यचि एको भेदः धर्मोपमेयलुप्तैका। धर्मवाचकोपमानलुप्ता चैका समा सगा। एवं सङ्कलने लुप्तोपमाया एकविंशतिभेदाः। पूर्णायाश्च षट्। सर्वे च सप्तविंशतिभेदा उपमायाः। काव्यप्रकाशे लुप्तोपमाया एकोनविंशतिभेदाः। ते चोक्तभेदेष्वन्तर्गताः। कुवलयानन्दे तु वाचकोपमानलोपे एको भेदोऽधिकः स्वीकृतः। तदुदाहरणं च 'काकतालीयम्' इत्यत्र समासार्थोपमा। काकागमनमिव तालपतनमिवेति काकतालमिति काकतालमागमसदृशस्तन्वीसमागम इति समासार्थोपमा। काकतालमिव

---

ऊपर के चारों पदार्थों में से किसी एक का भी लोप होने पर लुप्तोपमा कही जाती है साहित्यदर्पण में उपमा के सत्ताईस भेद बतलाये हैं। श्रौती और आर्थी ये दो पूर्णोपमा के भेद हैं। ये दोनों भेद वाक्य, समास और तद्धित में रहने के कारण पूर्णोपमा के छः भेद हुए। धर्मलुप्तोपमा तद्धित की श्रौती को छोड़कर पूर्णोपमा के समान पांच प्रकार की होती है। पुनः कर्म के क्यच् प्रत्यय में, आधार के क्यच् प्रत्यय में, कर्म के णमुल् प्रत्यय में, कर्ता के णमुल् प्रत्यय में और क्यच् प्रत्यय में धर्मलुप्तोपमा पांच प्रकार की होती है। वाक्य और समास में उपमानलुप्ता के दो भेद हैं। समास और क्विप् प्रत्यय में वाचकलुप्ता के दो भेद हैं। समास और वाक्य में धर्मोपमानलुप्ता के दो भेद हैं। धर्मवाचकलुप्ता क्विप् प्रत्यय और समास में दो प्रकार की होती है। उपमेय का लोप होने पर एक भेद होता है। एक भेद धर्मोपमेय के लोप होने पर होता है। धर्म, वाचक और उपमान का लोप होने पर समास में एक भेद लुप्तोपमा का होता है। इस प्रकार लुप्तोपमा के इक्कीस भेद होते हैं और पूर्णोपमा के छै भेद मिलकर कुल सत्ताईस भेद उपमा के होते हैं। काव्यप्रकाश के उपमा के पचीस भेद इन्हीं भेदों के अन्तर्गत हो जाते हैं। कुवलयानन्द में वाचकोपमानलुप्ताका एक भेद और माना है। 'काकतालम्' यहां वाचकपद तथा तालफल का आस्वादनरूपी उपमान का लोप होने से यह उसका उदाहरण है। काव्यादर्श में दण्डी ने धर्मो-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काकतालीयमिति तु प्रत्ययार्थोपमा। काव्यादर्शे दण्डिना धर्मोपमा-वस्तूपमा-विपर्यासोपमा-अन्योन्योवमादयो द्वात्रिंशद्भेदा उपमाया उक्ताः। ते च तत्रैव २यपरिच्छेदे १४-५० श्लोकेषु विलोकनीयाः। दण्डिना तत्रैवोपमावाचकपदानीमानि संगृहीतानि

इववद्वायथाशब्दाः समाननिभसन्निभाः। तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः। सदृक्सदृसवादिसजातीयानुवादिनः॥
प्रतिविम्बप्रतिच्छन्दसरूपसमसंमिताः। सलक्षणसदृक्षाभसपक्षोपमितोपमाः॥
कल्पदेशीयदेश्यादिप्रख्यप्रतिनिधी अपि। सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः॥
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु। स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति॥
आक्रोशत्यवजानाति कदर्थयति निन्दति। विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति।
तेन सार्धं विगृह्णाति तुलां येनाधिरोहति॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते। तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः॥ (२ परि० ५७-६५ श्लो०)

---

पमा; वस्तूपमा; विपर्यासोपमा; और अन्योन्योपमा आदि उपमा के बत्तीस भेद माने हैं ( देखिए द्वितीय परिच्छेद के १४-५० तक के श्लोक ) दण्डी ने अपने ग्रन्थ में उपमाचक पदों का यह संग्रह किया हैं। इव, वत्, वा, यथा, समान, निभ, संनिभ, तुल्य, संकाश, नीकाश, प्रकाश, प्रतिरूपक, प्रतिपक्ष, प्रतिद्वन्द्वी प्रत्यनीक, विरोधी, सदृक्, सदृश, संवादी, सजातीय, अनुवादी, प्रतिविम्ब, प्रतिच्छेद, सरूप, सम, संमित, लक्षण, सदृक्ष, सपक्ष, उपमित, उपमा, कल्प, देश्य, देशीय, प्रख्य, प्रतिनिधि, सवर्ण, तुलित, और अन्यून अर्थ के बोधक पद, शशांकवदना आदि पदों में बहुव्रीहि समास तथा स्पर्धते (स्पर्धा करता है),जयति (वजय करता है), द्वेष्टि ( द्वेष करता है ), द्रुयति ( द्रोह करता है ), प्रतिगर्जति ( प्रतिगर्जन करता है ), आक्रोशति ( निन्दा करता है ); अवजानाति ( घृणा करता है ), कदर्थयति ( कष्ट देता है ), निन्दति ( निन्दा करता है ), विडम्बयति ( अनुकरण करता है ), संधत्ते ( संधि करता है ) हसति ( हंसता है ), ईर्ष्यति ( ईर्ष्या करता है ), असूयति ( डाह करता है ), उसकी शोभा का हरण करता है, उसकी कान्ति छीन लेता है, उससे झगड़ा करता है, उसके साथ तुला पर चढ़ता है, उसके मार्ग में पैर रखता है, उसकी श्रेणी में रहता है, अन्वेति, अनुबध्नाति ( अनुगमन करता है उसका निषेध करता है और अनुकरण आदि अनेक शब्द उपमा के बोधक होते हैं। ( काव्यादर्श २ परि० ५७-६५ श्लोक० )



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एषूपमावाचकेषु पदेष्विवशब्दोऽपि तद्वाचकत्वेन संगृहीतः। अयं चोत्प्रेक्षाद्योतकोऽपीति तद्भेदनिरसनाय चक्रवर्त्तिनोक्तम्—

'यदायमुपमानांशो लोकतः सिद्धिमृच्छति। तदोपमैव येनेवशब्दः साधर्म्यसूचकः॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैव येनवशब्दः सम्भावनापरः' इति इयमुपमैवोक्तिवैचित्र्येणानेकालङ्कारतां भजति। यथोक्तं चित्रमीमांसायाम्—

'तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात्।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा'॥ इति।

उपमाया अनेकालङ्कारव्यापिताऽऽलङ्कारलक्षणप्रस्तावे १०२ पृष्ठे प्रदर्शिता। रुद्रटभट्टेनार्थालङ्काराणां प्राधान्येन वास्तवम्, औपम्यम्, अतिशयः, श्लेषश्चेति चत्वारो भेदा उक्ताः। तेषु वास्तवस्य सहोक्तिसमुच्चयादित्रयोविंशत्यलङ्कारभेदाः। उपमोत्प्रेक्षादय एकविंशत्यलङ्कारा औपम्यभेदाः। पूर्वविशेषविभावनादयो द्वादशालङ्कारा अतिशयभेदाः। वक्रोक्तिव्याजोक्त्यादयो दश भेदाः श्लेषस्येति रुद्रटीयकाव्यालङ्कारे विलोकनीयम्। रुद्रटेन स्वग्रन्थे प्रायोऽनेकेषां वर्ण्यपदार्थानामुपमानान्यपि संगृहीतानि तानि च तत्रैव दृश्यानि। रूपकादौ साम्यस्य व्यञ्जनया प्रतीतिः, व्यतिरेकालङ्कारे च वैधर्म्यस्यापि कथनम्, उपमेयोपमालङ्कारे वाक्यद्वयम्, अनन्वये चैक

इव शब्द उपमावाचक और उत्प्रेक्षावाचक भी होता है। जब इवशब्द लोक में प्रसिद्ध साधर्म्य का बोधक होवै तब यह उपमावाचक होता है। लोक में अप्रसिद्ध तथा कवि की बुद्धि से कल्पित साधर्म्य का बोधक इवपद उत्प्रेक्षाद्योतक होता है। यह काव्यप्रकाश की चक्रवर्ती-रचित टीका में स्पष्ट कर दिया गया है। यह उपमालङ्कार ही वाणी की चातुरी से अनेक अलङ्कारों के रूप को धारण कर लेता है। यह इसी मयूख के प्रथम श्लोक की टीका में स्पष्ट कर दिया गया है। रुद्रट ने अपने काव्यालङ्कार नामक ग्रन्थ में अर्थालंकारों का निम्नलिखित चार पदार्थों में अन्तर्भाव किया है—वास्तव, औपम्य, अतिशय, श्लेष, ये चार पदार्थ हैं। इनमें सहोक्ति, समुच्चय आदि तेईस अलङ्कार वास्तव के भेद हैं। उपमा, उत्प्रेक्षा आदि इक्कीस अलङ्कार औपम्य के भेद हैं। पूर्व, विशेष, विभावना आदि बारह अलङ्कार अतिशय के भेद हैं। वक्रोक्ति, व्याजोक्ति आदि दश अलङ्कार श्लेष के भेद माने गये हैं। रुद्रट ने अपने ग्रन्थ में उपमान पदार्थ का भी संग्रह किया है और लिखा है कि नेत्र का सादृश्य इन-इन पदार्थों से बतलाना चाहिए।

रूपक अलङ्कार में साम्य की प्रतीति व्यञ्जना से होती है और उपमा अलङ्कार में साम्य की प्रतीति अभिधा से ही हो जाती है। अतः ये दोनों आपस में भिन्न हैं। इसी प्रकार व्यतिरेक में वैधर्म्य की भी प्रतीति का होना, उपमेयोपमालङ्कार में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उपमानोपमेयत्वे यत्रैकस्यैव जागृतः।
इन्दुरिन्दुरिवेत्यादौ भवेदेवमनन्वयः ॥ १२ ॥
पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता।

रस्यैव साम्यवचनमित्येतेभ्य उपमाया भेदोऽवसेयः। उपमा च शब्दमात्रस्य साम्येऽपि भवतीति श्लेषप्रकरणे किञ्चिदुदाहरिष्यामः। इत्थं च—अन्यनिरूपितमन्यनिष्ठचमत्काराधायकं वाच्यं सादृश्यमुपमालङ्कारत्वम् ॥ ११ ॥

अनन्वयं लक्षयति—उपमानेति। यत्र यस्मिन् स्थले। एकस्यैव वर्ण्यमानस्य पदस्य। इन्दुश्चन्द्रः इन्दुरिव चन्द्र इवेत्यादिस्थले। उपमानं चोपमेयं चोपमानोपमेये तयोर्भावावुपमानोपमेयत्वे जागृतः स्फुटं स्तः। एवमित्थम्। न विद्यतेऽन्वय उपमानान्तरेण सम्बन्धो यत्र सोऽनन्वयः भवेत्स्यात्। यत्रैकस्यैवोपमानत्वमुपमेयत्वं च स्यात्तत्रानन्वय इति भावः। उपमानतावच्छेदकोपमेयतावच्छेदकसाधारणधर्मावच्छेदकैक्यविशिष्टापन्नैकोऽयमिति तत्रानन्वय इति तत्त्वम्। अयं पूर्णो लुप्तश्चेति द्विविधः। उदाहरति—इन्दुरिति। अत्रैकस्यैवेन्दोरुपमेयत्वमुपमानत्वमस्तीत्यनन्वयोऽलङ्कारः। सदृशवस्त्वन्तरव्यवच्छेदार्थमेकस्य वस्तुन उपमानोपमेयत्वे क्रियेते। यथा—

'गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव' ॥ इति ॥ १२ ॥

उपमेयोपमां व्याचष्टे—पर्यायेणेति। चेद् यदि। द्वयोर्भिन्नयोः। पदार्थयोः। पर्यायेण क्रमेण। वाक्यभेदेनेति यावत्। तद् उपमानत्वमुपमेयत्वं च स्यात्तदोप-

---

दो वाक्यों का होना, अनन्वय में एक ही पदार्थ का सादृश्य होना आदि उपमा से भिन्न होने में कारण है। केवल शब्दमात्र के साम्य होने पर भी उपमा होती है। इसका उदाहरण श्लेषप्रकरण में बतावेंगे ॥ ११ ॥

अनन्वय का लक्षण यह है—जहाँ एक ही पदार्थ को उपमान वा उपमेय बनाया जावै वहाँ अनन्वय अलङ्कार होता है। जैसे चन्द्रमा चन्द्रमा के ही समान है अर्थात् इसके समान और कोई पदार्थ नहीं है, यह तात्पर्य हुआ। यथा वा—आकाश आकाश ही के समान, सागर सागर ही के समान, राम और रावण का युद्ध राम और रावण के ही युद्ध के समान है। इस अनन्वय के भी पूर्ण और लुप्त रूप से दो भेद होते हैं ॥ १२ ॥

उपमेयोपमा यह है—जहाँ प्रथम वाक्य के उपमेय वा उपमान को दूसरे वाक्य में क्रम से उपमान वा उपमेय बना दिया जावै वहाँ उपमेयोपमा अलङ्कार

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ १३ ॥
विख्यातस्योपमानस्य यत्र स्यादुपमेयता ।
इन्दुर्मुखमिवेत्यादौ स्यात्प्रतीपोपमा तदा ॥ १४ ॥
उपमाने तु लीलादिपदाढ्ये ललितोपमा ।

---

मेयोपमाख्योऽलङ्कारो मतः । उपमेयेनोपमोपमेयोपमा अर्थात्प्रथमवाक्ये यदुपमेयं तदेव द्वितीयवाक्ये उपमानं स्यात्तत्रायमलङ्कारः । अनन्वये द्वितीयसदृशवस्तु व्यवच्छेदः । अत्र तु तृतीयसदृशवस्तुव्यवच्छेदः । अस्याप्युपमावत्पूर्णादिभेदा ऊह्याः । उदाहरति—धर्म इति । हे राजन् ! त्वयि भवति । धर्मः श्रुतिस्मृतिविहितो धर्मः । अर्थ इव पूर्णा श्रीः शोभा यस्य स तादृशोऽस्ति । अर्थश्च धर्म इव पूर्णश्रीरस्ति । धर्मार्थावुभावपि त्वयि पूर्णाविति भावः । अत्र प्रथमवाक्ये उपमेयं धर्मपदार्थः, स एव द्वितीयस्मिन् वाक्ये तमेव साधारणधर्ममादायोपमानतां लेभ इत्युपमेयेनोपमेयोपमालङ्कारः ॥ १३ ॥

प्रतीपोपमां व्याचष्टे—विख्यातस्येति । यत्र विख्यातस्य प्रसिद्धस्य । उपमानस्योपमानतया विदितस्य उपमेयता स्यात् तत्र इन्दुश्चन्द्रो मुखमिवेत्यादौ प्रतीपोपमा स्यात् । प्रतीपा चासावुपमा चेति प्रतीपोपमा । विख्यातस्येति पदोपादानेऽप्रसिद्धोपमानस्योपमेयतायां नायमलङ्कारः । प्रसिद्धोपमानसम्बन्ध्युपमेयत्ववर्णनं प्रतीपोपमात्वम् । 'इन्दुर्मुखमिव' लक्ष्यम् । इन्दुपदं मुखस्योपमानतया प्रसिद्धं सर्वत्र । तदेवात्रोपमेयमिति लक्षणसङ्गतिः ॥ १४ ॥

ललितोपमां लक्षयति—उपमान इति । उपमाने लीलादिपदाढ्ये सति तु

---

होता है । तात्पर्य यह हुआ कि प्रथम वाक्य का उपमेय दूसरे वाक्य में उपमान बना दिया जावे तो यह अलंकार होता है । हे राजन् ! आप में धर्म अर्थ के समान संपूर्ण है और अर्थ धर्म के सदृश सम्पूर्ण है । अर्थात् धर्म और अर्थ ये दोनों आप में संपूर्ण रूप से वर्त्तमान हैं । यहां प्रथम वाक्य के उपमेय धर्मपद को द्वितीय वाक्य में उपमान बना देने से उक्त अलंकार है ॥ १३ ॥

प्रतीपोपमा का लक्षण देखिये—विख्यात उपमान को उपमेय बनाने पर प्रतीपोपमा अलंकार होता है । 'इन्दुर्मुखमिव' चन्द्रमा मुख के समान है । चन्द्रमा उपमान रूप से सर्वत्र प्रसिद्ध है । उसी को यहां उपमेय बना देने से प्रतीपोपमा अलंकार हुआ है ॥ १४ ॥

ललितोपमा यह है—उपमान के साथ लीलादि पद के रहने पर ललितोपमा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ १५ ॥
अनेकस्यार्थयुग्मस्य सादृश्यं स्तवकोपमा।
श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसं यथा ॥ १६ ॥
स्यात्संपूर्णोपमा यत्र द्वयोरपि विधेयता।
पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥ १७ ॥

लीलादिपदालंकृते सति। ललिता चासावुपमा चेति ललितोपमालङ्कारः। उदाहरति—त्वदिति। त्वन्नेत्रयोर्युगलं त्वदीयनयनद्वन्द्वम्। अम्बुनो जन्म ययोस्तेऽम्बुजन्मनी नीले च तेऽम्बुजन्मनी चेति नीलाम्बुजन्मनी तयोः। लीलां विलासं धत्ते दधाति। कामिनीनयने नीलकमललीले स्त इति भावः। अत्रोपमाने नीलकमलपदे लीलापदालंकृते सति ललितोपमालक्षणसङ्गतिः। एतेन नेत्रयुगले नीलोत्पलगतलीलापदार्थारोपो भवति ॥ १५ ॥

स्तवकोपमां व्याचष्टे—अनेकेति। यत्र अनेकस्यार्थयुग्मस्यार्थयुगलस्य सादृश्यं साधर्म्यं तत्र स्तवकेनोपमा स्तवकोपमा। अनेकयोरुपमानोपमेययोः साधर्म्ये स्तवकोपमेति भावः। उदाहरति—श्रित इति। भृङ्गः षट्पदः। तामरसं कमलं यथा तथाहं विष्णोश्चरणौ श्रितोऽस्मि। अत्रास्मत्पदस्य भृङ्गमुपमानम्। चरणयोश्च तामरसम्। एते उपमानोपमेयद्वये आदायात्रोपमेति स्तवकोपमा। अनेके उपमानोपमेययुगले यत्र स्तस्तत्रायमलङ्कार इति भावः ॥ १६ ॥

सम्पूर्णोपमां व्याहरति—स्यादिति। यत्र द्वयोरुपमानोपमेययोरपि विधेयता वर्ण्यमानता स्यात्तत्र सम्पूर्णा चासावुपमा चेति सम्पूर्णोपमा। द्वयोरुपमानोपमेययोर्मध्ये यत्रैकस्य विधेयता वाच्यता स्यात्तत्र सेति रमाव्याख्याकृत्। उदाहरति—पद्मानीति। अहर्मुखे प्रातःकालेऽरुणोदयवेलायाम्। पद्मानीव कमलानीव नेत्राणि नयनानि

---

होती है। उदाहरण 'त्वन्नेत्रयुगलम्०' तेरे नेत्रद्वन्द्व नीले कमल की लीला को धारण करते हैं यहाँ नीलकमल उपमान है और उसके साथ लीलापद का भी ग्रहण किया गया है। इससे नीलकमल की लीला (विलास) कामिनी के नेत्र में भी प्रतीत होती है ॥ १५ ॥

स्तवकोपमा का यह स्वरूप है—जहाँ अनेक उपमानोपमेयद्वन्द्व का सादृश्य हो वहां स्तवकोपमा होती है। 'श्रितोऽस्मि०' यह इनका उदाहरण। जैसे भ्रमर कमल का आश्रय करता है वैसे ही मैं भगवान् विष्णु के चरणों का आश्रय करता हूँ। यहाँ मैं पद (अहंपद) का उपमान भृङ्ग है और चरण का तामरस उपमान है। इस उपमानोपमेय द्वन्द्व से ही यहाँ उपमा होती है अतः स्तवकोपमा है ॥ १६ ॥

संपूर्णोपमा का लक्षण यहां है—जह उपमान और उपमेय ये दोनों वर्णन के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्रोपमानचित्रेण सर्वथाप्युपरज्यते।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते॥ १८॥

विनिद्राणि निद्रारहितानि । विकसितानीति यावत्। आसन् बभूवुः। प्रातःकालवर्णने कमलानां विकासः, नेत्राणामुन्निद्रत्वमिति द्वयमपि प्रस्तुतमेव तेनात्र सम्पूर्णोपमा॥ १७॥

अथाभेदप्रधानेषु रूपकं लक्षयति—यत्रेति। रूपयत्युपमानोपमेययोरभेदारोपेणैकतां नयतीति रूपकम्। कुवलयानन्दव्याख्यायामाशाधरभट्टास्तु 'रूपत्वंकरोतीति रूपयतीति वा रूपको लक्षणाविशेषः। रूपयुक्तं करोतीत्यर्थः। सोऽस्मिन्नस्तीति रूपकमलङ्कारः' इत्याहुः। उपमानोपमेययोरभेदारोपश्चातिसाम्यद्योतनाय क्रियते। यत्र यस्मिन्स्थले। उपमानमेव चित्रमुपमानचित्रं तेन। उपमेयरूपेत्युपमेयी भित्तिः सर्वथा सर्वतोमुखी। उपरज्यते उपरक्ता भवति। आहार्यनिश्चयविषयीक्रियत इति भावः। तत्र स्थले रूपकमलङ्कार इष्यते। यत्रोपमानोपमेययोरभेदारोपस्तत्र रूपकमित्यर्थः। उपमेये उपमानारोपो रूपकम्। उपमानरूपेणोपमेयस्य रञ्जनं वा रूपकम्। अपह्नुतौ निह्नवो भवति नात्र। परिणामे चोपमानमुपमेयरूपेण क्रियार्थान्वयि भवतीति भेदः। उदाहरणं त्विदमेव। उपमानमेव चित्रमिति समासे उपमाने चित्रारोपात्, उपमेयमय्येव भित्तिरित्यसमासे उपमेये भित्तितादात्म्यारोपाच्च। उपमानं चित्राभिन्नं सत्प्रतीयत इति तयोर्भेदेऽप्यभेदारोपाद्रूपकम्। काव्यप्रकाशे दर्पणे च रूपकस्याष्टौ

---

योग्य प्रस्तुत रहें वहां संपूर्णोपमा होती है। 'पद्मानीव विनिद्राणि०' यह इसका उदाहरण है। प्रातःकाल में पद्मों के समान मनुष्यों के नेत्र भी निद्रारहित हो गये अर्थात् खुल गये। प्रातःकाल के वर्णन में कमलों का विकास और नेत्रों का खुलना इन दोनों ही का वर्णन प्रस्तुत रहता है। अतः यहां संपूर्णोपमा अलंकार है॥१७॥

रूपक का लक्षण यह है—जहां उपमान और उपमेय में एकता का आरोप किया जावे वहां रूपक होता है। अत्यन्त सादृश्य दिखलाने के लिये उन दोनों में एकता (अभेद) का आरोप किया जाता है। जहां उपमेयरूपी भित्ति उपमानरूपी चित्र से रंग दी जावे वहां रूपक होता है। अर्थात् जहां उपमेय में उपमान का आरोप करके अभेदान्वय हो वहां रूपक होता है। अपह्नुति में निषेधपूर्वक आरोप किया जाता है। परिणाम में उपमान उपमेय से अभिन्न होकर क्रिया में उपयोगी होता है। अतः इन दोनों से रूपक अलंकार भिन्न ही हैं। उदाहरण के लिये यही श्लोक देखिए। 'उपमानचित्रेण' यहां उपमान में चित्र का आरोप और 'उपमेयमयी भित्तिः' यहां उपमेय में भित्ति का आरोप करने से इन दोनों में अभेद का बोध होता है। अतः रूपक अलंकार है। काव्यप्रकाश व साहित्यदर्प-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## समानधर्मयुक्साध्यारोपात्सोपाधिरूपकम् ।

भेदा इमे—साङ्गं निरङ्गं परम्परितं चेति त्रिविधं रूपकम् । तत्र साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्ति चेति द्विविधम् । केवलं मालारूपं चेति निरङ्गस्यापि द्वौ भेदौ । परम्परितं तु श्लिष्टाश्लिष्टतया केवलमालारूपाभ्यां च चतुर्विधमिति सर्वसङ्कलनेऽष्टौ भेदाः । कुवलयानन्दे चेमे रूपकस्यान्ये षड् भेदाः—अभेदरूपकं ताद्रूप्यरूपकं चेति प्रथमं द्वौ भेदौ । प्रसिद्धविषयिण आधिक्यवर्णनेन, न्यूनत्ववर्णनेन, अनुभयवर्णनेन द्विविधरूपकस्य षड् भेदाः । सरस्वतीकण्ठाभरणे च रूपकरूपकमपीति सर्वं मिलित्वा पञ्चदश रूपकभेदाः । अस्मिन् ग्रन्थे तु सोपाधिरूपकं, सादृश्यरूपकं, आभासरूपकं, रूपितरूपकं चेति चत्वारो भेदाः ॥ १८ ॥

सोपाधिरूपकं व्याचष्टे—समानेति । समानश्चासौ धर्मश्चेति समानधर्मः । युज्यतेऽनेनेति युक् । अत्र 'स्त्रियां क्तिन्' (३।३।९४) इति सूत्रान्तर्वर्त्तिना 'सम्पदादिभ्यः क्विप्' इति वार्तिकेन भावे क्विप् प्रत्ययः । समानधर्मस्य युक् तेन सदृशधर्मयोगेनेत्यर्थः । साध्यः साधयितुं योग्यः प्रकृतारोपः प्रधानारोपस्तस्मात् सोपाधिरूपकं भवति । उपाधिना सहितं सोपाधि तादृशं च तद् रूपकं चेति सोपाधिरूपकम् । अयमाशयः—यत्रारोपविषयवाचकपदान्ते ( उपमेयान्ते ) आरोप्यमाणवाचकपदस्य (उपमानस्य) प्रयोगस्तत्र रूपकम् । यत्र च द्वयोरुपमानोपमेययोः साधारणधर्मोपादानमन्ते उपमानवाचकपदप्रयोगस्तत्र सोपाधिरूपकमिति । अथवा यत्राप्रकृतारोपः प्रकृतारोपनिर्वाहकस्तत्रेदमिति । साहित्यदर्पणादाविव परम्परितरूपकनाम्नो-

---

णादिक में रूपक के ये आठ भेद हैं । साङ्ग ( सावयव ), निरङ्ग ( निरवयव ) और परम्परित ये रूपक के तीन भेद हैं । इनमें साङ्ग के समस्त-वस्तुविषय और एकदेश-विवर्त्ति ये दो भेद हैं । केवल निरङ्ग व मालारूप निरङ्ग ये दो भेद निरङ्ग के हैं । श्लेषमूलक, श्लेषरहित, केवलरूप और मालारूप भेद से परम्परितरूपक चार प्रकार का है । एवं कुल आठ भेद होते हैं । कुवलयानन्द में इसके छः भेद माने हैं । वे ये हैं—आधिक्याभेदरूपक, न्यूनाभेदरूपक, अनुभयाभेदरूपक, अधिकताद्रूप्यरूपक, न्यूनताद्रूप्यरूपक और अनुभयताद्रूप्यरूपक । सरस्वतीकण्ठाभरण में रूपकरूपक भी माना है । इस प्रकार वे सब मिलकर रूपक के पन्द्रह भेद होते हैं । इस ग्रन्थ में तो सोपाधिरूपक, सादृश्यरूपक, आभासरूपक और रूपितरूपक ये चार भेद माने गये हैं ॥ १८ ॥

सोपाधिरूपक का स्वरूप यह है—समान धर्म के उपादान से जहां आरोप-सिद्धि होवे वहां सोपाधिरूपक होता है । आशय यह हुआ कि जहां एक आरोप प्रधान आरोप के प्रति कारण हो, वह सोपाधिरूपक है । साहित्यदर्पणादि ग्रन्थों में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्सिक्तक्षितिभृल्लक्ष्यपक्षच्छेदपुरन्दरः ॥ १९ ॥
पृथक्कथितसादृश्यं दृश्यं सादृश्यरूपकम् ।
उल्लसत्पञ्चशाखस्ते राजते भुजभूरुहः ॥ २० ॥

च्यते । तत्र चास्येदं लक्षणम्—'यत्र कस्यचिदारोपः परारोपणकारणम्' इति । उदाहरणं व्याचष्टे—उत्सिक्तेति । उत्सिक्ता उन्नता उन्मत्ताश्च, ये क्षितिभृतः पर्वता एव क्षितिभृतो राजानस्तेषां लक्ष्यभूता ये पक्षा एव पक्षाः सहायकाः, तेषां छेदने पुरन्दर इन्द्र एव राजास्ते । यथेन्द्रः पर्वतपक्षच्छेदने समर्थस्तथैवायं प्रमत्तनृपसहायकभेदेन इति भावः । उन्मत्तभूधराभिन्ननृपसम्बन्धिलक्ष्यभूतपक्षाभिन्नसहायच्छेदनानुकूलव्यापारवत्पुरन्दराभिन्नोऽयं नृप इति भावः । अत्रोत्सिक्तादिसमानधर्मसम्बन्धेन राजनि पुरन्दरत्वारोपः सिद्धो भवतीति सोपाधिरूपकम् । उपमानोपमेयसाधारणधर्मोत्तरं पुरन्दरारोप इति सोपाधिरूपकम् । यद्वा क्षितिभृतः पर्वता एव राजान इति पर्वतेषु राजत्वारोपः, पक्षा एव पक्षाः सहाया इति पक्षेषु सहायकत्वारोपश्च राजनि प्रकृते पुरन्दरत्वारोपं प्रति निमित्तमिति लक्षणसंगतिः ॥ १९ ॥

सादृश्यरूपकं व्याचष्टे—पृथगिति । पृथक् पृथक् पदेन कथितमुक्तं सादृश्यं साम्यं यस्मिंस्तत् तादृशम् । दृश्यं दर्शनार्हं रम्यमिति भावः, सादृश्यरूपकं भवति । सदृशयोर्भावः सादृश्यं तच्च तत् रूपकं चेति सादृश्यरूपकम् । यत्रारोप्यधर्माणां शब्दतो ग्रहणं तत्रेदम् । इदमेव च समस्तवस्तुविषयं सावयवं ( साङ्गम् ) रूपकमुच्यते दर्पणादौ । उदाहरणं व्याचष्टे—उल्लसदिति । हे राजन् ! उल्लसन्त्यः शोभमानाः पञ्च पञ्चसंख्यकाः शाखा अङ्गुलिरूपा यस्मिन्सः । ते भुजः कर एव भूरुहो वृक्षो राजते शोभते । अत्र भुजे तरुत्वारोपः कृतस्तस्याङ्गुलिषु पञ्चशाखत्वारोपेण सादृश्यं पृथ-

इसे परम्परितरूपक कहा है । इसका उदाहरण यह है—उन्नत पर्वतरूपी राजाओं के पक्ष ( पंख ) रूपी सहायक पुरुषों के छेदन करने में यह राजा इन्द्र है । अर्थात् जैसे पर्वतों के पक्ष काटने में इन्द्र समर्थ है वैसे ही यह राजा उन्मत्त राजाओं के सहायक पुरुषों को दण्ड देने में समर्थ है । उत्सिक्त ( ऊंचे और उन्मत्त ) रूप साधारणधर्म के कारण राजा में इन्द्र का आरोप सिद्ध होता है । अथवा यहाँ क्षितिभृत् के पर्वत व राजा, और पक्षपद के पंख व सहायक ये दो-दो अर्थ हैं । अतः यहाँ सोपाधिरूपक है ॥ १९ ॥

सादृश्यरूपक यह है—जहाँ उपमान और उपमेय इन दोनों का अलग २ पदों से सादृश्य बतलाया गया हो वहाँ सादृश्यरूपक होता है । उदाहरण यह है—पाँच अङ्गुलिरूपी शाखाओं से युक्त आपका यह हाथरूपी वृक्ष शोभित है । यहाँ भुजा में वृक्ष का आरोप किया है । ततः वृक्षशाखाओं की समता के लिये हाथ की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम् ।
अङ्गयष्टिधनुर्वल्लीत्यादि रूपितरूपकम् ॥ २१ ॥
परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति ।

---

युक्तमिति सादृश्यरूपकम् ॥ २० ॥

आभासरूपकं लक्षयति—स्यादिति । अङ्गं शरीरमेव यष्टिरित्येवंविधमाभासरूपकं भवति । अत्राङ्गे यष्टित्वारोपो न सुन्दर इत्यत्र रूपकस्याभासमात्रत्वम् । केवलं लम्बायमानत्वसमानधर्ममादायारोपो विहितः । रूपितरूपकं व्याचष्टे—अङ्गेति । अङ्गमेव यष्टिः, धनुरेव वल्ली, अङ्गयष्टिरेव धनुर्वल्लीत्यादिरूपितरूपकं भवति । रूपितेनारोपेण रूपकं रूपितरूपकम् । अङ्गे यष्टित्वारोपेण धनुषि वल्लीत्वारोपेण चाङ्गयष्ट्यां धनुर्वल्लीत्वारोपो रूपितरूपकमिति लक्षणसमन्वयः । रूपकं तावद्द्विधा रूपकान्तरसहिष्णु तदसहिष्णु च । अङ्गयष्टिधनुर्वल्लीत्यादि प्रथमम् । अङ्गधनुर्वल्लीत्यादि कथने भिन्नलिङ्गत्वेनारम्यत्वापत्तेः। कुचकलशकोकयुगलमित्यत्र रूपकान्तरासहिष्णुः द्वितीयो भेदः । एकरूपकस्यैव रम्यत्वात् । एवं च सोपाधिरूपकादीनि रूपकान्तरासहिष्णुभेदान्तर्गतानि, इदं तु रूपकान्तरसहिष्ण्विति भेदः ॥ २१ ॥

परिणामं व्याचष्टे—परिणाम इति । यस्मिन्काव्ये। अनयोरारोप्यमाणारोपविषययोः अभेद ऐक्यम् । पर्यवस्यति क्रियासम्बन्धे भवति तत्र परिणामालङ्कारः ? ननु रूपकेऽप्युपमानोपमेययोरभेदो भवतीति । नास्त्यनयोर्भेदः अत एव च काव्यप्रकाशे परिणा-

---

अङ्गुलियों में शाखाओं का आरोप किया । अतः सादृश्यरूपक हुआ । इसे ही सावयव ( साङ्ग ) रूपक कहते हैं ॥ २० ॥

आभासरूपक का स्वरूप यह है । जहाँ शरीर में यष्टि आदि का आरोप ( अङ्गरूपी यष्टि ) किया जावै वहाँ आभासरूपक होता है । अङ्ग में यष्टि के आरोप से कोई सुन्दरता की प्रतीति नहीं होती, केवल लम्बेपन को देख कर यष्टि का आरोप कर दिया गया है । अतः ऐसी जगह रूपक का आभास ( छाया ) मात्र प्रतीत होता है । इसीलिये इसे आभासरूपक कहते हैं । रूपितरूपक का स्वरूप यह है—आरोपित पदों का जहाँ आरोप किया जावै वह रूपितरूपक होता है । जैसे 'अङ्गयष्टिधनुर्वल्ली' पद में पहिले अङ्ग में यष्टि का और धनुः में वल्ली का आरोप किया और फिर इन दोनों ( अङ्गयष्टि पद में धनुर्वल्ली ) का आरोप किया अतः यहाँ रूपितरूपक है ॥ २१ ॥

परिणाम का लक्षण यह है—उपमान और उपमेय की एकता ( आरोप ) का जहाँ क्रियापद में साथ उपयोग होवै वहाँ परिणाम अलङ्कार होता है । अब यहाँ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मालङ्कारो न स्वीकृत इति चेन्न। रूपके हि उपमानोपमेययोरभेदो भवति न तूपमानस्य प्रकृतक्रियायामन्वयो भवति। यथा 'मुखचन्द्रं पश्यामि' इत्यत्र दर्शनक्रियायां चन्द्रस्य कोऽप्युपयोगो नास्ति। नायकश्चन्द्राभिन्नं मुखमेव पश्यति। 'मयूरव्यंसकादयश्च' इति सूत्रेण च रूपके समासः। परिणामे तु 'विशेषणं विशेष्येण बहुलम्' इत्यनेन विशेषणसमासः। मयूरव्यंसकसमासः पूर्वपदप्रधानोऽपि भवति। यथोक्तं लघुशब्देन्दुशेखरे ( उपमितमित्यादिसूत्रे २।१।५६ )—'भाष्याब्धिः कातिगम्भीरः' इत्यादौ सामान्यधर्मप्रयोगवत्तया लिङ्गभेदवत्तया च नोपमितसमासः, किन्तु मयूरव्यंसकादित्वादेतत्सिद्धम्। स च राजान्तरमित्यादौ पूर्वपदप्रधानेऽपि दृष्टः। परवल्लिङ्गतापि तत्पाठेनैव। एवं च 'भाष्याब्धिः' इत्यादौ रूपकमेव। भैरवमिश्रकृतायामेतट्टीकायां चन्द्रकलायामप्युक्तम्—भाष्याब्धिरित्यत्र पूर्वपदार्थप्रधानसमासनिर्देशः

---

यह शंका होती है कि जब रूपक में भी उपमान और उपमेय की एकता ही होती है तो इन दोनों में भेद क्या रहा। भेद न होने के कारण ही काव्यप्रकाश में यह अलंकार पृथक् नहीं माना। इसका उत्तर यह है कि रूपक में उपमान और उपमेय में अभेद जरूर होता है किन्तु उपमान का प्रधान क्रिया के साथ कोई उपयोग नहीं होता। यथा 'मुखचन्द्रं पश्यामि' यहां नायिका के मुख को देखकर नायक कहता है कि मुखरूपी चन्द्रमा को मैं देख रहा हूँ। यहां उपमानभूत चन्द्रमा का दर्शनरूप क्रिया में कोई उपयोग नहीं। क्योंकि नायक चन्द्रमा को नहीं देखता है। अपि तु चन्द्रमा और मुख को एक मानता हुआ मुख को ही देखता है। रूपक में मयूरव्यंसकसमास और परिणाम में विशेषणसमास होता है। मयूरव्यंसकसमास उत्तरपदप्रधान तथा पूर्वपदप्रधान इन दोनों ही रूप में माना जाता है। जैसा कि लघुशब्देन्दुशेखर में लिखा गया है कि 'भाष्याब्धिः कातिगम्भीरः'" इस स्थल में सामान्यधर्म का उपादान होने से तथा भाष्य व अब्धि पद में समानलिङ्गता नहीं होने से उपमितसमास नहीं हो सकता। किन्तु पूर्वपदप्रधान मयूरव्यंसकसमास है। क्योंकि 'राजान्तरम्' इत्यादि स्थलों में भी मयूरव्यंसकसमास की पूर्वपदप्रधानता प्राप्त होती है। अतः यहां रूपक ही है। पूर्वपदार्थप्रधानसमास ( मयूरव्यंसकादि ) करने से अब्धि के अतिगाम्भीर्यादि धर्मों की प्रतीति महाभाष्य में भी होती है। सारांश यह हुवा कि पूर्व व उत्तर पदार्थ प्रधान मयूरव्यंसकसमास रूपक में होता है। केवल उत्तरपदार्थप्रधान विशेषण समास परिणाम में होता है। क्योंकि—परिणाम में उत्तरपदार्थ का ही प्राधान्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥ २२ ॥
बहुभिर्बहुधोल्लेखादेकस्योल्लेखिता मता ।

पूर्वपदार्थेऽतिगम्भीरत्वादिविशेषणान्वयाय स्वीक्रियते । एवं सामान्यधर्मप्रयोगे मयूरव्यंसकादिसमासे रूपकमेव । अत्रायं सारः—पूर्वपदार्थप्रधान उत्तरपदार्थप्रधानश्च मयूरव्यंसकसमासो रूपकोपयोगी । केवलोत्तरपदार्थप्रधानो विशेषणसमासश्च परिणामोपयोगी । परिणामे उत्तरपदार्थस्यैव प्राधान्यात्'। अत एव परिणामे उपमानमुपमेयतादात्म्यापन्नं सदेव प्रस्तुतार्थोपयोगि भवति । उपमेयाभेद उपमानोपयोगायेति यावत् । रूपके तूपमानाभेद उपमेयोपयोगायेत्यनयोर्भेदः । यथा कुवलयानन्दे परिणामोदाहरणे 'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' इत्यत्र दृशि अब्जत्वारोपः । विशेषण समासेन चोत्तरपदप्राधान्ये सत्यब्जस्य वीक्षणयोग्यता नास्तीति विषय्यब्जपदं विषयात्मतया ( दृग्रूपेण ) वीक्षणक्रियायामुपयुक्तं भवति । न चात्र पूर्वपदप्राधान्यद्योतक उपमितसमासः प्रसन्नतारूपसामान्यधर्मप्रयोगात् । रूपके तु केवलमभेदे तात्पर्यम् । अत्र त्वभेदोत्तरं क्रियान्वयोऽपीति चित्रमीमांसायामुक्तम्—'विषय्याकारमारोप्य विषयस्थगनं यथा । रूपकत्वं तदा तत्र रञ्जनेन समन्वयः ॥ यदा तु विषयो रूपात्स्वस्मादप्रच्युतो भवेत् । उपयुक्त्यैतदाकारः परिणामस्तदा मतः ॥'

परिणाममुदाहरति—कान्तेति । रहस्येकान्ते । कान्तेन प्रियेण । पृष्टा जिज्ञासिता काचिन्नायिकोत्तरं प्रत्युत्तरं मौनमेव शब्दराहित्यमेव ददौ । अत्रोत्तरे मौनत्वारोपः मौनं च दानक्रियायां नान्वेतीति तस्योत्तरपदाभिन्नतयैव दानक्रियायामन्वयः । अतोऽत्र परिणामालङ्कारः ॥ २२ ॥

उल्लेखं व्याचष्टे—बहुभिरिति । एकस्य वस्तुनः । बहुभिरनेकैः । बहुधाऽनेकधा ।

---

रहता है अतएव परिणाम अलंकार में उपमान और उपमेय को अभिन्न कर के उपमेय द्वारा उपमान का क्रिया के साथ उपयोग भी किया जाता है । जैसे कुवलयानन्द के उदाहरण 'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' ( निर्मल नेत्ररूपी कमल से वह कामिनी देख रही है ) में परिणाम है । क्योंकि नेत्र में कमल का आरोप किया है । कमल देख नहीं सकता अतः कमल नेत्ररूपी उपमेय द्वारा दर्शनक्रिया का उपयोगी होता है । उपमान और उपमेय के अभेदमात्र में रूपक का तात्पर्य रहता है । इसमें तो अभेद के अनन्तर उपमान का क्रिया के साथ सम्बन्ध भी रहता है । यह सब दोनों में भेद है । परिणाम का उदाहरण यह है—किसी नायिका ने एकान्त में अपने प्रियतम को मौनरूपी उतर दिया । यहां उत्तर शब्द में मौन का आरोप किया है । मौन दी नहीं जाती, अतः उसका उत्तरपद के साथ अभेदभाव करके दानक्रिया में उपयोग करने से परिणाम है ॥ २२ ॥

उल्लेख का लक्षण यह है—एक वस्तु का अनेक आदमी भिन्न-भिन्न रीति से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्त्रीभिः कामः प्रियैश्चन्द्रः कालः शत्रुभिरैक्षि सः ॥ २३ ॥
अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ २४ ॥

उल्लेखान्निर्देशात्। उल्लेखितोल्लेखालङ्कृतिः। मतेष्टा। अयमलङ्कारो द्विधा। अनेकैरनेकधोल्लेख एकः। एकेनानेकधोल्लेखे चापरः। उदाहरति—स्त्रीभिरिति। वर्ण्यो राजा। स्त्रीभिः कामिनीभिः। कामो मदनः। सौन्दर्यात्। प्रियैर्बान्धवैश्चन्द्रः शशी। आह्लादकत्वात्। शत्रुभिररिभिः। कालो मृत्युः। भयङ्करत्वात्। ऐक्षि विलोकितः। अत्रैकस्य राज्ञः स्त्रीप्रियशत्रुभिर्बहुभिः कामत्वचन्द्रत्वकालत्वरूपतया बहुधोल्लेखात्प्रथम उल्लेखालङ्कारः। आरोपनिमित्तान्युक्तान्येव। एकेन बहुधोल्लेखे (द्वितीयभेदे) तु 'गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने' इत्युदाहरणं ज्ञेयम्।२३।

अपह्नुतिं लक्षयति—अतथ्यमसत्यमारोपयितुं तथ्यस्य सत्यस्यापास्तिर्निषेधोऽपह्नुतिरलङ्कृतिः। अतथ्यवस्त्वारोपनिमित्तकतथ्यवस्तुनिषेधोऽपह्नुतिः। रूपके निषेधपूर्वक आरोपो न भवतीति भेदः। अपह्नूयत इत्युपह्नुतिः। 'ह्नुङ् अपनयने' इत्यादादिकात् धातोः क्तिन्। उदाहरति—नायमिति। चन्द्रं विलोक्य कश्चिद् ब्रूते—अयं दृश्यमानः पदार्थः सुधांशुश्चन्द्रो न। तर्हि किमस्ति। व्योमगङ्गाया आकाशगङ्गायाः सरोरुहं कमलमस्ति। अत्र चन्द्रेऽतथ्यसरोरुहत्वारोपाय तथ्यस्य चन्द्रस्य निषेधः कृतः। अत्रातथ्यज्ञान एव वाक्यज्ञानविश्रान्तिः। तेन कविकल्पितवस्तुनिषेधेऽप्ययमलङ्कारो भवति ॥ २४ ॥

---

वर्णन करें, वहां उल्लेख अलंकार का प्रथम भेद होता है। दूसरा भेद वहां होता है कि जहाँ एक मनुष्य द्वारा ही भिन्न भिन्न रीति से वर्णन किया जावे। प्रथम भेद का 'स्त्रीभिः' यह श्लोकार्ध उदाहरण है। कामिनियों ने सुन्दरता के कारण कामदेवरूप, बन्धुओं ने आनन्ददायक होने के कारण चन्द्ररूप और शत्रुओं ने भयदायक होने से मृत्युरूप उस राजा को देखा। यहाँ एक राजा का अनेक आदमियों द्वारा भिन्न रूप से वर्णन किया है। अतः उल्लेखालंकार है ॥ २३ ॥

अपह्नुति का स्वरूप यह है—असत्य वस्तु का आरोप करने के लिए जहां सत्य वस्तु का निषेध किया जावै वहाँ अपह्नुति होती है। रूपक में निषेधपूर्वक आरोप नहीं होता अतः यह उससे भिन्न है। उदाहरण यह है—चन्द्रमा को देख कर कोई नायक कहता है कि यह चन्द्रमा नहीं है, किन्तु आकाशगङ्गा का कमल है। यहाँ चन्द्रमा का निषेध करके उसे कमल बतलाया, इसलिये अपह्नुति अलंकार है ॥ २४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ २५ ॥
भ्रान्तापह्नुतिरन्यस्य शङ्कया तथ्यनिर्णये ।
शरीरं तव सोत्कम्पं ज्वरः किं न सखि स्मरः ॥ २६ ॥

पर्यस्तापह्नुतिं प्रदर्शयति—पर्यस्तेति । यत्र वाक्ये । धर्ममात्रं निषिध्यते निह्नूयते । तत्र पर्यस्तापह्नुतिरलङ्कारः । धर्मिणि वर्तमाने सत्येव केवलधर्मस्यैव निषेधे सा । तथ्यवस्तुधर्मस्यातथ्यधर्मिण्यारोपाय तन्निषेधे सेत्यर्थः । उदाहरति—नायमिति । अयं सुधांशुश्चन्द्रो न । किन्तु प्रेयसीमुखं कान्तामुखं सुधांशुश्चन्द्रोऽस्ति । अत्र सुधांशौ सुधांशुत्वधर्मनिषेधः प्रेयसीमुखे सुधांशुत्वधर्मारोपार्थं इति धर्ममात्रनिषेधे धर्मिसद्भावे सति च पर्यस्तापह्नुतिः ॥ २५ ॥

भ्रान्तापह्नुतिमाह—भ्रान्तेति । अन्यस्य वस्त्वन्तरस्य शङ्कया सन्देहेन तथ्यस्य सत्यस्य निर्णये निश्चये सति भ्रान्तापह्नुतिरलङ्कारः । भ्रान्तं भ्रमः । भावे क्तः । भ्रान्तस्यापह्नुतिः । वस्तुनि वस्त्वन्तरभ्रमे सति तन्निवारणं भ्रान्तापह्नुतिः । वस्त्वन्तरभ्रान्तिनिवारकत्वं भ्रान्तापह्नुतित्वम् । उदाहरति—शरीरमिति । काचित्सखी नायिकायाः सोत्कम्पं शरीरमुपलभ्य ब्रूते—तव ते शरीरं वपुः सोत्कम्पं सवेपथु । अतस्ते ज्वरो ज्वराख्यो रोगोऽस्ति किम् । सा नायिकोत्तरं ब्रूते । हे सखि ज्वरो नास्ति किन्तु स्मरः कामोऽस्ति । कामकृतस्तापोऽस्तीति भावः । अत्र सख्या नायिकाशरीरे सोत्कम्पतामुपलभ्य ज्वरः सन्दिग्धः नायिका च प्रत्युत्तरेण ज्वरभ्रान्तिं निवारितवतीति भ्रान्तापह्नुतिरलङ्कारः । दण्डीमां तत्त्वाख्यानोपमामाह ॥ २६ ॥

पर्यस्तापह्नुति का लक्षण यह है—धर्मी के रहते हुए भी केवल उसके धर्ममात्र के निषेध करने पर पर्यस्तापह्नुति होती है । 'नायम्' इत्यादि श्लोक इसका उदाहरण हैं । यह चन्द्रमा नहीं है, किन्तु कामिनी का मुख ही चन्द्रमा है । सुधांशु ( चन्द्र ) में सुधांशुपने का निषेध करके कामिनी के मुख में सुधांशुत्व का आरोप किया गया, अतः यहां पर्यस्तापह्नुति है ॥ २५ ॥

भ्रान्तापह्नुति का लक्षण यह है—एक पदार्थ में दूसरे पदार्थ के संदेह का निवारण करना उक्त अलंकार का रूप है । 'शरीरम्०' यह उदाहरण । कोई सखी नायिका के शरीर में कम्प को देखकर उससे पूछती है कि तेरा शरीर कांप रहा है सो तेरे को ज्वर रोग तो नहीं है ? इसका उत्तर उसने यह दिया कि हे सखि ! ज्वर नहीं है । मेरे को तो कामाग्नि से कम्प हो रहा है । यहां ज्वर का संदेह मिटाने के लिए सखी को नायिका ने असली बात कह दी । अतः यहां भ्रान्तापह्नुति है । दण्डी इसे तत्त्वाख्यानोपमा कहता है ॥ २६ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

छेकापह्नुतिरन्यस्य शङ्कया तथ्यनिह्नवे।
प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥ २७ ॥
कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नवे पदैः।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ २८ ॥

छेकापह्नुतिं व्याचष्टे—छेकेति। अन्यस्य पुरुषान्तरस्य। शङ्कया भीत्येति यावत्। तथ्यस्य सत्यस्य निह्नवे निराकरणे सति। छेकापह्नुतिरलङ्कारः। छेका विदग्धास्तत्कर्तृकापह्नुतिः। परभीतिहेतुकस्वतथ्यगोपनत्वं छेकापह्नुतित्वम्। उदाहरति—काचिन्नायिका स्वनर्मसखीं प्रति स्वरहस्यं ब्रूते। प्रजल्पन् चाटूक्तिं कथयन् स मत्पदे मच्चरणे लग्नः पतित इति। एवं वृत्तान्तं काचिदन्या श्रुत्वा पृच्छति। कान्तः पतितः किम्। तस्या भयेन सा स्वरहस्यगोपनाय प्रतिब्रूते। कान्तो न हि किन्तु नूपुरो मञ्जीरः पादकटक इति यावत्। मत्पदे लग्नः। अत्रान्यभीत्या स्वकान्तपादपतनवृत्तान्तनिह्नवः। अयमाशयः—नायिकया नर्मसखीं प्रति 'प्रजल्पन्मत्पदे लग्नः' इति स्वनायकवृत्ते निगद्यमाने सति तदाकर्ण्य कान्तः किमिति शङ्कमानामन्यां प्रति नूपर इति कथयित्वा निह्नुवः कृत इति छेकापह्नुतिः ॥ २७ ॥

कैतवापह्नुतिं व्याचष्टे—कैतवेति। व्याजाद्यैः कपटमिषच्छलादिभिः। पदैः शब्दैः। निह्नवे वस्तुगोपने व्यक्ते व्यञ्जनया प्रतीते। कैतवापह्नुतिः। उदाहरति—स्मरनाराचाः कामबाणाः। कान्तानां रमणीनां दृक्पाताः कटाक्षास्तेषां कैतवाद् व्याजात्। निर्यान्ति निःसरन्ति। अत्रासत्यबोधकेन कैतवपदेन नेमे कान्ताकटाक्षाः किन्तु स्मरबाणाः सन्तीति कान्ताकटाक्षनिह्नवो व्यज्यत इति कैतवापह्नुतिरलंकारः। कुवल-

छेकापह्नुति का रूप देखिए—विरोधी पुरुष की शंका से सत्य बात के गोपन में छेकापह्नुति होती है। 'प्रजल्पन्०' यह इसका उदाहरण है। कोई नायिका अपनी नर्मसखी को कहती है कि रात में खुशामद की बातें करता हुआ वह मेरे पैरों पर गिर गया। इस बात को किसी अन्य स्त्री ने भी सुना और वह बोली कि क्या प्रियतम तुम्हारे पैरों पर गिरे ? तब उसने उत्तर दिया कि प्रियतम नहीं गिरे मेरी नेवरी ( पादवलय ) गिर पड़ी। यहां अन्य सखी के भय से नायिका ने अपने पति के वृत्तान्त को छिपा लिया। अतः यहां छेकापह्नुति है ॥ २७॥

कैतवापह्नुति का स्वरूप देखिए—कैतव, छल आदि पदों में जहां वस्तु का गोपन प्रतीत हो वहां कैतवापह्नुति होती है 'निर्यान्ति०' इसका उदाहरण है। रमणियों के कटाक्ष के मिष से ये कामदेव के वाण निकल रहे हैं अर्थात ये कटाक्ष नहीं हैं किन्तु काम के वाण हैं। यहां कैतवपद से कटाक्ष का गोपन किया

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना ।
त्वन्मुखश्रीकृते नूनं पद्मैर्वैरायते शशी ॥ २९ ॥

---

यानन्दे हेत्वपह्नुतिरपि स्वीकृता । सा चात्र लक्षणकथनप्रस्तावे तृतीयमयूखीयचतुर्थं श्लोके हेतुलक्षणान्तर्गता ॥ २८ ॥

व्यङ्ग्यसाधर्म्येष्वलङ्कारेषूत्प्रेक्षां लक्षयति—उत्प्रेक्षेति। यत्र स्थले। निह्नुतिं विना निषेधं विना । हेत्वादिः । आदिना फलस्वरूपयोर्ग्रहणम् । उन्नीयते उत्कटकोटिसन्देहविषयीक्रियते तत्रोत्प्रेक्षा । उत् ऊर्ध्वं गता प्रेक्षा बुद्धिर्यस्यां सोत्प्रेक्षा । प्रकृतस्योत्कटकोटिकज्ञानतादात्म्येन सम्भावनमुत्प्रेक्षेति भावः। निह्नवं विनेत्यनेनापह्नुतिव्यवच्छेदः । इयमुत्प्रेक्षा पूर्वं द्विधा—अगूढा गूढा च । इवादिपदाभावे गूढा । तत्सत्तायां चागूढा । पुनश्च हेतुफलस्वरूपैर्द्विविधापीयं षड्विधा । अगूढोत्प्रेक्षामुदाहरति—त्वदिति । शशी चन्द्रः । त्वन्मुखश्रीकृते त्वदीयवदनशोभाप्राप्तये । पद्मैः कमलैर्वैरायते वैरं करोति । अत्र 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यनेन करोत्यर्थे क्यङ्प्रत्ययः । अत्र चन्द्रपद्मयोः स्वाभाविके वैरे सिद्धे कान्तामुखलक्ष्मीलाभस्याफलस्यापि फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा । चन्द्रे पद्मसङ्कोचकारणेन वैरकर्तृतादात्म्योत्प्रेक्षा स्वरूपोत्प्रेक्षा ॥ २९ ॥

---

गया है । अतः कैतवापह्नुति है । कुवलयानन्द में हेत्वपह्नुति भी मानी है । यहां उसको तृतीय मयूख ने चतुर्थ श्लोक हेतुलक्षण के अन्तर्गत माना है ॥ २८ ॥

उत्प्रेक्षा का लक्षण यह है—जहां निषेध के विना ही कारण, फल और वस्तु इन तीनों में उच्च श्रेणी का सन्देह किया जावे, वहाँ उत्प्रेक्षा होती है । अर्थात् उपमेय ( वर्णनीय ) का अत्युक्ति से वर्णन किया जाना उत्प्रेक्षा होती है । इव, यथा, वा आदि पदों की सत्ता में अगूढ ( वाच्या ) उत्प्रेक्षा होती है । और इव, यथा आदि पदों के न होने पर गूढा ( प्रतीयमाना ) उत्प्रेक्षा होती है । हेतु, फल और वस्तुगत दोनों ही उत्प्रेक्षा होती हैं अतः उसके छः भेद हुए । अगूढोत्प्रेक्षा का उदाहरण यह है—चन्द्रमा तेरे मुख की शोभा को प्राप्त करने के लिये ही कमलों से वैर करता है । चन्द्रमा और पद्म का वैर स्वाभाविक है फिर भी उसको कान्तामुख की शोभाप्राप्तिरूपी कारण के लिये बतलाया । अतः यहां हेतूत्प्रेक्षा है । कान्तामुख की शोभा को पाना चन्द्रमा के वैर का फल नहीं है तो भी उसे फल बतला देना फलोत्प्रेक्षा होती है । चन्द्रमा के उदय होने पर पद्मसंकोच होता है । उस संकोच से ही वैरकर्त्तास्वरूप चन्द्रमा के बतलाने से वस्तूत्प्रेक्षा है ॥ २९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते ।
त्वत्कीर्तिर्विभ्रमश्रान्ता विवेश स्वर्गनिम्नगाम् ॥ ३० ॥

गूढोत्प्रेक्षां ब्रूते—इवेति । इवादिकपदानामभावे सति यत्र निह्नुतिं विना हेत्वादिरुन्नीयते तत्र गूढोत्प्रेक्षा ('प्रतीयमाना') भवति । इवादिपदानि दण्डिना काव्यादर्शे द्वितीयपरिच्छेदे २३४ श्लोके दर्शितानीमानि—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' ॥ इति ।

उदाहरति—त्वदिति । विभ्रमश्रान्ता सर्वलोकभ्रमणश्रमयुक्ता । त्वत्कीर्तिस्तव यशः । स्वर्गनिम्नगां मन्दाकिनीम् । विवेश प्राविशत् । यथा भ्रमणश्रान्तः पुरुषः स्नानेन श्रमं दूरीकुरुते । तथैव श्रान्तेव कीर्तिरपि स्नानाय मन्दाकिनीं विवेश । अत्रोत्प्रेक्षाद्योतकमिवादिपदं नास्तीति गूढोत्प्रेक्षा । सकलभुवनभ्रमणश्रान्तकीर्तेर्गङ्गावगाहनत्वमुत्प्रेक्षितम् । असन्नपि कीर्तेः श्रमः श्रमहेतुत्वेनोत्प्रेक्षित इति हेतूत्प्रेक्षा । कीर्तौ प्रवेशकर्तृतादात्म्योत्प्रेक्षणात्स्वरूपोत्प्रेक्षा । गङ्गावगाहनस्याफलस्यापि फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा । इवपदोपादाने उपमापि भवतीति तयोर्भेद उपमानिरूपणे (१०४ पृष्ठे) प्रदर्शितः । उत्प्रेक्षायाः साहित्यदर्पणे इमे भेदाः—वाच्या प्रतीयमा-

गूढोत्प्रेक्षा का स्वरूप यह है—जहां इव, यथा आदि पदों के न होने पर हेतु, फल, स्वरूपगत उच्च दर्जे की सम्भावना की जावै वहाँ गूढोत्प्रेक्षा होती है। दण्डी ने काव्यादर्श के दूसरे परिच्छेद के २३४ वें श्लोक में मन्ये (मानता हूँ), शङ्के (शङ्का करता हूँ) ध्रुवम्, प्रायः, नूनम् और इवादि शब्द उत्प्रेक्षा के वाचक बतलाये हैं। 'त्वत्कीर्त्तिः' यह इसका उदाहरण है। हे राजन्! तुम्हारी कीर्ति सर्व लोकों में घूमने के कारण श्रान्त होकर आकाशगङ्गा में स्नान करने के लिये प्रवेश करती है। अर्थात् सर्वत्र आप की कीर्ति फैल चुकी। जैसे भ्रमण से थका हुआ पुरुष स्नान से अपनी थकावट दूर करता है वैसे ही चतुर्दश भुवन में भ्रमण के कारण थकी हुई ही मानों कीर्ति गङ्गा में स्नान करती है। यहाँ उत्प्रेक्षा का वाचक इव आदि कोई पद नहीं है अतः गूढोत्प्रेक्षा है। कीर्ति को श्रम नहीं हो सकता तो भी श्रम को स्नान का हेतु बतलाया। अतः हेतूत्प्रेक्षा हुई। कीर्ति में प्रवेशकर्त्रीस्वरूप की उत्प्रेक्षा की, अतः स्वरूपोत्प्रेक्षा है। गङ्गा में स्नान करना कीर्ति का उद्देश्य बनाना फलोत्प्रेक्षा है। इस पद की सत्ता में उपमा भी हो जाती है अतः इन दोनों का भेद उपमाप्रकरण के १०४ पृष्ठ में लिखा जा चुका है। साहित्यदर्पण में उत्प्रेक्षा के ये अट्ठासी भेद माने हैं—वाच्या उत्प्रेक्षा के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात्स्मृतिभ्रान्तिसंदेहैस्तदेवालंकृतित्रयम् ।

नेति प्रथमं सा द्विविधा । तत्र वाच्या जातिगुणक्रियाद्रव्यगतत्वेन चतुर्धा । पुनर्भावाभावाभिमानाभ्यामष्टधा । एते भेदा निमित्तस्य गुणक्रियारूपत्वेन षोडशसंख्याः । तत्रापि जातिगुणक्रियाणां द्वादशभेदाः स्वरूपफलहेतुगतत्वेन षट्त्रिंशत् । द्रव्यस्य केवलं स्वरूपोत्प्रेक्षणमेव भवतीति द्रव्यस्य चत्वार इति मिलित्वा चत्वारिंशत् ४० । तत्रापि स्वरूपोत्प्रेक्षायाः षोडश भेदा निमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशत् ३२ । द्वादशभिः फलोत्प्रेक्षाभिः, द्वादशभिर्हेतूत्प्रेक्षाभिश्च सह षट्पञ्चाशत् भेदाः३२ + १२ + १२=५६ । प्रतीयमानायास्तु षोडश भेदाः । फलहेतुगतत्वेन द्वात्रिंशत् । सर्वसङ्कलने ५६+३२ = ८८ भेदा उत्प्रेक्षायाः। सापह्नवोत्प्रेक्षा, श्लेषहेतुगा, उपक्रमोत्प्रेक्षा चेत्यपि भेदा अवगम्याः ॥ ३० ॥

स्मृतिभ्रान्तिसंदेहानलङ्कारान् व्याचष्टे—स्यादिति । स्मृतिश्च भ्रान्तिश्च संदेहश्चेति तैस्तदेव स्मृतिभ्रान्तिसंदेहाख्यमलङ्कृतित्रयमलङ्कारत्रयं स्यात । यत्र स्मृतिः, भ्रान्तिः, संदेहश्च तत्र तदाख्य एवालङ्कारः । चमत्काराधायकसदृशवस्तुदर्शनजन्यसदृशवस्त्वन्तरानुभवः स्मृतिः । चमत्काराधायकसादृश्यमूलकातत्त्वनिष्ठतत्त्वज्ञानं

छप्पन और प्रतीयमाना के बत्तीस भेद होते हैं। जाति, गुण, क्रिया और द्रव्यगत होने से वाच्या चार प्रकार की हुई। पुनः यह भाव का अभाव रूप से आठ प्रकार की होती है इन आठों भेदों के निमित्त गुण, क्रिया रूप होते हैं। अतः सोलह भेद हुए। इनमें भी जाति, गुण और क्रियाओं के बारह भेद स्वरूप, फल, हेतु में रहने से छत्तीस प्रकार के हुए। द्रव्य में स्वरूपोत्प्रेक्षा ही होती है इसलिये द्रव्य के चार भेद मिलाने से चालीस भेद वाच्योत्प्रेक्षा के हुए। इनमें से स्वरूपोत्प्रेक्षा के सोलह भेद निमित्त के उपादान वा अनुपादान के कारण बत्तीस भेद हो जाते हैं। ये बत्तीस स्वरूपोत्प्रेक्षा के तथा फलोत्प्रेक्षा के बारह और हेतूत्प्रेक्षा के द्वादश सब मिल कर वाच्योत्प्रेक्षा के छप्पन भेद हुए। प्रतीयमानोत्प्रेक्षा के सोलह भेद फल वा हेतु गत होने के कारण बत्तीस भेद हुए। इस प्रकार छप्पन वा बत्तीस दोनों भेद मिलकर ( ५६ + ३२ = ८८ ) उत्प्रेक्षा के अट्ठासी भेद हुए। सापह्नवोत्प्रेक्षा, श्लेषहेतुगा और उपक्रमोत्प्रेक्षा आदि भी उत्प्रेक्षा के भेद माने गये हैं ॥ ३० ॥

स्मृति, भ्रान्ति और सन्देह इन तीनों अलङ्कारों का स्वरूप यह है—चमत्कारी सदृश वस्तु के देखने से जहाँ पूर्वपरिचित वस्तु का स्मरण हो वहाँ स्मृतिमान् अलङ्कार होता है। भ्रम होने पर भ्रान्तिमान् और सन्देह होने पर सन्देह



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पङ्कजं पश्यतस्तस्य मुखं मे गाहते मनः ॥ ३१ ॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेद पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ ३२ ॥
मीलितं बहुसादृश्याद्भेदवच्चेन्न लक्ष्यते ।

---

भ्रान्तिः । चमत्काराधायकसादृश्यज्ञानप्लकपचद्वयावलम्बिज्ञानं सन्देहः । क्रमेणोदाहरणप्रस्तावे स्मृतिमदलङ्कारमुदाहरति—पङ्कजमिति । पङ्कजं कमलं पश्यतो विलोकयतो मे मम मनश्चित्तं तस्याः परिचितायाः कामिन्या मुखं वदनं गाहते प्रविशति। स्मरतीत्यर्थः । अत्र प्रियामुखसदृशकमलदर्शनेन प्रियामुखस्मृतेः स्मृतिमदलङ्कारः ॥ ३१ ॥

भ्रान्तिमदलङ्कारोदाहरणं व्याचष्टे—अयमिति । अयमसौ प्रमत्तो मधुपो भृङ्गस्त्वन्मुखं त्वदीयवदनं पङ्कजं कमलं वेद जानाति । अत्र वदनकमलयोः सादृश्यात्कान्तामुखे भृङ्गानां कमलभ्रमः । प्रमत्तता च भ्रान्तिबीजम् । अतद्रूपे वदने कमलप्रतीतिरिति भावः । संदेहालङ्कारमुदाहरति—पङ्कजमिति । इदं कान्तावदनं पङ्कजं वा सुधांशुरिति नास्त्यस्माकं निर्णय इति । अत्र कान्तावदने पङ्कजं सुधांशुर्वेति कोटिद्वयावलम्बिज्ञानात्संदेहालङ्कारः । अयं संदेहालङ्कारः, शुद्धो निश्चयगर्भो निश्चयान्तश्चेति त्रिधान्यत्र ॥ ३२ ॥

मीलितं व्याचष्टे—मीलितमिति । बहु च तत् सादृश्यं चेति बहुसादृश्यं तस्मा-

---

अलंकार होता है । सीप ( शुक्तिका ) में चाँदी का ज्ञान होना भ्रमज्ञान होता है यह पुरुष खड़ा है वा स्थाणु ( ठूंठ ) है । इस प्रकार के ज्ञान को संदेह कहते हैं। स्मृतिमान् अलंकार का उदाहरण यह है—कमल को देखकर मेरा मन कामिनी के मुख को याद करता है । यहाँ प्रिया के मुख के सदृश कमल को देखने से अपनी प्रिया के मुख की स्मृति होती है । अतः स्मृतिमान् अलंकार है ॥ ३१ ॥

भ्रान्तिमान् अलंकार का उदाहरण देखिए—हे प्रिये ! यह मस्त भ्रमर तेरे मुख को ही कमल जानता है । यहाँ मुख और कमल के सादृश्य के कारण भ्रमरों को मुख में कमल की भ्रान्ति होती है । प्रमत्तता इसमें हेतु है । अतः भ्रान्तिमान् अलंकार है । सन्देह अलंकार का उदाहरण यह है—यह कान्तामुख कमल है या चन्द्रमा है, हम यह निश्चय नहीं कर सकते । यहाँ कान्तमुख में कमल और चन्द्रमा का सन्देह होने से सन्देह अलंकार है । शुद्धसन्देह, निश्चयगर्भसन्देह, निश्चयान्तसन्देह ये तीन सन्देह के भेद हैं ॥ ३२ ॥

मीलित का स्वरूप यह है—सदृश वस्तु की अधिकता के कारण जहाँ उप-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ ३३ ॥
सामान्यं यदि सादृश्याद्भेद एव न लक्ष्यते ।
पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ ३४ ॥

इतिसाम्याद् हेतोः । चेद् यदि । भेदोऽस्यास्तीति भेदवद् उपमानं न लक्ष्यते न दृश्यते । तदा मीलितालङ्कारः । सदृशवस्तुन आधिक्येनोपमानं यत्र पृथङ् न प्रतीयते तत्रायमलङ्कारः । समानधर्मोपादानपूर्वकोपमानस्वरूपज्ञानाभावविशिष्टोपमेयवर्णनं मीलितमिति भावः । उदाहरति—रस इति । सहजारुणे स्वाभाविकरक्ते कान्ताचरणे कान्तापादे लाक्षाया अलक्तकस्य रसो नालक्षि न दृष्टः । अत्र स्वाभाविकस्यारुणिम्नो लाक्षारस उपमानं तच्चातिसादृश्यान्न प्रतीयते ॥ ३३ ॥

सामान्यं लक्षयति—सामान्यमिति । यदि चेत् । सादृश्यात्साम्याद् हेतोः । भेद एकताऽभाव एव न लक्ष्यते तदा सामान्यालङ्कारः । सादृश्यमूलकोपमानभेदाज्ञानपूर्वकोपमेयज्ञानवर्णनं सामान्यालङ्कारः । उदाहरति—पद्मेति । पद्माकरप्रविष्टानां कमलाकरस्थितानां सुभ्रुवां कामिनीनां मुखं वदनम् । पद्ममुखसादृश्याद् हेतोः । नालक्षि न दृष्टः । अत्र कमलकामिनीमुखसादृश्यात् द्वयोर्भेदो न प्रतीयते । मीलितालङ्कारे उपमानस्वरूपाज्ञानम् । अत्र तु निवर्तकहेतुज्ञानाभावकृताभेदज्ञानमिति भेदः । मीलितालङ्कारे एकेनापरस्य भिन्नस्वरूपानवभासरूपं मीलनं क्रियते, अत्र तु भेदज्ञानेऽपि व्यावर्तकधर्मो नोपलक्ष्यत इत्यनयोर्भेदः ॥ ३४ ॥

---

मान की प्रतीति भिन्नरूप से नहीं होवे वहाँ मीलित अलंकार होता है। 'रसो नालक्षि०' यह इसका उदाहरण है। अत्यन्त लाल कामिनी के चरणों में लाक्षारस (अलता) की प्रतीति नहीं होती। चरणों की रक्तिमा उपमेय है। उसके उपमान लाक्षारस की रक्तिमा का ज्ञान अत्यन्त सादृश्य के कारण नहीं होता। अतः मीलित अलंकार है॥ ३३ ॥

सामान्य का स्वरूप यह है—जहाँ सादृश्य के कारण भेद की प्रतीति नहीं होवे वहाँ सामान्य अलंकार है। कमलों के मध्य में प्रविष्ट कामिनियों का मुख नहीं पहिचाना गया। यहाँ कमल और मुख इन दोनों के सादृश्य के कारण दोनों में भेद नहीं मालूम पड़ा अतः सामान्य अलंकार है। मीलित अलंकार में एकता के कारण उपमान के स्वरूप की प्रतीति नहीं होती। यहां तो दोनों वस्तु भिन्न भिन्न हैं तथापि अभेद को मिटाने का कोई उपाय नहीं है। यह इन दोनों का भेद जानना चाहिए॥ ३४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हेतोः कुतोऽपि वैशिष्ट्यात्स्फूर्तिरुन्मीलितं मतम् ।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ ३५ ॥
अनुमानं च कार्यादेः कारणाद्यवधारणम् ।
अस्ति किंचिद्यदनया मां विलोक्य स्मितं मनाक् ॥ ३६ ॥
अर्थापत्तिः स्वयं सिध्येत्पदार्थान्तरवर्णनम् ।

---

उन्मीलितं व्याचष्टे—हेतोरिति । कुतोऽपि कस्मादपि हेतोः कारणस्य वैशिष्ट्याद्आधिक्यात् । विशेषतयेति यावत् । स्फूर्तिर्भेदज्ञानम् । उपमानोपमेययोरिति भावः । उन्मीलितं मतमुन्मीलिताख्योऽलङ्कारः । सादृश्यादभेदाध्यवसाये प्राप्ते कस्मादपि हेतोर्भेदज्ञाने सति मीलितविरोध्युन्मीलितालङ्कारः । उपमानोपमेयाभेद निष्ठवैशिष्ट्यजन्यभेदज्ञानत्वं तत्त्वमिति यावत् । उदाहरति—लक्षितानीति । उदिते उदयं प्राप्ते चन्द्रे पद्मानि कमलानि मुखानि कान्तावदनानि च लक्षितानि दृष्टानि । चन्द्रोदये कमलसङ्कोचे सतीमानि मुखानीमानि कमलानीति भेदोऽवगत इत्युन्मीलिताख्योऽलङ्कारः ॥ ३५ ॥

अनुमानं लक्षयति—अनुमानमिति । कार्यादेर्निमित्तात् । कारणादीनामवधारणं ज्ञानमनुमानम् । यत्र कार्येण कारणप्रतीतिस्तत्रानुमानालङ्कारः । उदाहरति—अस्तीति । यद् यतो मां नायकं विलोक्य दृष्ट्वा मनागीषत् स्मितं मन्दहासो विहितः । अतः किञ्चित् किमपि । अस्ति । अत्र स्मितोदयरूपकार्येण नायिकान्तःस्थो भावो निमित्तमनुमीयत इत्यनुमानालङ्कारः ॥ ३६ ॥

अर्थापत्तिं व्याचष्टे—अर्थापत्तिरिति । अन्यः पदार्थ इति पदार्थान्तरं तस्य वर्णनं

---

उन्मीलित का स्वरूप यह है—अत्यन्त सदृश उपमान और उपमेय में किसी कारणवश भेद की प्रतीति हो जावे तो उन्मीलित अलंकार होता है। 'लक्षितानि' यह इसका उदाहरण है। चन्द्रमा के उदित होने पर मुख और कमल इन दोनों का भेद मालूम हो गया। चन्द्रमा के उदित होने पर कमल संकुचित हो गये। इससे यह कमल है और यह मुख है, यह भेदज्ञान हो गया। अतः यहां उन्मीलित अलंकार है ॥ ३५ ॥

अनुमान का स्वरूप देखिए—जहां कार्य से कारण का अनुमान किया जावे वहां अनुमान अलंकार होता है। उदाहरण यह है—यह नायिका मुझे देखकर मन्दहास किया इसलिए कुछ न कुछ बात है। यहां मन्दहासरूपी कार्य से नायिका के अन्तर्गत किसी कारण की प्रतीति होती है। अतः अनुमान अलंकार है ॥ ३६ ॥

अर्थापत्ति का लक्षण देखिए—जहां एक पदार्थ के वर्णन से दूसरे पदार्थ की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ ३७ ॥
स्यात्काव्यलिङ्गं वागर्थो नूतनार्थसमर्पकः ।
जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ ३८ ॥

---

यत्र स्वयं सिद्धयेत् तत्रार्थस्य पदार्थान्तरस्यापत्तिरर्थापत्तिरलङ्कारः । एकपदार्थसिद्ध्या यत्रापरपदार्थसिद्धिरर्थाद् भवति तत्रायमलङ्कारः । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति कथने, देवदत्तस्य रात्रिभोजनं सिद्ध्यति तथैव काव्येऽपि चमत्कृतार्थस्य सिद्धिरर्थापत्तिः । यथा वा दण्डापूपन्याये दण्डाकर्षणे तदवलम्बिनामपूपानामाकर्षणं स्वयं भवति तथैव काव्ये कैमुत्यन्यायेनार्थसिद्धावयमलङ्कारः । उदाहरति–स इति । स इन्दुश्चन्द्रः । त्वन्मुखेन तव वदनेन जितः । तर्हि सरसीरुहां कमलानां जये तु का वार्ता का कथा । इन्दुजये कमलविजयः स्वयंसिद्ध इति भावः । अत्र वदनेनोत्कृष्टे चन्द्रजये कृते सति तत्कर्तृकः कमलजयः स्वयंसिद्धः । कमलजेतुश्चन्द्रस्य पराजयवर्णनात् । अतोऽत्रार्थापत्तिरलङ्कारः ॥ ३७ ॥

काव्यलिङ्गं व्याचष्टे—स्यादिति । यत्र नूतनस्य नवस्यार्थस्य समर्पको बोधको वाचः पदवाक्यरूपस्य अर्थः स्यात्तत्र काव्यलिङ्गालङ्कारः स्यात् । समर्थनसापेक्षस्यार्थस्य यत्र पदद्वारा वाक्यद्वारा समर्थनं तत्रायमलङ्कारः । एवं पदार्थहेतुकतया वाक्यार्थहेतुकतया च काव्यलिङ्गस्य द्वौ भेदौ । उदाहरति—जित इति । मन्दश्चासौ कन्दर्पश्चेति मन्दकन्दर्पस्तत्सम्बोधने हे मन्दकन्दर्प मूढकाम ! । मच्चित्ते मन्मनसि ।

---

सिद्धि होवे वहां अर्थापत्ति अलंकार होता है । देवदत्त दिन में भोजन नहीं करता किन्तु मोटा जरूर है । इस वाक्य से जैसे देवदत्त के रात्रि-भोजन की प्रतीति होती है अथवा दण्डापूप-न्याय से दण्ड को लेने पर अपूप स्वयं ही आ जाते हैं, वैसे ही काव्य में कैमुत्यन्याय से अर्थान्तर की सिद्धि होने पर यह अलंकार होता है । उदाहरण यह है—हे प्रिये ! वह चन्द्रमा ही जब तेरे मुख से पराजित हो गया तो अब कमलों के विजय में कौनसी बात है । अर्थात् वे तो पराजित हो ही चुके । क्योंकि कमलों को पराजित करनेवाले चन्द्रमा को जीत लेने से कमल के ऊपर विजय प्राप्त करना स्वयं ही सिद्ध हो गया । यहां चन्द्रविजय के वर्णन से कमलविजयरूप दूसरे पदार्थ की सिद्धि होती है । अतः अर्थापत्ति अलंकार है ॥ ३७ ॥

काव्यलिङ्ग यह है—जहां नवीन अर्थ का बोधक पद वा वाक्य हो वहां काव्यलिङ्ग होता है । समर्थन के योग्य वाक्यार्थ का जहां पदद्वारा वा वाक्यद्वारा समर्थन किया जावे, वहां उक्त अलंकार होता है । इस प्रकार पदार्थहेतुक और वाक्यार्थहेतुक ये दो भेद काव्यलिङ्ग के होते हैं । उदाहरण यह है—हे मूर्ख कामदेव ! तुम

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अलङ्कारः परिकरः साभिप्राये विशेषणे ।
सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ३९ ॥

त्रीणि लोचनानि नयनानि यस्य स त्रिलोचनः शङ्करः । अस्ति । अतस्त्वं जितोऽसि विजितोऽसि । मम मनसि त्रिलोचनोऽस्तीति वाक्येन कन्दर्पदाहकशङ्करतृतीयनेत्ररूपनूतनार्थज्ञानात् काव्यलिङ्गम् । यद्वा मन्मथजयोऽतिकठिन इति कामविजेतुः शङ्करस्य हृदि वर्तमानत्ववर्णनेन तस्य समर्थनात् काव्यलिङ्गमलङ्कारो वाक्यार्थहेतुकः ॥३८॥

परिकरं निरूपयति—अलङ्कार इति । विशेषणे भेदके । अभिप्रायेण सहितं साभिप्रायं तस्मिन् सति, परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः । सोऽस्यास्तीति परिकरः । मत्वर्थीयोऽच्प्रत्ययः । भूषणार्थाभावान्न सुट् । विशेषणे प्रकृताशयोपयोगिनि सति परिकरालङ्कार इति भावः । अत्र हि व्यङ्ग्यार्थसत्त्वेऽपि न ध्वनित्वव्यपदेशः । व्यङ्ग्यार्थस्य वाच्यपरिकरत्वात् । उदाहरति—सुधांश्विति । सुधांशुना शीतरश्मिना चन्द्रेण कलितः कृत उत्तंसो भूषणं येन स शिवः शङ्करः । वो युष्माकं तापं सन्तापं हरतु दूरीकरोतु । अत्र सुधांशुकलितोत्तंस इति विशेषणेन शिवे तापनिवारकता चन्द्रसम्बन्धिशैत्यप्रतिपादनद्वारा सूचितेति विशेषणस्य साभिप्रायता । अतः परिकरालङ्कारः ॥ ३९ ॥

नहीं जानते कि मेरे हृदय में तीन नेत्र वाले भगवान् शंकर विराजमान हैं । इसी लिए मैंने तुम्हारे पर विजय प्राप्त की है । यहां 'मेरे हृदय में त्रिनेत्र शंकर हैं' इस वाक्य से कामदेव के दाहक शंकर के तीसरे अग्निमय नेत्ररूपी नवीन अर्थ की प्रतीति होती है, अतः उक्त अलंकार है अथवा मन्मथ का विजय करना अति कठिन कार्य है । अतः उसके जीतने का उसी के विजेता शंकर की भक्ति द्वारा समर्थन किया अतः वाक्यार्थ-हेतुक काव्यलिङ्ग जानना चाहिये ॥ ३८ ॥

परिकर का लक्षण यह है-जहां विशेषण का प्रयोग किसी अभिप्रायवश किया गया हो, वहां परिकर अलंकार होता है । 'परिकरोतीति परिकरः सोऽस्यास्तीति परिकरः' प्रस्तुत अर्थ के पोषक शब्दवाला अलंकार परिकर होता है इस अलंकार में व्यङ्ग्यार्थ वर्तमान रहता है तो भी हम उसे ध्वनि नहीं कह सकते । क्योंकि वह वाच्य अर्थ का उपस्कारक बन बैठता है । यदि वह वाच्यका पोषक नहीं होवे तो उसे ध्वनि कह सकते हैं । परिकर का उदाहरण यह है । भगवान् चन्द्रशेखर आपके सन्ताप को दूर करें । यहां पर 'सुधांशुकलितोत्तंसः' अर्थात् 'चन्द्रशेखरः' इस विशेषण का प्रयोग भगवान् शंकरमें ताप मिटाने की शक्ति को बतलाने के अभिप्राय से किया गया है । अतः साभिप्राय विशेषण होने से यहां परिकर अलंकार है ॥३९॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।
चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ४० ॥
अक्रमातिशयोक्तिश्चेद् युगपत्कार्यकारणे ।
आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥ ४१ ॥

---

परिकराङ्कुरं निरूपयति—साभिप्राये इति । विशेष्ये वर्णनीये साभिप्राये सति परिकराङ्कुरोऽलङ्कारो भवति । उदाहरति—चत्वारो भुजा यस्य स देवो विष्णुः । चतुर्णां पुरुषार्थानां धर्मार्थकाममोक्षाणां दाता प्रदातास्ति । चतुर्भिर्भुजैश्चतुर्णां पुरुषार्थानां युगपद्दाने सौकर्यमिति चतुर्भुजविशेष्यपदस्य प्रकृताशयोपयोगिता, तेनात्र परिकराङ्कुरालङ्कारः ॥ ४० ॥

प्रथममक्रमातिशयोक्तिमाह—अक्रमेति । अतिशयिता प्रसिद्धिमतिक्रान्ता उक्तिरतिशयोक्तिः । यत्रोपमानद्वारोपमेयस्य निगरणं भवति तत्रातिशयोक्तिः । यथा च साहित्यदर्पणे तल्लक्षणम्—'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते' इति । अध्यवसायो नाम विषयिणा विषयनिगरणेन द्वयोरभेदप्रतिपत्तिः । यत्र कार्यकारणे युगपदेककालमेव स्तस्तत्राक्रमातिशयोक्तिः । कार्यकारणाधिकरणैककालावच्छिन्नत्वमक्रमातिशयोक्तित्वम् । उदाहरति—आलिङ्गन्तीति । हे देव हे राजन् ! ते तव शरा बाणाः । पराश्च शत्रवश्च ज्यां मौर्वीं भुवं च । समं युगपदेवालिङ्गन्ति समाश्रयन्ति । शतपत्रच्छेदनवत् शरारोपणशत्रुमरणकार्यकारणयोः समयः सूक्ष्मत्वान्न ज्ञायत इति

---

परिकराङ्कुर का निरूपण यह है—जहां विशेष्यवाचक पद का प्रयोग किसी अभिप्राय से किया गया हो, वहां उक्त अलंकार होता है । उदाहरण यह है—भगवान् चतुर्भुज ( चार भुजावाले विष्णु ) चारों पदार्थों ( धर्म, अर्थ काम, मोक्ष ) के देने वाले हैं । यहां चतुर्भुज पद विशेष्य है । इस पद के रखने में कवि का अभिप्राय यह है कि चारों हाथों से चारो पदार्थ एक ही समय में दिये जा सकते हैं । अतः विशेष्य के अभिप्राय सहित होने से परिकराङ्कुर अलंकार है ॥

अक्रमातिशयोक्ति यह है—लोकप्रसिद्धि से ऊपर की उक्ति को अतिशयोक्ति कहते हैं । उपमान द्वारा उपमेय के निगरण (निगल जाने) को सामान्य अतिशयोक्ति कहा है । जैसा कि रूपकातिशयोक्ति ( ४६ श्लो० ) में लिखा जावेगा । जहां कार्य और कारण एक ही समय में हो जावें, वहां अक्रमातिशयोक्ति होती है । इसका उदाहरण है—हे राजन् ! आपके बाण और शत्रु ये दोनों एक ही काल में ज्या ( धनुष की डोरी और भूमि ) का आश्रय लेते हैं । अर्थात् आपने बाण चढ़ाया और शत्रु भूमि पर गिर पड़े ये दोनों कार्य एक ही काल में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्यन्तातिशयोक्तिस्तत्पौर्वापर्यव्यतिक्रमे ।
अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ४२ ॥
चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।
यामीति प्रि॰ पृष्टाया वलयोऽभवदूर्मिका ॥ ४३ ॥

भावः । अत्र शरारोपणं कारणं कार्यं च शत्रुमारणरूपम् । एतयोर्यौगपद्यवर्णनेनाक्रमातिशयोक्तिः ॥ ४१ ॥

अत्यन्तातिशयोक्तिं व्याचष्टे—अत्यन्तेति । तयोः कार्यकारणयोः पूर्वं चापरं चेति तत्पूर्वापरे तयोर्भावस्तत्पौर्वापर्यं तस्य व्यतिक्रमेऽतिलङ्घने । अत्यन्तातिशयोक्तिर्भवति । कार्यकारणाधिकरणकपौर्वापर्यव्यतिक्रमत्वमत्यन्तातिशयोक्तित्वम् । उदाहरति—अग्रे इति । कामिन्या मानोऽग्रे पूर्वमेव गतः । पश्चाच्च सा प्रियेण पत्या । सुरतार्थमनुनीता । अनुनयो मानापनोदनस्य कारणम् । मानापनोदनं कार्यं तु कारणात्पूर्वमेव जातमिति कार्यकारणयोः पौर्वापर्याभावप्रतिपादनादत्रात्यन्तातिशयोक्तिः ॥ ४२ ॥

चपलातिशयोक्तिं व्याचष्टे—चपलेति । हेतोः कारणस्य प्रसक्तिः प्रसङ्गः । तज्जन्ये कार्ये सति चपलातिशयोक्तिर्भवति । कारणकथनमात्रेण कार्योत्पत्तिश्चपलातिशयोक्तिः । अहं यामि गच्छामि प्रवासमिति प्रियेण पृष्टायाः कामिन्या ऊर्मिकाङ्गुलीयकं

होते हैं आपके वाणों से शत्रु मर रहे हैं । यहां वाण चढ़ाना कारण है और शत्रुमरण कार्य है । दोनों का एक समय में ही होना वतलाने से अक्रमातिशयोक्ति अलंकार है ॥ ४१ ॥

अत्यन्तातिशयोक्ति यह है—पहिले कारण होता है और फिर कार्य होता है । इस नियमके विपरीत वर्णनमें उक्त अलंकार होता है । उदाहरण यह है—कामिनी का अभिमान पहिले ही मिट गया और फिर उसको प्रिय ने मनाया । अभिमान दूर करने के लिये पहिले उसको मनाना चाहिये था सो नहीं किया । अर्थात् मान हट जाने के वाद कान्ताको मनाने का वर्णन किया अतः यहां अत्यन्तातिशयोक्ति अलंकार है ॥ ४२ ॥

चपलातिशयोक्ति यह है—कारण के कथनमात्र से कार्य के होने पर यह अलंकार हो जाता है । उदाहरण यह है—किसी नायक ने अपनी कान्ता को कहा कि मैं विदेश जा रहा हूँ । इस कथनमात्र से उस कान्ता की अंगूठी हाथ का कंकण वन गई । अर्थात् वह वियोगदुःख से इतनी दुर्वल हो गई कि अंगुलि की चीज हाथ में आने लगी । यहां प्रवासगमनरूप कारण के कथनमात्र से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्बन्धातिशयोक्तिः स्यात्तदभावेऽपि तद्वचः ।
पश्य सौधाग्रसंसक्तं विभाति विधुमण्डलम् ॥ ४४ ॥
भेदकातिशयोक्तिश्चेदेकस्यैवान्यतोच्यते ।
अहो अन्यैव लावण्यलीला बालाकुचस्थले ॥ ४५ ॥

---

वलयः करभूषणमभवत् । प्रियप्रवासगमनश्रवणमात्रेण वियोगदुःखतप्तायाः कान्तायाः अङ्गुलिभूषणं कार्श्यात् करभूषणमभूदिति प्रवासकथनमात्रेण कारणेन दौर्बल्यकार्योत्पत्तिरिति चपलातिशयोक्तिरत्र । एतास्तिस्रोऽतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः ॥ ४३ ॥

सम्बन्धातिशयोक्तिं लक्षयति—सम्बन्धेति । तदभावेऽपि तदयोगेऽपि तद्वचः तद्योगः सम्बन्धातिशयोक्तिः । असम्बन्धे सम्बन्धकल्पनं सम्बन्धातिशयोक्तिः । विधुमण्डलं चन्द्रस्य मण्डलं सौधाग्रे हर्म्याग्रे संसक्तं सम्बद्धं विभाति शोभत इति त्वं पश्य विलोकय । सौधाग्रस्याभ्रंकषत्ववर्णने कविना चन्द्रमण्डलस्य सौधासम्बन्धेऽपि तत्सम्बन्धो वर्णित इत्यत्र सम्बन्धातिशयोक्तिः ॥ ४४ ॥

भेदकातिशयोक्तिं व्याचष्टे—भेदकेति । यत्रैकस्यैव पदार्थस्यान्यता भिन्नता उच्यते तत्र भेदकातिशयोक्तिः । अभेदे भेदकथनं भेदकातिशयोक्तिः । उदाहरति—अहो इति । बालाकुचस्थलेऽन्यैवापरैव लोकप्रसिद्धेतरैवेति यावत् । लावण्यलीला सौन्दर्यशोभास्ति । अहो आश्चर्ये । अत्र लोकप्रसिद्धलावण्याभेदेऽपि बालाकुचलावण्यस्य भेदकथनाद् भेदकातिशयोक्तिः । 'ओत्' इति सूत्रेण 'अहो अन्यैव' इत्यत्र प्रगृह्यत्वात्प्रकृतिभावः ॥ ४५ ॥

---

कृशतारूप कार्य की उत्पत्ति का वर्णन चपलातिशयोक्ति है । उक्त तीनों अलंकार कार्य की शीघ्रता को बताने वाले हैं ॥ ४३ ॥

सम्बन्धातिशयोक्ति यह है—किसी एक वस्तु का सम्बन्ध न होने पर भी उसके साथ सम्बन्ध बतला देने पर उक्त अलंकार होता है । उदाहरण यह है—महल की छत पर उदित हुए चन्द्रमा को देखिये । यहां पर महल की उच्चता के वर्णन में कवि ने चन्द्रमा का महल के साथ स्पर्शसम्बन्ध न होने पर भी उसका महल से सम्बन्ध बतलाया इसलिये उक्त अलंकार है ॥ ४४ ॥

भेदकातिशयोक्ति देखिये—एक ही पदार्थ को भिन्न रूप से बतला देने पर यह अलंकार होता है अर्थात् अभेद में भेद बतला देने पर उक्त अलंकार होता है । उदाहरण यह है—बाला के स्तनों की शोभा और ही प्रकार की है अर्थात् अलौकिक है । बाला के स्तनों की शोभा अलौकिक शोभा से भिन्न नहीं है तथापि उसे लौकिक से भिन्न बतलाया गया है । अतः यहां भेदकातिशयोक्ति है ॥ ४५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रूपकातिशयोक्तिश्चेद्रूप्यं रूपकमध्यगम् ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥ ४६ ॥
प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वावकल्पनम् ।
कलिन्दजातीररुहाः श्यामलाः सरलद्रुमाः ॥ ४७ ॥

---

रूपकातिशयोक्तिं लक्षयति—रूपकेति। चेद् यदि रूप्यं विषय उपमेयमिति यावत् । रूपकमध्यगं विषयिमध्यगं स्यात्तदा रूपकातिशयोक्तिः । यत्र विषयिणैव कार्यकारणभावकथनं तत्र रूपकातिशयोक्तिः । उदाहरति–पश्येति । शितास्तीक्ष्णाः शरा बाणाः । नीलोत्पलद्वन्द्वात् नीलकमलयुगलात् निःसरन्ति निर्यान्ति । कटाक्षाः कामिनीनेत्रान्निर्यान्तीति भावः । अत्र नेत्रकटाक्षरूपविषययोर्नीलकमलशरविषयित्वरूपेण कार्यकारणभावकथनाद् रूपकवाचिनीलोत्पलशरपदाभ्यामेव रूप्यवाचिनेत्रकटाक्षप्रतीते रूपकातिशयोक्तिः । रूप्यस्य रूपकान्तःपातित्वात् । अत्र सर्वे रूपकभेदा द्रष्टव्याः । कुवलयानन्दे तु सापह्नवातिशयोक्तिः, असम्बन्धातिशयोक्तिश्चेति द्वौ भेदावधिकौ मतौ ॥ ४६ ॥

प्रौढोक्तिं दर्शयति—प्रौढोक्तिरिति। तदशक्तस्य तत्रासमर्थस्य। तच्छक्तत्वावकल्पनं तत्र सामर्थ्यवर्णनम् । प्रौढोक्तिरलङ्कारः । उदाहरणं व्याचष्टे—कलिन्देति । कलिन्दजाया यमुनायास्तीरे तटे रोहन्तीति तादृशाः सरलद्रुमाः सरलाख्यवृक्षाः श्यामलाः नीलाः सन्ति । कालिन्दीतीरजातत्वादेषां नैल्यमिति भावः । अत्र यमुनातटोत्पत्तेर्नैल्याजननाशक्तत्वेऽपि नैल्यजननशक्तत्ववर्णनात् प्रौढोक्तिः । अयमलङ्कारोऽतिश-

---

रूपकातिशयोक्ति यह है—उपमेय ( रूप्य ) उपमान ( रूपक ) के अन्तर्गत होवें तो रूपकातिशयोक्ति होती है । उपमेय के निगरण से जहां उपमान द्वारा ही कार्य-कारणभाव-कथन हो वहां यह अलंकार होता है । उदाहरण यह है—नीलोत्पल के युगल से तीक्ष्ण बाण निकल रहे हैं । भावार्थ यह हुआ कि कान्ता के नेत्रों से जो कटाक्ष निकल रहे हैं वे बाणों के समान तीक्ष्ण हैं । यहां नेत्र और कटाक्ष उपमेय ( रूप्य ) हैं । यह दोनों कमल और बाणरूपी उपमान ( रूपक ) के अन्तःपाती हैं; अतः उक्त अलंकार है । रूपक के अन्य भेदों से इसके भी भेद बन जाते हैं-कुवलयानन्द में सापह्नवातिशयोक्ति और असम्बन्धातिशयोक्ति भी मानी गई है ॥ ४६ ॥

प्रौढोक्ति यह है—किसी एक कार्य के अयोग्य पदार्थ को उसके योग्य कह देने को प्रौढोक्ति कहते हैं । उदाहरण यह है—कालिन्दी ( यमुना ) के तीर पर होने से सरल नामक वृक्ष नीले हैं । यमुना के तीर में नीले वृक्षों को उत्पन्न करने की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्भावना यदीत्थं स्यादित्यूहोऽन्यप्रसिद्धये ।
सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ॥ ४८ ॥
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ।
वाञ्छितादधिकप्राप्तिरयत्नेन प्रहर्षणम् ॥ ४९ ॥

योक्त्यन्तर्गत इति काव्यप्रकाशः ॥ ४७ ।

सम्भावनालङ्कारं व्याचष्टे—सम्भावनेति । अन्यस्यापरस्य प्रसिद्धे यदीत्थमेवं स्यात् तदान्यकार्यं स्यादित्यूहस्तर्को यत्र तत्र सम्भावनालंकृतिः । यदीत्थं स्यात्तदैवं स्यादित्यादितर्कबोधकपदत्वं सम्भावनात्वम् । उदाहरति—सिक्तमिति । स्फटिकस्य कुम्भः स्फटिकमणिकलशस्तस्यान्तःस्थितिरन्तरवस्थानं तया श्वेतीकृतैः सितीकृतैः । श्वेतैरिति भावः । जलैर्नीरैः । सिक्तमभिषिक्तं मौक्तिकं मुक्ता चेद् यदि लतां वल्लीं सूते समुत्पादयति । तत्पुष्पैस्तत्कुसुमैः समं सदृशं ते यशः कीर्तिरस्ति । हे राजन्निति शेषः । कवयो यशोवर्णं सितं मन्यन्ते । तेन श्वैत्यातिशयप्रतिपादनायोक्तम्—'यदि स्फटिककुम्भान्तःश्वेतजलैर्मौक्तिकलतापुष्पाणि भवेयुः तदा तः सितपुष्पैः समं ते यशः स्यात्' इति । अतोऽत्र सम्भावनालङ्कारः ॥ ४८–४८½ ॥

प्रहर्षणालङ्कारमाह—वाञ्छितेति । अयत्नेन यत्नं विना वाञ्छितादभीप्सितादधिकस्य प्राप्तिर्लाभः प्रहर्षणालङ्कारः । अनायासजन्याभीप्सितार्थविषयकाधिकप्राप्तिबोधकपदसमुदायः प्रहर्षणालङ्कारः ॥ ४९ ॥

---

सामर्थ्य नहीं । तथापि उसको नीले वृक्षों का उत्पादक बतलाया । अतः यहां उक्त अलंकार है ॥ ४७ ॥

सम्भावना अलंकार यह है— किसी एक कार्य की सिद्धि के लिए 'यदि ऐसा हो तो ऐसा हो' ऐसी कल्पना की जावे तो सम्भावना अलंकार होता है । 'सिक्तम्०' यह पूर्ण श्लोक इसका उदाहरण है । स्फटिक मणि के कलश में रखने से सफेद जल से सींचा गया मौक्तिक यदि श्वेत लता को पैदा करे और उसमें श्वेत पुष्प आवें तो हे राजन ! वे आपके यश के बराबर होवें । अर्थात् आपके यश के समान श्वेत संसार में कोई अन्य पदार्थ है ही नहीं । कविलोग यश का रंग श्वेत बतलाते हैं । यहां इसका साम्य बतलाने के लिये कवि ने कल्पना की कि श्वेत जल से मोती को सींचा जावे और फिर श्वेत रंग की बेल पैदा होवे पुनः उस लता के श्वेत पुष्प होवें तो आपके यश की तुलना होवें । अतः उक्त अलंकार है ॥ ४८–४८½ ॥

प्रहर्षण अलंकार यह है—परिश्रम के बिना वाञ्छित अर्थ से अधिक की प्राप्ति होने पर प्रहर्षण अलंकार होता है ॥ ४९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दीपमुद्द्योतयेद्यावत्तावदभ्युदितो रविः ।
इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् ॥ ५० ॥
दीपमुद्द्योतयेद्यावत्तावन्निर्वाण एव सः ।
क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता ॥ ५१ ॥

प्रहर्षणमुदाहरति—दीपमिति । यावत् यावत् कालम् । दीपं प्रदीपम् । पुरुष उद्योतयेत्प्रकाशयेत् तावत्कालं रविः सूर्यः । अभ्युदितः प्रकाशमितः । अत्र दीपप्रकाशेच्छोः पुरुषस्य दीपप्रकाशाधिकसूर्यप्रकाशलाभवर्णनेन वाञ्छितादधिकप्राप्तेः प्रहर्षणालङ्कारः । विषादनालङ्कारं लक्षयति—इष्यमाणेति । इष्यतेऽसाविष्यमाणः पदार्थस्तस्मात् विरुद्धार्थस्यासमीहितस्य सम्प्राप्तिस्तु विषादनमलङ्कारः । समीहिताद्विरुद्धार्थप्राप्तिर्विषादनमिति भावः ॥ ५० ॥

विषादनालङ्कारमुदाहरति—दीपमिति । यावत्पुरुषो दीपं प्रदीपमुद्योतयेदुद्दीपयेत्तावत्स दीपः । निर्वाण एव गत एव । अत्र द्दीपोद्द्योतकस्य दीपनिर्वाणरूपविरुद्धार्थप्राप्तेर्विषादनालङ्कारः । तुल्ययोगितां व्याचष्टे—क्रियादिभिरिति । तुल्या योगितान्वयो यस्यां सा तुल्ययोगिता । अनेकस्य प्रस्तुतस्याप्रस्तुतस्य वा क्रियादिभिः क्रियया गुणेन वा तुल्यता साम्यं तुल्ययोगितालङ्कारः । प्रस्तुतप्रस्तुतयोः, अप्रस्तुताप्रस्तुतयोर्वा क्रियया गुणेन वा तौल्ये तुल्ययोगितालङ्कारः । दीपके तु प्रस्तुताप्रस्तुतयोरेक-

---

प्रहर्षणका उदाहरण यह है—पुरुष दीपक जलाना चाहता ही था कि सूर्य का प्रकाश फैल गया । यहाँ दीपक के प्रकाश को चाहनेवाले पुरुष ने दीपक से अधिक सूर्य के प्रकाश को प्राप्त किया । अतः प्रहर्षण अलङ्कार है । विषादन अलंकार कहते हैं ॥ ५० ॥

विषादन का उदाहरण देखिए—पुरुष दीपक की वर्तिका ( वत्ती ) को अधिक प्रकाश के लिए ऊंची करना चाहता ही था कि दीपक शान्त हो गया । यहाँ वाञ्छित बात के विरुद्ध कार्य होने से विषादन अलंकार है । तुल्ययोगिता का लक्षण यह है—जिसका वर्णन किया जावे उसे प्रस्तुत कहते हैं और इसके विरुद्ध पदार्थ को अप्रस्तुत कहते हैं । जहाँ अनेक प्रस्तुत पदार्थों का वा अनेक अप्रस्तुत पदार्थों का एक क्रिया के या गुण के साथ तुल्यता ( समानता ) की जावे वहाँ तुल्ययोगिता होती है । दीपक में प्रस्तुत और अप्रस्तुत इन दोनों का एक धर्म के साथ सम्वन्ध होता है । यहां तो प्रस्तुत का प्रस्तुत के साथ और अप्रस्तुत का अप्रस्तुत के साथ साम्य होता है, यह इन दोनों में भेद जानना चाहिए । इस प्रकार प्रस्तुततुल्ययोगिता और अप्रस्तुततुल्ययोगिता ये दो तुल्ययोगिता के भेद

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ।
प्राचीनाचलचूडाग्रचुम्बिबिम्बे सुधाकरे ॥ ५२ ॥
प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम् ।

धर्मसम्बन्धो भवति स च नात्रेति भेदः । एवं च प्रस्तुततुल्ययोगिता, अप्रस्तुततुल्ययोगितेति द्विविधा तुल्ययोगिता । सरस्वतीकण्ठाभरणे तु हिताहितविषयकसमानवृत्तिकत्वं तुल्ययोगितात्वमुक्तम् । काव्यादर्शे चोत्कृष्टगुणवर्जनसदृशत्वप्रतिपादकत्वं तुल्ययोगितात्वमुक्तमिति तत्रैव कुवलयानन्दे चोदाहरणानि दृश्यानि ॥ ५१ ॥

प्रस्तुततुल्ययोगितामुदाहरति—सङ्कुचन्तीति । प्राच्यां भवः प्राचीनः स चासावचलश्चेति प्राचीनाचल उदयाचलः, तस्य चूडाग्रं शिखरं चुम्बतीति तादृशं बिम्बं मण्डलं यस्य तस्मिन् सुधाकरे चन्द्रे सति सरोजानि कमलानि स्वमीरयन्तीति स्वैरिण्यो व्यभिचारिण्यस्तासां वदनानि मुखानि च संकुचन्ति निमीलन्ति । स्वैरिणीनां चन्द्रप्रकाशे गमनाभावात् सङ्कोच इति भावः । अत्र चन्द्रोदये वर्णनीये प्रस्तुतयोर्मुखपद्मयोरेकक्रियासम्बन्धेन तुल्यताप्रतिपादनात्तुल्ययोगितालङ्कारः ॥ ५२ ॥

दीपकं लक्षयति—प्रस्तुतेति । प्रस्तुता वर्णनीया अप्रस्तुता अवर्णनीयाश्चेति प्रस्तुताप्रस्तुतानां प्रकृताप्रकृतानां पदार्थानां गुणेन क्रियया च तुल्यत्वे साम्ये दीपकं मतमिष्टम् । प्रकृतधर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयतीति दीपकम् । यद्वा दीप

---

होते हैं । सरस्वतीकण्ठाभरण में तो शत्रु और मित्र में श्लेषमर्यादा से एकता बतलाने को तुल्ययोगिता कहा है । अधिक गुणवान् पुरुषों के सदृश बतलाने पर तुल्ययोगिता होती है यह काव्यादर्श में कहा है । इनके उदाहरण कुवलयानन्द में भी देखिए ॥ ५१ ॥

प्रस्तुततुल्ययोगिता का उदाहरण यह है—चन्द्रमा के पूर्व दिशा में उदित होने पर कमल और स्वच्छन्द स्त्रियों के मुख संकुचित हो गये । चन्द्रोदय होने पर कमल तो संकुचित होते ही हैं, उजाला होने के कारण अन्धकार में जाने वाली व्यभिचारिणी स्त्रियों का भी जाना-आना रुक जाता है अतः उनके भी मुख सङ्कुचित हो गये । यहाँ चन्द्रोदय के वर्णन करने में कमलसंकोच और स्वैरिणीमुखों की उदासीनता ये दोनों ही वर्णनीय (प्रस्तुत) हैं और इन दोनों की संकोचरूप एक क्रिया के साथ तुल्यता बतलाई गई है । अतः यहाँ तुल्ययोगिता अलंकार है ॥५२॥

दीपक अलंकार का स्वरूप यह है—जहां प्राकरणिक और अप्राकरणिक पदार्थों का क्रिया व गुण से साम्य बतलाया जावे वहां दीपक अलंकार होता है । प्रकृत पदार्थ के धर्म जहां अप्रकृत पदार्थ को भी प्रकाशित करें वहां दीपक होता है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मेधां बुधः सुधामिन्दुर्बिभर्ति वसुधां भवान् ॥ ५३ ॥
आवृत्ते दीपकपदे भवेदावृत्तिदीपकम् ।

इव दीपकम् । 'संज्ञायां कन्' इतीवार्थे कन्प्रत्ययः । यथा प्रासादार्थमारोपितो दीपो रथ्यायामप्युपकरोतीति दीपसाम्याद्दीपकाख्योऽलङ्कारोऽपि प्रकृतमप्युपकरोति । प्रस्तुताप्रस्तुतनिष्ठसाधारणधर्मकथनत्वं दीपकत्वम् । उदाहरति—मेधामिति । बुधः पण्डितो मेधां मतिम् । इन्दुश्चन्द्रः सुधां पीयूषम् । भवान् नृपः । वर्णनीय इति भावः । वसुधां वसुन्धराम् । बिभर्त्ति धत्ते । अत्र राजा प्रस्तुतः, वर्णनीयत्वात् । बुध इन्दुश्चाप्रकृतौ, वर्णनाविषयत्वात् । धारणरूपक्रिया हि दीपवन्मध्ये स्थिता प्रकृताप्रकृतपदार्थद्वयसम्बद्धेति दीपकालङ्कारः । तुल्ययोगितायां प्रस्तुतप्रस्तुतयोरप्रस्तुताप्रस्तुतयोर्वा धर्मैक्यं भवति, अत्र तु प्रस्तुताप्रस्तुतयोरिति भेदः ॥ ५३ ॥

आवृत्तिदीपकं व्याचष्टे—आवृत्त इति । दीपकस्थानीये पदेऽर्थे उभयरूपे वाऽऽवृत्ते पौनःपुन्ये सत्यावृत्तिदीपकं भवति । पद्यते ज्ञायतेऽर्थो येनेति कर्मव्युत्पत्त्या पदशब्देनार्थस्यापि ग्रहणं भवति । एतेन पदावृत्तिदीपकमर्थावृत्तिदीपकं पदार्थोभयावृत्तिदीपकं चेति त्रयो भेदा दीपकालङ्कारस्य भवन्ति । यथोक्तं दण्डिना—

'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि ।
दीपकस्थानमेवेष्टमलङ्कारत्रयं यथा' ॥ इति । ( २ परि० ११६ श्लो० )

अथवा जैसे अपने गृहमें रखे हुए दीपक से बाहर भी प्रकाश हो जाता है, उसी प्रकार यह अलंकार अप्रकृत अर्थको भी प्रकाशित करता है। अत एव इसकी दीपक संज्ञा मानी गई है। 'संज्ञायां कन्' इस सूत्र से यहां कन् प्रत्यय हुआ है। उदाहरण यह है—विद्वान् पुरुष बुद्धि को तथा चन्द्रमा अमृत को जिस तरह धारण करता है, उसी तरह हे राजन् ! आप पृथ्वी को धारण करते हैं। यहां राजा का वर्णन प्रस्तुत है। बुध और चन्द्रमा का वर्णन अप्रस्तुत है। धारण रूप क्रिया दीपक के समान प्रकृत वा अप्रकृत इन दोनों पदार्थों से सम्बन्ध रखती है अतः दीपक अलंकार है। तुल्ययोगिता में अनेक प्रस्तुतों का या अनेक अप्रस्तुतों का समान क्रिया से सम्बन्ध रहता है और यहां एक प्रस्तुत और दूसरे अप्रस्तुत का क्रियादिसाम्य वतलाया जाता है। अतः ये दोनों अलंकार भिन्न हैं ॥ ५३ ॥

आवृत्तिदीपक यह है—जहां दीपक पद (गुण वा क्रियावाचक) वा अर्थ की आवृत्ति की गई हो वहां आवृत्तिदीपक होता है। पदावृत्तिदीपक, अर्थावृत्तिदीपक और पदार्थोभयावृत्तिदीपक ये आवृत्तिदीपक के तीन भेद होते हैं। उदा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दीप्त्याग्निर्भाति भातीन्दुः कान्त्या भाति रविस्त्विषा ॥५४॥
वाक्ययोरर्थसामान्ये प्रतिवस्तूपमा मता ।
तापेन भ्राजते सूर्यः शूरश्चापेन राजते ॥ ५५ ॥

---

त्रिविधं दीपकमुदाहरति—दीप्त्येति । अग्निर्वह्निः दीप्त्या प्रकाशेन भाति शोभते । इन्दुश्चन्द्रः कान्त्या भाति । रविः सूर्यश्च त्विषा भाति । अत्र भातीति पदस्य तदर्थस्य चावृत्तिर्विद्यते । पदार्थावृत्तिरूपत्वादुभयावृत्तिरपि । तेनात्रावृत्तिदीपकमलङ्कारः । अत्राग्निः प्रस्तुतः । चन्द्रसूर्यौ चाप्रस्तुतौ । एतयोरेकक्रियाधर्मसम्बन्धे दीपकम् । काव्यप्रकाशे तु मालादीपकमपि स्वीकृतम् । यदा पूर्वेण पूर्वेण वस्तुनोत्तरमुत्तरमुपक्रियते तदा मालादीपकं भवतीति ॥ ५४ ॥

प्रतिवस्तूपमां लक्षयति—वाक्ययोरिति । वाक्ययोर्द्वयोरर्थयोः सामान्ये सादृश्ये प्रतिवस्तूपमालंकृतिर्मता । प्रतिवस्तु प्रतिवाक्यार्थमुपमा साधारणो धर्मो यस्यां सा प्रतिवस्तूपमा । उपमेयवाक्ये उपमानवाक्ये च साधारणधर्मस्य पृथक् पदेनोक्ताविग्रमिति भावः । वस्तुप्रतिवस्तुभावापन्नयोर्वाक्ययोर्यत्रौपम्यं गम्यं भवति तत्रेयमिति यावत् । एकस्यार्थस्य शब्दद्वयेनाभिधानं वस्तुप्रतिवस्तुभावः । वाक्यद्वयनिष्ठसाधारणधर्मार्थत्वं प्रतिवस्तूपमात्वम् । उदाहरति—तापेनेति । सूर्यस्तापेन तेजसा भ्राजते शोभते । शूरश्च चापेन धनुषा राजते शोभते । अर्थसाम्ये वाक्यद्वयनिष्ठशोभन-

---

हरण देखिए—अग्नि ज्वाला से, चन्द्रमा और सूर्य कान्ति से शोभित होता है । 'भाति' ( शोभित होता है ) क्रिया की वा इसके अर्थ की आवृत्ति की गई है, अतः आवृत्तिदीपक अलंकार है । यहां अग्निवर्णन प्रस्तुत है । चन्द्र और सूर्य का वर्णन अप्रस्तुत है । इन सबका एक क्रिया के साथ सम्बन्ध होने से दीपक हो जाता है । काव्यप्रकाश में मालादीपक भी माना है । पूर्व-पूर्व के पदार्थों से जहां आगे ( उत्तर ) के पदार्थों का सम्बन्ध हो, वहां मालादीपक माना गया है ॥ ५४ ॥

प्रतिवस्तूपमा का स्वरूप यह है—उपमान और उपमेय वाक्यों का समान अर्थ होने पर प्रतिवस्तूपमा होती है । प्रतिवस्तु ( प्रत्येकवाक्यार्थ ) में साधारण धर्म की सत्ता होना इस अलंकार का यौगिक अर्थ है । अर्थात् दोनों वाक्यों में साधारण धर्म का पृथक् २ पदों से प्रयोग होना चाहिये । एक अर्थ को दो प्रकार के शब्दों से कहने पर वस्तु-प्रतिवस्तुभाव होता है और यह इस अलंकार में प्रधान रहता है । दोनों वाक्यों का सादृश्य यहां अर्थ से जाना जाता है । 'तापेन०' इसका उदाहरण है । सूर्य अपने तेज से और वीर अपने धनुषसे शोभित

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चेद्विम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः ।
स्यान्मल्लप्रतिमल्लत्वे संग्रामोद्दामहुंकृतिः ॥ ५६ ॥

धर्मबोधकपदस्य भिन्नपदोपादानात्प्रतिवस्तूपमा । साम्यं च गम्यम् ॥ ५५ ॥

दृष्टान्तं लक्षयति—चेदिति । चेद् यदि वाक्यार्थयोर्बिम्बश्च प्रतिबिम्बश्चेति बिम्बप्रतिबिम्बौ तयोर्भावो बिम्बप्रतिबिम्बत्वम् । 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इति धातोः 'उल्बादयश्च' (४।९५) इत्यौणादिकात्सूत्राद् वन्नुमागमह्रस्वत्वे बिम्बशब्दसिद्धिः । यथा दर्पणे बिम्बवत्प्रतिबिम्बौ दृश्यते तथैवैकवाक्यवदपरवाक्यं यत्र तत्तदा दृष्टान्तोऽलङ्कृतिर्दृष्टान्तालंकारो भवति । यथा मल्लप्रतिमल्लत्वे सत्येव संग्रामे युधि उद्दाम्न्युत्कटा हुङ्कृतिर्गर्जना स्यात्तथैवं बिम्बप्रतिबिम्बत्व एव दृष्टान्तालंकारो भवति । दृष्टोऽन्तो निश्चयो यस्मिन्स दृष्टान्तः । उपमानोपमेयनिष्ठवाक्यधर्मयोर्बिम्बप्रतिबिम्बभावत्वं दृष्टान्तत्वम् । वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्युक्तमप्पयदीक्षितैः । 'अस्य चालंकारस्य प्रतिवस्तूपमया भेदकमेतदेव यत्तस्यां धर्मो न प्रतिबिम्बितो भवति । किन्तु शुद्धसामान्यात्मनैव स्थितः । इह तु प्रतिबिम्बितो जायते' इत्याहू रसगङ्गाधरकाराः । न चात्रोपमा यथोवादिशब्दाभावात् । नाप्यर्थान्तरन्यासः । सामान्यविशेषभावाभावात् । न च निदर्शना । तत्र साधारणधर्मानुपन्यासात् वाक्यार्थयोः सापेक्षत्वाच्च । अत्र तु साधारणधर्मस्याप्युपादानं वाक्यार्थयोः स्वस्वार्थे निरपेक्षत्वं च । उदाहरणमप्येतदेव पद्यम् । मल्ल-

होता है । यहां लोगों का सामान्य अर्थ है । शोभनरूप सामान्य धर्म 'भ्राजते, राजते' शब्दों द्वारा पृथक् २ किया गया है अतः प्रतिवस्तूपमा अलंकार है ॥५५॥

दृष्टान्त का लक्षण यह है—उपमान और उपमेय वाक्यों के बिम्ब-प्रतिबिम्बभाव को दृष्टान्त अलंकार कहा है, जैसे दर्पण में पुरुष का प्रतिबिम्ब दीखता है, वैसे ही एक वाक्य के समान दूसरा वाक्य होने पर दृष्टान्त होता है । यथा दो योद्धाओं के होने पर ही संग्राम में गर्जना होती है, वैसे ही बिम्ब-प्रतिबिम्बभाव होने पर अलंकार हो जाता है । आपस में भिन्न भी सादृश्य के कारण अभिन्न से प्रतीत होने वाले, उपमान और उपमेय के साधारण धर्मों के पृथक् २ प्रयोग को बिम्ब-प्रतिबिम्ब भाव कहते हैं । यहां साधारणधर्म का पृथक् २ पदों से प्रयोग नहीं होता, किन्तु बिम्ब-प्रतिबिम्ब भाव ही रहता है । अतः प्रतिवस्तूपमा नहीं हो सकती । यथा, इव आदि शब्दों के न रहने से यहां उपमा नहीं हो सकती । सामान्यविशेषभाव नहीं होने से अर्थान्तरन्यास भी नहीं है । निदर्शना में साधारणधर्मका प्रयोग नहीं होता और दोनों वाक्यार्थ आपसमें सम्बद्ध रहते हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दृष्टान्तश्चेद्भवन्मूर्तिस्तन्मृष्टा दैवदुर्लिपिः।
जाता चेत्प्राक् प्रभा भानोस्तर्हि याता विभावरी ॥ ५७ ॥
वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।

प्रतिमल्लत्वे यथा संग्रामोद्दामहुंकृतिस्तथैव बिम्बप्रतिबिम्बत्वे दृष्टान्तालंकृतिरित्यन्वये मल्लप्रतिमल्लत्वबिम्बप्रतिबिम्बत्वयोर्दृष्टान्तहुंकृत्योश्च बिम्बप्रतिबिम्बत्वादत्र दृष्टान्तालंकारः ॥ ५६ ॥

दृष्टान्तहुङ्कृत्योर्लिङ्गभेदेन बिम्बप्रतिबिम्बस्यास्पष्टतयोदाहरणान्तरमाह=दृष्टेति भगवन्तं प्रति भक्तोक्तिः। हे भगवन्! चेद् यदि भवन्मूर्तिरन्तर्हृदये दृष्टा विलोकिता तत्तदा दैवस्य दुर्लिपिर्दुर्भाग्यलिपिः। मृष्टा नष्टा। तव दर्शनेन दुर्भाग्यं नश्यतीति भावः। प्राक् प्राच्यां चेद् यदि भानोः सूर्यस्य। प्रभा दीप्तिर्जातोत्पन्ना। तर्हि विभावरी रात्रिर्याता गता। सति सूर्यप्रकाशे रात्रिर्नश्यतीति भावः। अत्र बिम्बप्रतिबिम्बभावाद् दृष्टान्तालंकारः। नात्र प्रतिवस्तूपमावत्साधारणधर्मस्य भिन्नपदोपादानम्। किन्तु साधारणधर्मस्य बिम्बप्रतिबिम्बभावत्वमिति दृष्टान्तः॥

निदर्शनां व्याचष्टे—वाक्यार्थयोरिति। सदृशयोः समानयोर्वाक्यार्थयोरैक्यारोप एकतारोपो निदर्शनाख्योऽलंकारः। निश्चित्य दर्शनं सादृश्यप्रकटनं निदर्शना। दृशेर्ण्यन्तात् स्त्रियां भावे युच्प्रत्ययः। अनुपपद्यमानो वाक्यार्थयोः सम्बन्धो यत्रौपम्यबोधकः सन् पर्यवस्यति तत्र निदर्शना। साधारणधर्मानुपन्यासाद्वाक्यार्थयोः सापे-

अतः यहां निदर्शना भी नहीं हो सकती। दृष्टान्त का उदाहरण इसी श्लोक में देखिये। मल्ल-प्रतिमल्लत्व और बिम्बप्रतिबिम्बत्व दृष्टान्त और हुंकृति शब्द का आपस में बिम्ब-प्रतिबिम्बभाव होने से दृष्टान्त अलंकार होता है ॥ ५६ ॥

दृष्टान्त का द्वितीय उदाहरण यह है—पहिले के उदाहरण में दृष्टान्त और हुंकृति शब्दों का लिङ्गभेद होने से बिम्ब-प्रतिबिम्ब भाव स्पष्ट नहीं प्रतीत होता अतः यह दूसरा उदाहरण दिया गया है—किसी भक्त का कथन है कि हे भगवन्! अन्तःकरण में आपकी मूर्ति के साक्षात्कार से सब दुष्कृत नष्ट हो जाते हैं। जैसे पूर्व दिशा में सूर्य की कान्ति फैलने से रात्रि का विनाश हो जाता है। यहां उपमान और उपमेय वाक्यों का बिम्ब-प्रतिबिम्बभाव होने से दृष्टान्त होता है ॥ ५७ ॥

निदर्शना का स्वरूप यह है—विभिन्न दो वाक्यों में सादृश्य के कारण एकता के आरोप को निदर्शना कहते हैं। निश्चयरूप से सादृश्य प्रकट करना निदर्शना का यौगिक अर्थ है। दोनों वाक्यों के साकाङ्क्ष होने से तथा साधारण धर्म का प्रयोग न होने से दृष्टान्त अलंकार में इसका अन्तर्भाव नहीं होता।


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

या दातुः सौम्यता सेयं सुधांशोरकलङ्कता ॥ ५८ ॥
व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।

सत्त्वाच्च न दृष्टान्तेऽन्तर्भावः । उदाहरति—या दातुरिति । या दातुर्वदान्यस्य सौम्यता सेयं सुधांशोश्चन्द्रस्याकलङ्कता कलङ्कशून्यता । अत्र दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य चन्द्रस्याकलङ्कत्वस्योपमानवाक्यस्य च यत्तच्छब्दाभ्यामैक्यारोपान्निदर्शनालङ्कारः । इयं निदर्शना सदर्था, असदर्थेति द्विविधा । पुनश्च वाक्यगा, अनेकवाक्यगा, पदार्थगा, मालारूपेति मिलित्वाऽष्टधा । उदाहरणान्यन्यत्र द्रष्टव्यानि । पदार्थवृत्तिनिदर्शना त्वत्र ललितोपमा ( ५ म० १५ श्लो० ) ऽन्तर्भूता । किञ्चित्क्रियाविशिष्टस्य कस्यचित् स्वक्रिययैव यत्रार्थो बोध्यते तत्रापरा निदर्शना मता । यथा—

'उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयन्समृद्धीनां फलं सुहृदनुग्रहः' इति ।

अत्र सविता स्वोदयसमय एव पद्मेषु लक्ष्मीमादधानः स्वया पद्मलक्ष्म्याधानक्रियया परान्प्रति समृद्धीनां फलं सुहृदनुग्रह एवेति श्रेयस्करमर्थं बोधयतीत्यपरा निदर्शनोक्ता काव्यप्रकाशकुवलयानन्दादिग्रन्थेषु ॥ ५८ ॥

व्यतिरेकं निरूपयति—व्यतिरेक इति । चेद् यदि । उपमानोपमेययोः प्रकृताप्रकृतयोः । विशेषो वैलक्षण्यं स्यात्तदा व्यतिरेकोऽलङ्कारो भवति । व्यतिरेकशब्दो भावघञन्तः । उपमानापेक्षयोपमेयस्याधिक्ये न्यूनत्वे वा व्यतिरेक इति भावः ।

---

उदाहरण यह है—जैसे दाता की सौम्यता है, वैसे ही चन्द्रमा में निष्कलंकता है । यहाँ दोनों वाक्यों में यत्-तत् शब्दों से एकता बतलायी गई है । अतः निदर्शना अलंकार है । सदर्था और असदर्था ये दो भेद निदर्शना के हैं । पुनः वाक्यगा, अनेकवाक्यगा, पदार्थगा, मालारूपा ये चार २ भेद और होते हैं । पदार्थगा निदर्शनाको यहाँ ( ५ म० १५ श्लोक ) ललितोपमा कहा है । किसी क्रिया से ही जहाँ अन्य अर्थका ज्ञान हो उसे भी कुवलयानन्द में निदर्शना कहा है । पुरुष की सम्पत्ति का उपभोग बन्धुजन करें, इस बातको प्रकट करता हुआ सूर्य उदय होते ही पद्मों की शोभा बढ़ाता है ! यहां सूर्य की उदयरूप क्रिया द्वारा बन्धुजनों के उपभोगार्ह सम्पत्ति को बतला देने से निदर्शना है ॥ ५८ ॥

व्यतिरेक का लक्षण यह है—जहां उपमान की अपेक्षा उपमेय में अधिकता वा न्यूनता बतलाई जावें, वहां व्यतिरेक अलंकार होता है । 'शैलाः' इत्यादि श्लोक इसका उदाहरण हैं । सज्जन पर्वत के समान उन्नत ( बड़े व ऊंचे ) हैं,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः ॥ ५९ ॥
सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ।

उदाहरति—शैला इति । सन्तः सज्जनाः । शैला इव पर्वता इव । उन्नता उत्कर्षं प्राप्ताः, ऊर्ध्वं गताश्च किन्तु प्रकृत्या स्वभावेन कोमलाः सुकुमाराः सन्ति । अत्र शैलसज्जनयोः औन्नत्यसाम्येऽपि सज्जनानां कोमलत्वेनाधिक्यप्रतिपादनाद् व्यतिरेको भवति । व्यतिरेकभेदाः साहित्यदर्पणे यथा—उपमेयस्याधिक्ये उपमानस्य न्यूनत्वे चोक्ते एको भेदः । आधिक्यनिमित्तमात्रस्य, न्यूनत्वनिमित्तमात्रस्य, उभयोश्चानुक्तौ त्रय इति पूर्वसहिताश्चत्वारो भेदाः । एते च प्रत्येकं साम्ये शाब्दे आर्थे आक्षिप्ते चेति द्वादश । श्लेषाश्लेषाभ्यां चतुर्विंशतिभेदा उपमेयस्योपमानादाधिक्ये उक्ताः । पुनरुपमेयस्योपमानान्न्यूनतायामपि चतुर्विंशतिभेदा भवन्तीति सर्वसङ्कलने अष्टचत्वारिंशद् भेदा भवन्ति ॥ ५९ ॥

सहोक्तिं प्रदर्शयति—सहोक्तिरिति । चेद् यदि । जनरञ्जनो लोकमनोहारी । सहभावः साहित्यं भासते प्रकाशते तदा सहोक्तिरलङ्कारः । सहभावस्योक्तिः सहोक्तिः । 'सह युक्तेऽप्रधाने' ( २।३।१९ ) इति पाणिनिसूत्रेण यत्र सहार्थे तृतीया भवति तत्रायमलङ्कारो भवति न तु 'शशिना च निशा निशया च शशी', इत्यादौ 'हेतौ' ( २।३।२३ ) इति पाणिनीयसूत्रेण हेत्वर्थतृतीयास्थले । अयमाशयः—यथा 'पुत्रेण सहागतः पिता'इत्यत्र तृतीयान्तस्य विशेषणतया गुणत्वम्, प्रथ-

---

किन्तु पर्वत की तरह कठिन नहीं हैं । अर्थात् सज्जन कोमल स्वभाव के होते हैं । यहां सज्जनरूप उपमेय में पर्वतरूप उपमान से कोमलता अधिक बतलाई गई है, अतः व्यतिरेक अलंकार है । साहित्यदर्पण में व्यतिरेक के अड़तालीस भेद लिखे हैं । उपमेय की अधिकता और उपमान की न्यूनता में एक भेद होता है । एक भेद यह और आधिक्यमात्र की न्यूनत्वमात्र की और इन दोनों की अनुक्ति के तीन भेद मिल कर कुल चार भेद हुए । इनमें सादृश्य कहीं तो शब्द द्वारा, कहीं अर्थ द्वारा और कहीं आपेक्ष से जाना जाता है अतः बारह भेद हुए । ये बारह भेद श्लेष वा श्लेषाभाव के कारण चौवीस भेद हो जाते है । ये चौवीस भेद उपमेय की उपमान से अधिकता के कारण होते हैं । इसी प्रकार उपमान से उपमेय की न्यूनता के चौवीस भेद होते हैं । इस प्रकार कुल अड़तालीस भेद होते हैं ॥ ५९ ॥

सहोक्ति का स्वरूप यह है—मनोहररूप से जहां दो पदार्थों का सहभाव ( साथ ) बतलाया जावै वहाँ सहोक्ति होती है । 'सहयुक्तेऽप्रधाने' इस पाणिनीय सूत्र से 'पुत्रेण सहागतः पिता' पुत्र के साथ पिता आया इत्यादि वाक्यों में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दिगन्तमगमद्यस्य कीर्तिः प्रत्यर्थिभिः सह ॥ ६० ॥
विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते ।
विद्या हृद्यापि सावद्या विना विनयसंपदम् ॥ ६१ ॥

---

मान्तस्य विशेष्यतया प्रधानत्वं ततश्चैककालिकक्रियाद्यन्वयः, तद्वदलङ्कारस्थलेऽपि गुणप्रधानभावावच्छिन्नयोः शब्दार्थमर्यादया एकधर्मसम्बन्धो विज्ञेयः । हृद्यत्वं चालङ्कारसामान्यलक्षणप्राप्तमत्रास्त्येवेति 'पुत्रेण सहागतः पिता' इत्यत्र नालङ्कारप्रसङ्गः । उदाहरति—दिगन्तमिति । यस्य राज्ञः कीर्तिः प्रत्यर्थिभिः सह वैरिभिः सह दिगन्तमगमज्जगाम । शत्रवो भयात्पलायिता दिगन्तं यावत् । तेनास्य कीर्तिरपि 'अयमीदृशो बली' इत्यादिका दिगन्तं प्राप्तेति भावः । अत्र कीर्तिशब्दस्य प्रथमान्ततया प्राधान्यम्, तृतीयान्ततया प्रत्यर्थिपदस्य गुणत्वम् । एतयोरेककालिकदिगन्तगमनरूपक्रियान्वयितया सहभावात् सहोक्तिः । सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षायां सहोक्तिर्भवति ॥ ६० ॥

विनोक्तिमाह—विनोक्तिरिति । चेद् यदि किंचिद्विनान्तरेण प्रस्तुतं प्रकृतं हीनं न्यूनमुच्यते तदा विनोक्तिः । विनाभावस्य ( विनाशब्दार्थस्य ) उक्तिर्विनोक्तिः । अत्रापि विनाशब्दार्थ एव विवक्षितस्तेन नञ्निर्विअन्तरेणऋतेरहितविकलेत्यादिप्रयोगेऽप्ययमेवालङ्कारो भवति । अत एव 'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्' इत्यादौ विनोक्तिरेव । विद्येत्युदाहरणम्—हृद्यापि मनोहरापि सा विद्या विनयसम्पद विनय विना । अवद्या निन्द्या । 'विद्या ददाति विनयम्

---

जहां तृतीया होती है वहां यह अलंकार होता है । किन्तु जहां सह अर्थ के शब्द का प्रयोग चमत्कार से पूर्ण हो वहाँ ही सहोक्ति होती है । अतएव उक्त वाक्य ( पुत्रेण सहागतः पिता ) में चमत्कार न होने से ही यह अलङ्कार नहीं है । 'दिगन्तम्०' इसका उदाहरण है । राजा की कीर्ति शत्रुओं के साथ चारों दिशाओं के अन्त तक पहुँच गई । अर्थात् शत्रुओं के दिगन्त तक भाग जाने से राजा की कीर्ति भी व्याप्त हो गई । यहाँ शत्रु और कीर्ति का साथ २ दिगन्त-गमन के वर्णन से सहोक्ति अलङ्कार होता है ॥ ६० ॥

विनोक्ति का लक्षण यह है—जहाँ वर्णनीय पदार्थ में किसी वस्तु के विना न्यूनता की प्रतीति होवे वहां विनोक्ति अलङ्कार होता है । इस अलंकार में विनार्थक शब्द की भी सत्ता होती है । अतएव 'जिसने चन्द्रबिम्ब नहीं देखा उस कुमुदिनी का जन्म व्यर्थ ही गया' इस स्थान पर विनाशब्द के न रहने पर भी विनोक्ति है । 'विद्या हृद्या' यह उदाहरण है । सुन्दर भी विद्या विनय के विना

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ ६२ ॥

इत्युक्तत्वात् । अत्र वर्णनीयाया विद्याया विनयं विना हीनत्वप्रतिपादनाद् विनोक्तिः । इयं क्वचिद्विनाशब्देन शोभनत्वप्रतिपादनेऽपि भवति । यथा 'विना खलैर्विभात्येषा राजेन्द्र भवतः सभा' इति कुवलयानन्दे ॥ ६१ ॥

समासोक्तिं निरूपयति—समासोक्तिरिति । चेद् यदि प्रस्तुते प्रकृते । अप्रस्तुतस्याप्रकृतस्य परिस्फूर्तिः प्रतीतिस्तदा समासोक्तिरलङ्कारो भवति । समासेन संक्षेपेणोक्तिरित्यन्वर्थेयं संज्ञा । प्रस्तुतवृत्तान्ते यत्र कार्यसाम्येन, लिङ्गसाम्येन, विशेषणसाम्येनाप्रस्तुतव्यवहारसमारोपः क्रियते तत्र समासोक्तिः । उदाहरति—अयमिति । रक्तो रक्तवर्णः अयमसौ । चन्द्रमाः शशी । ऐन्द्रीमुखं प्राचीमुखं चुम्बति स्पृशति । उदेतीति भावः । इति त्वं पश्य विलोकय । अत्र चन्द्रगतपुंस्त्वेन, ऐन्द्रीगतस्त्रीत्वेन रक्तत्वकामुकत्वरूपश्लिष्टविशेषणमहिम्नाऽप्रस्तुतनायकवृत्तान्तः प्रतीयते । कश्चिन्नायकोऽनुरक्तः सन् परकामिनीमुखं चुम्बतीत्यप्रस्तुतव्यवहारप्रतीतिः प्रस्तुतवर्णनेन परिस्फुरतीति समासोक्तिः । अयं सारांशः—अस्मिन्नलङ्कारे हि प्रस्तुतार्थोऽभिधाख्यया वृत्त्या प्रतीयते । विशेषणकार्यलिङ्गादिसाम्येन चाप्रस्तुतवृत्तान्तोऽपि व्यञ्जनया बो-

---

निन्दित ही है । यहाँ विद्या में विनय के विना न्यूनता बतलाने से विनोक्ति अलङ्कार है । विना शब्द से सुन्दरता वतलाने पर भी विनोक्ति होती है । जैसे कुवलयानन्द में कहा है कि हे राजन् ! दुष्टों से रहित यह आपकी सभा शोभित हो रही है । इत्यादि ॥ ६१ ॥

समासोक्ति यह है—प्रस्तुत वृत्तान्त से अप्रस्तुत वृत्त की प्रतीति होने पर यह अलंकार माना गया है । समास ( संक्षेप ) से कहना इसका यौगिक अर्थ है । जहां भावार्थ यह हुआ कि कार्य, लिङ्ग और विशेषण के साम्य से प्रस्तुत वर्णन में किसी दूसरे ( अप्रस्तुत ) का वर्णन मालूम पड़े वहां यह अलङ्कार होता है । 'अयम्०' इत्यादि श्लोक इसका उदाहरण है । यह रक्तवर्ण ( लाल ) चन्द्रमा पूर्व दिशा के मुख का चुम्बन करता है अर्थात् पूर्व में उदित होता है यह तुम देखो । यहां प्रस्तुत चन्द्रोदय के वर्णन से किसी नायक-नायिका के व्यवहार की प्रतीति होती है । चन्द्र शब्द की पुंल्लिङ्गता और ऐन्द्री शब्द की स्त्रीलिङ्गता तथा रक्त शब्द के कामुक वा लालवर्णरूपी दो अर्थ इसमें कारण होते हैं । कामुक पुरुष प्रेम से पर-नायिका के मुख को चूमता है इस अप्रस्तुतव्यवहार की प्रतीति से समासोक्ति है । सारांश यह हुआ कि इस अलंकार में प्रस्तुत अर्थ की प्रतीति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ध्यते। ततश्च प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः क्रियते। अचेतनचन्द्रकर्तृकचुम्बनस्यानुपपन्नत्वात्। एवं चात्र व्यङ्ग्यार्थसत्त्वेऽपि न ध्वनित्वव्यपदेशः व्यङ्ग्यार्थस्य वाच्याङ्गत्वात्। अतोऽपराङ्गरूपं गुणीभूतव्यङ्ग्यमेवेदम्। कुवलयानन्देऽपि प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपश्चारुताहेतुरित्युक्तम्। सर्वथैव प्रस्तुतानन्वयिनोऽर्थस्य कविसंरम्भगोचरत्वायोगात्। रसगङ्गाधरे तु द्वयोरभेदांशमात्रप्रतीतिः स्वीकृता। यथोक्तम् 'मम त्वभेदांशमात्र इति स्फुट एव विशेषः। तस्मादप्रकृताभिन्नतया व्यवसितः प्रकृतव्यवहारः स्वविशेष्ये तद्विशेष्याभिन्नतयावस्थिते भासते, तत्राप्रकृतार्थ उपस्कारकतया गुण इति प्रकार एव रमणीयः' इति। रूपके हि प्रकृतस्य रूपमप्रकृतार्थ आच्छादयति। अत्र तु स प्रकृतार्थमुपस्करोति। न च श्लेषे उपमाध्वनौ चान्तर्भावः। तयोः विशेष्यस्यापि श्लिष्टत्वात्। न चात्राप्रस्तुतप्रशंसा। तत्र प्रस्तुतार्थस्य गम्यमानत्वात्। अथ समासोक्तिभेदाः—कार्यसाम्ये, लिङ्गसाम्ये, श्लिष्टविशेषणसाम्ये, अश्लिष्टविशेषणसाम्ये, च समासोक्तिरिति चतुर्धा। उपमागर्भा, रूपकगर्भा, उभयगर्भेति औपम्ये त्रयो भेदाः। लौकिके लौकिकव्यवहारस्यारोपः, लौकिके शास्त्रीयव्यवहार-

अभिधा नामकी शक्ति से होती है। विशेषण, कार्य वा लिङ्गकी समानता के कारण अप्रस्तुत वृत्तान्त की प्रतीति व्यञ्जना शक्ति द्वारा हो जाती है। अतः प्रस्तुत अर्थ में अप्रस्तुत अर्थ का आरोप इसलिये किया जाता है कि चन्द्रमा ने चुम्बन किया यह प्रस्तुत अर्थ ठीक-ठीक समझ में नहीं आता। इस प्रकार इस अलंकार में व्यञ्जनाबोध्य अर्थ होने पर भी ध्वनि नहीं मानी जाती। क्योंकि व्यङ्ग्यार्थ वाच्य अर्थ का सहायक बनने में अपनी प्रधानता को खो बैठता है और अपराङ्गगुणीभूतव्यङ्ग्य कहलाता है। कुवलयानन्द में भी लिखा है कि प्रस्तुत में अप्रस्तुत-व्यवहार के आरोप से चारुता आ जाती है। क्योंकि बिल्कुल असम्बद्ध अर्थ कवि के काव्य से नहीं जाना जाता है। रसगङ्गाधर में लिखा है कि प्रकृत और अप्रकृत अर्थ अभिन्न रूप से रहते हैं। उनमें प्रकृत अर्थ प्रधान और अप्रकृत अर्थ गौण माना जाता है। रूपक में अप्रकृत अर्थ की प्रधानता रहती है अतः रूपक में इसका अन्तर्भाव नहीं होता। श्लेष और उपमाध्वनि में विशेष्य भी श्लिष्ट रहता है। अप्रस्तुतप्रशंसा में प्रस्तुत अर्थ की व्यञ्जना से प्रतीति होती है। अतः यह अलङ्कार भिन्न ही माना गया है। समासोक्ति के कार्यसाम्य, लिङ्गसाम्य, श्लिष्टविशेषणसाम्य तथा अश्लिष्टविशेषणसाम्य से चार भेद होते हैं। विशेषणसाम्य में उपमागर्भा, रूपकगर्भा, उभयगर्भा ये तीन भेद होते हैं। लौकिक में लौकिक व्यवहार का आरोप, लौकिक में शास्त्रीय व्यवहार का आरोप, शास्त्रीय में शास्त्रीय व्यवहार का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**खण्डश्लेषः पदानां चेदेकैकं पृथगर्थता ।**

स्यारोपः, शास्त्रीये शास्त्रीयव्यवहारस्यारोपः, शास्त्रीये लौकिकव्यवहारस्यारोपः, इति पुनश्चत्वारो भेदाः । लौकिकवस्त्वपि रसादिभेदादनेकविधम्, शास्त्रीयमपि तर्कायुर्वेदादिभेदादनेकविधमिति साहित्यदर्पणरसगङ्गाधरादिग्रन्थेषु बहुविधा समासोक्तिर्द्रष्टव्या ॥ ६२ ॥

खण्डश्लेषालङ्कारं व्याचष्टे—खण्डेति । खण्डश्लेषो हि पदश्लेषस्यान्यतरो भेदः। श्लेषसामान्यलक्षणं तु कुवलयानन्दे—

'नानार्थसंश्रयश्लेषो वर्ण्यावर्ण्योभयाश्रितः ।
सर्वदो माधवः पायात्स योऽगं गामदीधरत्' ॥ इत्युक्तम् ।

नानार्थकशब्दजन्यानेकार्थाभिधानत्वं श्लेषत्वम् । यथा सकलप्रदो माधवः पायात् । योऽगं पर्वतं गोवर्धनाख्यं गां भूमिं च दधावित्येकोऽर्थः । सर्वदा सदा, उमाधवः शिवः पायात् यो गङ्गां दधाविति द्वितीयोऽर्थः । द्विविधस्याप्यर्थस्यात्र प्रतीतिरभिधाख्यया वृत्त्यैव भवति । स्तोतव्यत्वेन द्वयोः प्राकरणिकत्वात् । स च श्लेषो द्विविधः ·शब्दगतोऽर्थगतश्चेति । तत्र शब्दगतो वर्णपदलिङ्गभाषाविभक्तिप्रकृतिप्रत्ययवचनभेदादष्टधा । सभङ्गः, अभङ्गः, उभयरूपश्चेति पुनः स त्रिविधः। त्रिविधोऽप्ययं प्रकृतानेकविषयः, अप्रकृतानेकविषयः, प्रकृताप्रकृतानेकविषयश्चेति त्रिविधः । अत्र प्रथमे द्वितीये च भेदे विशेष्यस्य श्लिष्टतायां कामचारः। तृतीयभेदे तु विशेषण-

---

आरोप और शास्त्रीय में लौकिकव्यवहार का आरोप ये फिर चार भेद होते हैं । लौकिक और शास्त्रीय व्यवहार के अनेक भेद होते हैं । अतः समासोक्ति के अनेक भेद साहित्यदर्पण, रसगङ्गाधरादिक ग्रन्थों में लिखे गये हैं ॥ ६१ ॥

खण्डश्लेषका लक्षण यह है—खण्डश्लेष श्लेष अलंकार का एक भेद माना गया है । श्लेष का लक्षण कुवलयानन्द में यह बतलाया है—अनेक अर्थ के बोधक पदों से जहां दो या तीन तरह के अर्थ का बोध हो वहां श्लेष होता है । 'सर्वदो माधवः' इसका उदाहरण है । सब प्रकार के सुखों का दाता माधव (विष्णु) तुम्हारी रक्षा करें कि जिसने गोवर्धन पर्वत तथा पृथ्वी को (कूर्मावतार के समय में) धारण किया था । दूसरा अर्थ यह है कि सदा उमाधव (शिव) तुम्हारी रक्षा करें कि जिसने गंगा को धारण किया था । यहाँ एक वाक्य के दो अर्थ होने से श्लेषालङ्कार है । यहाँ दोनों अर्थों का बोध अभिधा शक्ति से ही होता है । श्लेष के दो भेद हैं । एक शब्दश्लेष और दूसरा अर्थश्लेष वर्ण, पद, लिङ्ग, भाषा, विभक्ति, प्रकृति, प्रत्यय और वचनके भेदसे शब्दश्लेष आठ प्रकार का है । सभङ्ग, अभङ्ग और सभङ्गाभङ्ग भेदसे वे आठों भेद तीन तीन प्रकार के हैं । पुनः प्रकृतानेक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्छलद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६३ ॥

वाचकस्यैव पदस्य श्लिष्टत्वं न विशेष्यवाचकपदस्यापि। तथात्वे तु शब्दशक्तिमूलध्वनेरुच्छेद एव स्यात्। श्लेपभेदानामुदाहरणानि ग्रन्थान्तरे दृश्यानि। पादश्लेषस्य खण्डश्लेषो भङ्गश्लेषश्चेति द्वौ भेदौ। तयोः खण्डश्लेपलक्षणमिदम्—चेद् यदि। एकैकं प्रति प्रत्येकवाक्यार्थं प्रति। पदानां समस्तपदावयवानां शब्दानां पृथगर्थता भिन्नार्थकता तर्हि खण्डश्लेषः। पदसम्बन्धिखण्डे श्लेषस्य वर्त्तमानत्वेनास्य खण्डश्लेष इत्याख्या। समस्तपदावयवस्यैकरूपस्यैवार्थभेदेन वाक्यार्थद्वयप्रतिपादकत्वं खण्डश्लेष इति रमाव्याख्याकृदाह। उदाहरति—उच्छलदिति। उच्छलन्ति निर्गच्छन्ति भूरीणि बहूनि कीलालानि रुधिराणि जलानि च यस्मिन्स तथोक्तः। वाहिनीपतिः सेनापतिः सरित्पतिश्च। शुशुभे रेजे। उच्छलद्भूरिकीलाल इति समस्तपदे कीलालरूपपदखण्डस्य जलरुधिरार्थद्वयप्रतिपादकतया, वाहिनीपतिसमस्तपदे वाहिनीरूपपदखण्डस्य सेनानदीरूपार्थद्वयप्रतिपादकतया च पदानां पृथगर्थतात्रेति खण्डश्लेषः। श्लेषालङ्कारविषये तावदयं विचारः प्रस्तुतो ग्रन्थान्तरेषु। तथा हि—शब्दयोर्जतुकाष्ठन्यायेन सभङ्गः श्लेषः शब्दगतः। शब्दाभेदादेकवृन्तगतफलद्वयन्या-

---

विषय, अप्रकृतानेकविषय और प्रकृताप्रकृतानेकविषय ये तीन भेद और होते हैं। इन तीनों भेदों में से प्रथम और द्वितीय में विशेष्य श्लिष्ट हो या न हो यह अपनी इच्छापर निर्भर है। तृतीय भेद में विशेष्यश्लिष्ट ( अनेक अर्थवाला ) नहीं होता है। क्योंकि विशेष्य को श्लिष्ट बनाकर श्लेष मानने से शब्दशक्तिमूलक ध्वनि को मौका नहीं मिलता। इन भेदों का उदाहरण अन्यत्र देखना चाहिये। इस ग्रन्थ के मत से खण्डश्लेष और भङ्गश्लेष ये दो भेद पदश्लेष के हैं। इनमें खण्डश्लेष यह है-जहां समास वाले पद के किसी एक पदखण्ड का अनेक अर्थ किया जावे वहां खण्डश्लेष होता है। पदखण्ड में रहने से इसका नाम खण्डश्लेप है। 'उच्छलत्०' इत्यादि श्लोक इसका उदाहरण है। रुधिर के प्रवाह से सेनापति और जल के प्रवाह से समुद्र शोभित हुआ। यह 'उच्छलद्भूरिकीलालः' इस पद के कीलालरूप पदखण्ड से रुधिर व जलरूप दो अर्थ की तथा 'वाहिनीपतिः' पद के वाहिनीरूप पदखण्ड से सेना और नदी रूप दो अर्थ की प्रतीति होती है अतः खण्डश्लेष है। श्लेष अलंकार के विषय में प्राचीन ग्रन्थ साहित्यदर्पणादि में निम्नलिखित विचार प्राप्त होता है। जैसे लाक्षा और काष्ठ आपस में मिलने पर एक से प्रतीत होते हैं और भिन्न करने पर दो दीख पड़ते हैं, वैसे ही शब्दों के भङ्ग होने पर सभङ्गश्लेष होता है और वह शब्दगत है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येनाभङ्गश्लेषोऽर्थनिष्ठः । सभङ्गाभङ्गरूप उभयगत इति प्राञ्चः । इदं चान्येषामनभिमतम् । शब्दपरिवृत्त्यसहः शाब्दः । शब्दपरिवृत्तिसहश्चार्थ इति नियमात् । ननु-श्लेषालङ्कारस्य विविक्तो विषयो नोपलभ्यते । यथा कुत्रापि समासोक्तिः, श्लिष्टरूपकम्, विरोधाभासः, पुनरुक्तवदाभासः, तुल्ययोगिता, दीपकम्, उपमा चेति । एतेषु समासोक्ति–श्लिष्टरूपक–विरोधाभास–पुनरुक्तवदाभासादिषु श्लेषस्य प्राधान्यं न सङ्गच्छते । तेन तुल्ययोगितादीपकोपमादिषु श्लेषप्राधान्यं स्वीकार्यम् । तुल्ययोगितादीनां श्लेषविविक्तविषयस्यापि सम्भवात् । श्लेषस्य चोक्तालङ्कारसङ्कीर्णत्वाभावात् । उच्यते । श्लेषस्याप्यसङ्कीर्णविषयः 'सर्वदो माधवः पायात्स योऽगं गामदीधरत्' इत्यादिषूपलभ्यते । तेनोक्तालङ्कारेषूक्तानामलङ्काराणामेव प्राधान्यम् । किंचार्थानुसन्धानशून्यानामनुप्रासादीनां शब्दालङ्काराणां नाङ्गाङ्गिभावः। अत्र श्लेषादौ

---

अभङ्गश्लेष अर्थगत होता है । एक शाखा में जिस तरह दो फल लगे रहते हैं वैसे ही एक पद के दो अर्थ होने पर अभङ्गश्लेष होता है । यह उद्भटभट्ट का मत माननीय नहीं है । शब्दगत और अर्थगत श्लेष की व्यवस्था यह है कि पर्याय शब्द के पलटने पर जहां श्लेष नहीं रहे वह शब्दश्लेष है । पर्याय शब्द के परिवर्तन करने पर भी श्लेष की सत्ता हो तो वह अर्थश्लेष है । एक शङ्का यह है कि श्लेष के स्थल में और और ( दूसरे ) अलङ्कार रहते हैं । जैसे—समासोक्ति, श्लिष्टरूपक, विरोधाभास, पुनरुक्तवदाभास, तुल्ययोगिता, दीपक, उपमा आदि अलङ्कार श्लेष के स्थान में भी रहते हैं । ऐसे स्थल में किस अलङ्कार को मुख्य माना जावे ? यह विचार करने पर उचित यह जाना जाता है कि प्रथम चार अलंकारों में तो श्लेष की प्रधानता हो ही नहीं सकती । अतः अवशिष्ट तुल्ययोगिता, दीपक, उपमा आदि स्थलों में श्लेष की प्रधानता होनी चाहिए । क्योंकि श्लेष को तो प्रधान होने का और कहीं अवसर ही प्राप्त नहीं होता, और उपमादिक को अन्यत्र प्रधानता का अवसर प्राप्त हो जाता है । इसका उत्तर यह है कि श्लेष को भी अन्यत्र 'सर्वदो माधवः' इत्यादि स्थल में प्रधानता प्राप्त होती है । इस स्थल में श्लेष के अलावा और कोई अलंकार नहीं है । अतः उक्त अलंकारों के उदाहरणों में यदि श्लेष भी हो तो वह गौणरूप से माना जा सकता है । यद्यपि अनुप्रासादिक शब्दालंकारों की अर्थालंकारों के साथ संकीर्णता नहीं मानी जाती है । तथापि श्लेष में तो शब्दालंकारता होने पर भी संकीर्णता मानी जाती है । क्योंकि श्लेष में अर्थ का ध्यान अवश्य ही पड़ता है । जहां अर्थ का ध्यान

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भङ्गश्लेषः पदस्तोमस्यैव चेत्पृथगर्थता ।
अजरामरता कस्य नायोध्येव पुरी प्रिया ॥ ६४ ॥
अर्थश्लेषोऽर्थमात्रस्य यद्यनेकार्थसंश्रयः ।

तु शब्दनिष्ठत्वेऽप्यस्त्यङ्गाङ्गिभाव इत्यवधेयम् । कुवलयानन्दकारः प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिं न स्वीकुरुते । किन्तु तत्र गूढश्लेष इति वदति । तन्न रम्यम् । शब्दशक्तिमूलकध्वनेरुच्छेदापत्तेः । तत्र हि प्राकरणिकेनार्थेनाप्रकृतार्थे नियन्त्रिते पुनस्तस्य प्रतीतिर्व्यञ्जनया भवति। तत्राप्रस्तुतप्रतीतिरसम्बद्धा मा भवत्विति द्वयोरर्थयोरुपमानोपमेयभावः कल्प्यते । एष एवोपमाध्वनिरित्यवदातम् ॥ ६३ ॥

पदश्लेषस्य द्वितीयं भेदमाह—भङ्गेति । चेद् यदि । पदस्तोमस्यैव पदसमुदायस्यैव । पृथगर्थता भिन्नार्थकता तदाभङ्गश्लेषः । उदाहरति—अजरेति । अयोध्यापुरीव । अजरश्चामरश्चेत्यजरामरौ तयोर्भावोऽजरामरता । अयोध्यापक्षे–अजश्च रघुपुत्रश्च रामश्च दाशरथिश्चेति तयो रतानुरक्ता। कस्य पुरुषस्य प्रिया मनोरमा नास्ति। अपि तु सर्वेषां प्रियास्ति । अत्र 'अजरामरता' इति पदस्तोमस्यैव भिन्नार्थकत्वाद् भङ्गश्लेषः । भङ्गश्लेषो जतुकाष्ठन्यायेन भवति। यथा काष्ठजतुनी मिलिते एकरूपे दृश्येते । भेदे सति च पृथक्त्वमापद्येते तथैव मिलिते पदे एकरूपे स्तः, भेदे सति पृथक् पृथग् भवतः ॥ ६४ ॥

अर्थश्लेषं व्याचष्टे—अर्थेति । यदि चेत् । अर्थमात्रस्य वाच्यार्थमात्रस्य । अनेका-

नहीं हो, वैसे शब्दालंकारों की अर्थालंकार के साथ संकीर्णता नहीं होती । कुवलयानन्दकार प्रकृताप्रकृतश्लेप के उदाहरण में शब्दशक्ति मूलध्वनि नहीं मानते, किन्तु वहां गूढश्लेष मानते हैं यह अनुचित है। क्योंकि इस ध्वनि को कहीं अन्यत्र अवकाश ही नहीं मिलेगा और इसका उच्छेद हो जावेगा अतः ऐसे स्थल में प्रधान अर्थ की प्रतीति अभिधा से और अप्रधान अर्थ की प्रतीति व्यञ्जना से होती है । अप्रस्तुत अर्थ में अप्रासङ्गिकता न आवे इसलिए इन दोनों अर्थों का उपमानोपमेय भाव मानकर, यहां उपमाध्वनि मानी जाती है ॥ ६३ ॥

पदश्लेष के द्वितीय भेद भङ्गश्लेष का यह लक्षण है—जहाँ पदसमूह के अनेक अर्थ, होवें, वहां पदश्लेष होता है । 'अजरामरता' इत्यादि श्लोक इसका उदाहरण है—अयोध्यापुरी की तरह अजरता और अमरता किसको प्रिय नहीं है ? अर्थात् सबको प्रिय है । अयोध्यापुरी के पक्ष में 'अजरामरता' पद का अज ( रघु का पुत्र ) और रामचन्द्र में अनुरक्त यह अर्थ होता है । यहां 'अजरामरता' रूपी पदसमूह के दो अर्थ पदभङ्ग करके किये गए हैं । अतः भङ्गश्लेष है ॥ ६४ ॥

अब अर्थश्लेष का निरूपण किया जाता है—जहां केवल अर्थ का ही अनेक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कुटिलाः श्यामला दीर्घाः कटाक्षाः कुन्तलाश्च ते ॥ ६५ ॥
अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा ।

र्थानामनेकपदार्थानां संश्रयोऽन्वयः स्यात्तदार्थश्लेषो ज्ञेयः । पर्यायशब्दपरिवर्तनेऽपि यदि अनेकार्थकता न विनश्येत्तदार्थश्लेषः ? शब्दश्लेषे तु पर्यायशब्दपरिवर्तनं न जायते । शब्दपरिवृत्तिसहानेकार्थकपदवत्त्वमर्थश्लेषत्वम् । उदाहरति—कुटिलेति । हे प्रिये ! ते तव कटाक्षाः कुन्तलाश्च केशाश्च । कुटिलाः श्यामला दीर्घाश्च सन्ति । अत्र कुटिलत्वादिपदार्थाः कटाक्षपक्षे कुन्तलपक्षे च विभिन्ना इति विशेष्ययोर्भिन्नपदोपात्तत्वेऽपि विशेषणार्थानामनेकपदार्थकसंश्रयादर्थश्लेषः । अत्र कुटिलपदस्थाने वक्रादिपदोपादानेऽपि न श्लेषत्वक्षतिरित्यर्थश्लेषः । कटाक्षानां कौटिल्याद्यन्यत्केशानां चान्यदित्यर्थमात्रस्यानेकार्थकता विज्ञेया । उदाहरणान्तरं चेदम्—

'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च' ॥
अत्र स्तोकपदस्थाने स्वल्पपदोपादानेऽपि न ।
श्लेषत्व खण्डनमित्यर्थश्लेषो विज्ञेयः ॥

अप्रस्तुतप्रशंसां निरूपयति—अप्रस्तुतेति । सा अप्रस्तुतप्रशंसाख्यालङ्कृतिर्यत्रैप:

पदार्थों ( वस्तुओं ) के साथ सम्बन्ध बतलाया जावे वहां अर्थश्लेष होता है । भावार्थ यह हुआ कि पर्यायवाचक ( समान अर्थ वाले ) शब्दों के परिवर्तन में भी जहां अर्थभेद बना रहे वहां अर्थश्लेष माना जाता है । शब्दश्लेष में तो शब्दों का परिवर्तन नहीं होता । 'कुटिलाः' यह अर्थश्लेष का उदाहरण है । हे प्रिये ! तेरे कटाक्ष और केश ये दोनों ही कुटिल श्याम और लम्बे हैं । कटाक्ष के कुटिलता आदि धर्म और केशों के कुटिलता आदि धर्म भिन्न प्रकार के होते हैं । अर्थात् कटाक्षों की कुटिलता और ही प्रकार की होती है । और केशों की कुटिलता दूसरी ही तरह की होती है । यहां कुटिलता अर्थ का कटाक्ष और केशरूप अनेक पदार्थ के साथ सम्बन्ध होने से अर्थश्लेष होता है यहां कुटिलादि पद के स्थान में वक्रादि पद के रखने पर भी श्लेष का विनाश नहीं होता अतः अर्थश्लेष है । 'स्तोकेन' श्लोक इसका दूसरा उदाहरण है—तुला ( तराजू ) और दुर्जन पुरुष इन दोनों की प्रकृति समान होती है । वे दोनों थोड़े कार्य से ही ऊंचे वा नीचे हो जाते हैं । यहां 'स्तोक' पद के स्थान में 'स्वल्प' पद रख देने पर भी श्लेष नहीं मिटता । तुला और खल इन दोनों पक्षों में स्तोक ( थोड़ा ) शब्द का भिन्न २ अर्थ है ॥ ६५ ॥

अप्रस्तुत प्रशंसा का स्वरूप यह है—अप्रासङ्गिक वर्णन से जहां प्रासङ्गिक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कार्यकारणसामान्यविशेषादेरसौ मता ॥ ६६ ॥

प्रस्तुतवृत्तस्यानुगामिनी स्यात्। अप्रस्तुतवृत्तान्तवर्णनं यत्र प्रस्तुतवृत्तान्तप्रतीतिपर्यवसायि तत्राप्रस्तुतप्रशंसेति भावः। अप्रस्तुतस्य प्रशंसा वर्णनमप्रस्तुतप्रशंसा। अत्राप्रस्तुतप्रतीतिरभिधया, व्यञ्जनया च प्रस्तुतप्रतीतिः। अप्रस्तुतवर्णनेन प्रस्तुतावगमश्च प्रस्तुताप्रस्तुतयोः सम्बन्धे सत्येव भवतीति सम्बन्धमाह—कार्येति। कार्यं च कारणं च सामान्यं च विशेषश्चेति कार्यकारणसामान्यविशेषाः। ते आदौ यस्य स तथोक्तात्सम्बन्धात्। असावप्रस्तुतप्रशंसा पञ्चधा मता। कार्यप्रतीतिरूपा, कारणप्रतीतिरूपा, सामान्यप्रतीतिरूपा, विशेषप्रतीतिरूपा, आदिशब्दाच्च सारूप्यनिबन्धनेति पञ्च भेदाः। कुवलयानन्दे तु सहोत्पत्त्यादिकं सम्बन्धान्तरमपि स्वीकृतम्। उदाहरणं तु तत्रैव द्रष्टव्यम्। अत्र प्रस्तुतस्य व्यङ्ग्यत्वेऽपि न ध्वनिः। वाच्योपस्कारकत्वात्। इतोऽग्रे कुवलयानन्दे प्रस्तुताङ्कुरालङ्कारो लक्षितः। यथा—

'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः।
किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकेद्धया॥'

इह हि प्रियतमेन साकमुद्याने विहरन्ती काचिद् भृङ्गं प्रत्येवाहेति वाच्यार्थस्यापि प्रस्तुतत्वम्। अनेन प्रस्तुतेन वाच्यार्थेन कुलवध्वा; सौन्दर्यादिगुणशालिन्याः सत्त्वेऽपि वेश्यायाःसमागमनेन किमित्युपालम्भरूपप्रस्तुतार्थप्रतीतिरिति प्रस्तुताङ्कुरा-

---

वृत्तका बोध कराया जावे, वहां अप्रस्तुतप्रशंसा होती है। इस अलङ्कार में अप्रस्तुत अर्थ की प्रतीति अभिधानामक शक्ति से और प्रस्तुत अर्थ की प्रतीति व्यञ्जना शक्ति से होती है। कार्य, कारण, सामान्य, विशेष और सारूप्य सम्बन्ध के द्वारा अप्रस्तुत से प्रस्तुत अर्थ की प्रतीति होती है। प्रस्तुत अर्थ की प्रतीति व्यञ्जना से होती है तथापि वह व्यङ्ग्य नहीं कहलाता। वह तो वाच्य अर्थ (अप्रस्तुत) का पोषक बनकर अपनी प्रधानता खो बैठता है। कुवलयानन्द में प्रस्तुताङ्कुर अलङ्कार भी माना है। लिखा है कि जहां प्रस्तुत अर्थ से प्रस्तुत अर्थ की प्रतीति होवे वह प्रस्तुताङ्कुर होता है। उदाहरण इसका यह है—कोई नायिका उद्यान (बगीचा) में विहार करती हुई भृंग से कहती है कि हे भ्रमर! मालती पुष्प को छोड़ कर तुम कंटकपूर्ण केतकी के पास क्यों जाते हो? अर्थात् तुम केतकी के पास मत जाओ। यहां इस प्रस्तुत वृत्त से 'कुलीन वधू के रहने पर भी हे नायक! तुम वेश्यागमन क्यों करते हो' इस प्रस्तुत अर्थ की प्रतीति होती है अतः प्रस्तुताङ्कुर अलङ्कार है। भाव यह हुआ कि नायक और भृङ्ग इन दोनों की उद्यान में उपस्थिति होने से दोनों ही अर्थ प्रस्तुत हैं। इस सम्बन्ध में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कमलैः कमलावासैः किं किं नासादि सुन्दरम् ।
अप्यम्बुधेः परं पारं प्रयान्ति व्यवसायिनः ॥ ६७ ॥

लङ्कारः । अत्र रसगङ्गाधरकारा आहुः—अत्राप्यप्रस्तुतप्रशंसैव । किंचिदुक्तिवैचित्र्येण तत्कल्पनेऽलंकारानन्त्यात् । किं चात्र भृङ्गवृत्तस्याप्रस्तुतत्वमेव । मुख्यतात्पर्यविषयीभूतार्थातिरिक्तत्वात् । भृङ्गादेः सत्तामात्रेण प्रकृतत्वेऽपि नायकाद्युपालम्भे एव तात्पर्यादिति ॥ ६६ ॥

उदाहरति—कमलैरिति । कमलावासैर्लक्ष्मीस्थानैः शोभास्थानैर्वा कमलैः पद्मैः किं किं सुन्दरं रम्यं नासादि न प्राप्तम् । अपि तु सर्वं सुन्दरं वस्तु प्राप्तमित्यर्थः । अत्राप्रस्तुतकमलकथावर्णनेन प्रस्तुतधनिकविशेषप्रतीतिरिति सामान्येन विशेषप्रतीतिरूपा प्रस्तुतप्रशंसा । सामान्यप्रतीतिरूपामुदाहरति—अपीति । व्यवसायिन उद्योगिनः । अम्बुधेः सागरस्यापि परं पारं परतीरं द्वीपान्तरमिति यावत् । प्रयान्ति गच्छन्ति । अत्राम्बुधिपारगमनकथानकेनाप्रस्तुतविशेषेण व्यवसायिनां न किमपि दुष्करमिति प्रस्तुतसामान्यप्रतीतिराक्षिप्यत इति सामान्यप्रतीतिरूपाप्रस्तुतप्रशंसा । पञ्चधा प्रस्तुतप्रशंसोक्तैव । किन्तु यत्र तुल्यातुल्यप्रतीतिस्तत्र विशेषणश्लिष्टा, विशेष्यश्लिष्टा, सादृश्यमूला, वैधर्म्यमूलेति चत्वारो भेदाः । पुनरियमप्रस्तुतप्रशंसा

---

रसगङ्गाधर में लिखा है कि इस प्रकार के थोड़े ही वैचित्र्य में यदि अलङ्कार मानना शुरू किया जावे तो इनकी संख्या अनन्त हो सकती है । अतः यह अलङ्कार अप्रस्तुतप्रशंसा के ही अन्तर्गत है । कवि का तात्पर्य नायक के प्रति उपालम्भ प्रगट करने में है, भृङ्ग के वर्णन में नहीं । अतः भृङ्ग का वर्णन यहां प्रस्तुत भी नहीं हो सकता ॥ ६६ ॥

अप्रस्तुतप्रशंसा का उदाहरण देखिए—कमलों ने लक्ष्मी के निवासस्थान होने के कारण कौनसा सौन्दर्य प्राप्त नहीं किया, किन्तु सब कुछ प्राप्त कर लिया । इस सामान्य रीति के वर्णन से किसी प्रस्तुत धनिक विशेष की कथा का बोध होता है कि लक्ष्मी होने के कारण धनिकों ने संसार का सब कुछ प्राप्त कर लिया । अतः यहां सामान्य से विशेष अर्थ के बोध में अप्रस्तुतप्रशंसा है । विशेष से सामान्य की प्रतीति का उदाहरण यह है—उद्योगी पुरुष समुद्र के भी पार पहुँच जाते हैं । यहां समुद्रगमनरूप विशेष वृत्त के वर्णन से 'उद्योगी पुरुष के लिए कोई कार्य कठिन नहीं है', इस सामान्य अर्थ की प्रतीति होने से अप्रस्तुतप्रशंसा है । पांच प्रकार की अप्रस्तुतप्रशंसा में सादृश्य सम्बन्धवाली अप्रस्तुतप्रशंसा के विशेषणश्लिष्टा, विशेष्यश्लिष्टा, सादृश्यमूला, वैधर्म्यमूला ये चार भेद

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा ।
हनूमानब्धिमतरद् दुष्करं किं महात्मनाम् ॥ ६८ ॥

वाच्यार्थस्याप्रस्तुतस्य सम्भवासम्भवोभयरूपतया त्रिविधेति दर्पणे विस्तरः । अत्र तु पूर्वभागे श्लेषेण द्वितीयभागे सादृश्यमात्रेण प्रस्तुतप्रतीतिरिति विज्ञेयम् ॥६७॥

अर्थान्तरन्यासं प्रदर्शयति—भवेदिति । अनुषक्तं सम्बद्धं च तदर्थान्तरं चेति अनुषक्तार्थान्तरं तस्याभिधा कथनं यत्र स्यात्तत्रार्थान्तरन्यासः । अन्योऽर्थोऽर्थान्तरं तस्य न्यासो न्यसनमर्थान्तरन्यासः । मुख्यार्थसम्बद्धमर्थान्तरं यत्र स्यात्तत्रायमलङ्कारः । न चात्राप्रस्तुतप्रशंसासन्देहः । द्वयोरप्यर्थयोर्वाच्यत्वात् । सामान्यं विशेषो वा सामान्येन विशेषेण वा समर्थ्यते तत्र तत्रार्थान्तरन्यास इति दर्पणादावुक्तम् । ननु काव्यलिङ्गेऽपि समर्थनं भवतीति कथमलङ्कारान्तरस्वीकार इति चेन्न । समर्थ्यसमर्थकयोः सामान्यविशेषसम्बन्धेऽर्थान्तरन्यासस्तदितरसम्बन्धे च काव्यलिङ्गमिति भेदात् । केचित्तु 'समर्थनापेक्षसमर्थने काव्यलिङ्गम्, तन्निरपेक्षसमर्थनेऽर्थान्तरन्यासः' इति विभागमाहुः यत्र सामान्यविशेषरूपार्थान्तरेण पूर्वार्थसमर्थनं तत्रायमलङ्कार इति भावः । उदाहरति—हनूमानिति । हनूमान् अञ्जनासूनुः । अब्धिं सागरमतरत् उल्लङ्घे । यतो महात्मनां महापुरुषाणां किं दुष्करं दुर्लभं भवति । अपि तु किमपि दुष्करं नेत्यर्थः । अत्र सामान्यविशेषभावसम्बद्धमर्थान्तरमभिहितमित्यर्थान्तरन्यासः महात्मसम्बन्धिसर्वकार्यसुकरताप्रतिपादनेन सामान्येन हनूमत्कर्तृकसमुद्रतरणरूपविशेषार्थस्य समर्थनात् । एषोऽष्टधा साहित्यदर्पणादौ । यथा-विशेषेण सामान्यसम-

होते हैं । अप्रस्तुतप्रशंसा के सब भेद अप्रस्तुत अर्थ के सम्भव, असम्भव वा सम्भवासम्भव रूप से तीन २ प्रकार के होते हैं; यह साहित्यदर्पण में स्फुट है । यहां तो पूर्वार्ध में श्लेष से उत्तरभाग में सादृश्य से प्रस्तुत अर्थ का बोध होता है ॥ ६७ ॥

अर्थान्तरन्यास यह है—मुख्य अर्थ के समर्थन के लिए जहां दूसरे वाक्यार्थ की सत्ता हो वहां अर्थान्तरन्यास होता है । यद्यपि एक वाक्य का दूसरे वाक्य से समर्थन काव्यलिङ्ग अलङ्कार में भी पाया जाता है तथापि वहाँ सामान्य, विशेषादि कोई सम्बन्ध नहीं रहता । अतः यह अलङ्कार उससे भिन्न माना गया है । एक दूसरा कारण और भी है कि जहां समर्थन के योग्य पदार्थ का ही समर्थन हो तो यह अलङ्कार होता है अन्यथा काव्यलिङ्ग होता है । 'हनूमान्०' यह श्लोक इसका उदाहरण है । हनुमान् जी समुद्र को लांघ गये सो ठीक ही है । क्योंकि महात्माओं के लिए कौनसा कार्य कठिन है । समुद्रोलङ्घनरूप कार्य का समर्थन 'महात्माओं के लिए कोई कार्य कठिन नहीं' इस वाक्य द्वारा किया गया है अतः अर्थान्तरन्यास है । यहां सामान्य अर्थ से विशेष अर्थ का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ।
स न जिग्ये महान्तो हि दुर्धर्षाः क्ष्माधरा इव ॥ ६९ ॥

र्थनरूपः, सामान्येन विशेषसमर्थनरूपः, कारणेन कार्यसमर्थनरूपः, कार्येण कारण-समर्थनरूपः । पुनश्चायं साधर्म्यवैधर्म्याभ्यां द्विधेति अष्टावस्य भेदाः ॥ ६८ ॥

विकस्वरं निरूपयति—यस्मिन्निति । यस्मिन्वाक्ये विशेषश्च सामान्यं च विशेषश्चेति विशेषसामान्यविशेषा अर्थाः स्युः स विकस्वरोऽलङ्कारो भवति । गत्यर्थकात् विपूर्वकात् 'कस गतौ' ( भ्वा प. से. ) धातोः 'स्थेशभास०' ( ३।२।१७५ ) इति पाणिनीयसूत्रेण वरच्प्रत्यये विकसतीति विग्रहे विकस्वरशब्दः सिद्ध्यति । विशेषार्थ-समर्थनाय सामान्यार्थे विन्यस्तेऽप्यपरितोषात्पुनर्विशेषार्थन्यासे विकस्वरालङ्कारः । पुनर्विशेषार्थन्यासश्चोपमानरीत्यार्थान्तरन्यासरीत्या वा भवति । मध्यवृत्तिसामान्यस्य पूर्वोत्तराभ्यां विशेषाभ्यां स्फुटीकरणाद्विकस्वरालङ्कार इति रमाव्याख्याकृत् । उदाहरति—स न इति । परैराक्रान्तः स वीरो न जिग्ये न जितः । यतो महान्तो महात्मानः । दुर्धर्षा दुरभिभवा भवन्ति । क्ष्माधराः पर्वता इव । यथा पर्वता दुर्धर्षास्तथा महान्तोऽपीति भावः । महापुरुषत्वादेव पर्वतादिवत्स न जित इति सर्ववाक्याशयः। अत्र पूर्वविशेषार्थस्य, ततो 'महान्तो दुर्धर्षाः' इति सामान्यार्थस्य, पुनश्च 'क्ष्माधरा इव' इति विशेषार्थस्य च न्यसनाद्विकस्वरालंकारोऽस्ति ॥ ६९ ॥

समर्थन किया गया है । साहित्यदर्पण में इसके आठ भेद हैं—सामान्यसे विशेष का समर्थन, विशेषसे सामान्य का समर्थन, कारण से कार्य का, कार्य से कारण का समर्थन । ये चार भेद साधर्म्य-वैधर्म्य भेदसे आठ प्रकारके होते हैं ॥ ६८ ॥

विकस्वर का निरूपण यह है—जहां विशेष, सामान्य और विशेष अर्थ की उपस्थिति हो वहां विकस्वर अलङ्कार होता है । आशय यह कि जहां किसी एक विशेष अर्थ का समर्थन सामान्य और विशेष अर्थ द्वारा किया जावे वहां यह अलङ्कार होता है । विपूर्वक 'कस् गतौ' धातु से वरच्प्रत्यय करनेपर विकस्वर शब्द बनता है । मध्य में रहनेवाले सामान्य अर्थ का दोनों तरफ के विशेष अर्थों द्वारा विकास होने से इस अलंकार का नाम विकस्वर रखा गया है । 'स न जिग्ये' यह इसका उदाहरण है । उस वीर को कोई नहीं जीत सका सो ठीक है । क्योंकि प्रभावशाली मनुष्यों का पराजय नहीं होता । जैसे कि पर्वत का लांघना कठिन हो जाता है । यहां 'उसको कोई नहीं जीत सका' इस विशेष अर्थ का सामान्य ( महान्तो दुर्धर्षाः ) और विशेष ( क्ष्माधरा इव ) अर्थों द्वारा समर्थन करने से विकस्वर अलंकार है ॥ ६९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कार्याद्यैः प्रस्तुतैरुक्ते पर्यायोक्तिं प्रचक्षते ।
तृणान्यङ्कुरयामास विपक्षनृपसद्मसु ॥ ७० ॥

पर्यायोक्तिं व्याचष्टे—कार्याद्यैरिति । प्रस्तुतैः प्रकर्षेण वर्णितैः कार्याद्यैः प्रस्तुते कारणादौ । उक्तेऽभिहिते सति । बुधाः पर्यायोक्तिमलङ्कारं प्रचक्षते वदन्ति । पर्यायः प्रकारः । 'पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे' इति विश्वः । तेन पर्यायेण प्रकारेणोक्तिः पर्यायोक्तिः । व्यङ्ग्यार्थस्य प्रकारान्तरेण ( व्यङ्ग्यत्वबोधनभिन्नप्रकारेण ) यत्र प्रतीतिस्तत्र पर्यायोक्तिः । अत एवोक्तं 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति कुवलयानन्दे । उदाहरति—तृणानीति । हे राजन् ! भवान् विपक्षनृपाणां शत्रुनराधिपानां सद्मसु गृहेषु । तृणानि घासान् । अङ्कुरयामासोत्पादयामास । अत्र विपक्षनृपभवने तृणोत्पादककार्यवर्णनेन विपक्षनृपमारणरूपकारणं प्रतीयत इति पर्यायोक्तिः । शून्यगृहेष्वेव तृणान्युत्पद्यन्त इति भावः । नन्वत्र व्यङ्ग्यस्यैव वाच्यतेति सिद्धान्तः । स चानुपपन्नः । व्यङ्ग्यत्ववाच्यत्वयोरैक्याभावात् । तन्न । यावककुसुम्भदाडिमीजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न वाच्यत्वम् । अत एकस्यैव वाच्यत्वं व्यङ्ग्यत्वं च प्रकारभेदेनार्हति । येन प्रकारेण च व्यङ्ग्यत्वं भवति तद्भिन्नप्रकारेण व्यङ्ग्यस्यैवाभिधानमिति निष्कर्षः । यथा

पर्यायोक्ति का लक्षण यह है—प्रस्तुत कार्य द्वारा प्रस्तुत कारण की प्रतीति को पर्यायोक्ति कहते हैं । सारार्थ यह है कि जहां व्यङ्ग्य अर्थ की बोधिका रीति के अलावा किसी दूसरे प्रकार से व्यङ्ग्य अर्थ का ज्ञान कराया जावे-वहां यह अलंकार होता है । पर्याय ( प्रकार ) से कथन को पर्यायोक्त कहते हैं । 'तृणानि' यह उदाहरण है—हे राजन ! आपने शत्रु राजाओं के महलों में घास उगा दिया । अर्थात् शत्रुओं के महलों को शून्य कर दिया । यहां शत्रु के महलों में घास के वर्णनरूप कार्यसे शत्रुमारणरूप कारणकी प्रतीति होती है अतः पर्यायोक्ति अलंकार है । अब यहां यह सन्देह होता है कि इस अलंकारमें व्यङ्ग्य अर्थ ही वाच्य बनता है यह सिद्धान्त मानने योग्य है या नहीं । क्योंकि व्यङ्ग्य वाच्य का रूप नहीं धारण कर सकता । इसका उत्तर यह है कि जिस प्रकार आलता, कुसुम्भ, दाडिम, गुड़हल के पुष्पों में रक्तता (लालरंग)का वर्णन वाच्य हो सकता है, तथापि उन सबकी रक्तताका भेद तो प्रत्यक्ष से ही मालूम पड़ता है । इसी प्रकार एक ही अर्थ प्रकार भेद से वाच्य और व्यङ्ग्य के रूप को धारण कर सकता है । भाव यह हुआ कि जिस प्रकार से व्यङ्ग्यार्थ बनता है उस प्रकार से भिन्न शैली द्वारा व्यङ्ग्य अर्थ भी वाच्य हो सकता है । जैसे श्वेत वर्ण की चलती हुई गौ को देखने से मनुष्य को

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।
कस्ते विवेको नयसि स्वर्गं पातकिनोऽपि यत् ॥ ७१ ॥

'गवि शुक्ले चलति दृष्टे' 'गौः शुक्लश्चलति' इति भेदसंसर्गसम्बद्धं ज्ञानं जायते, न तु यथा दृष्टं तथा । यतोऽभेदेनासंसर्गेण दृष्टं वस्तु भेदसंसर्गाभ्यां ज्ञानविषयीक्रियते । तथैव यथा व्यङ्ग्यं न तथोच्यत इत्यभिसन्धिः । रसगङ्गाधरकारस्तु 'व्यङ्ग्योपलक्षितमुक्तं पर्यायोक्तम्' इति निष्कृष्टलक्षणमाह । अयमलङ्कारः—कारणेन कार्यप्रतीतिरूपः, कार्येण कारणप्रतीतिरूपः, साहचर्यसम्बन्धेन प्रतीतिरूपश्चेति त्रिविधः। कुवलयानन्दे पर्यायोक्तस्य लक्षणान्तरमपि निर्दिष्टम् । यथा—

'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह' ॥ इति ॥ ७० ॥

व्याजस्तुतिं निरूपयति—उक्तिरिति । निन्दा गर्हणा स्तुतिः प्रशंसा चेति ताभ्यां स्तुतिश्च निन्दा चेति स्तुतिनिन्दे तयोरुक्तिः कथनं यत्र तत्र व्याजस्तुतिरलङ्कारः । यत्र निन्दया स्तुतिर्बोध्यते तत्र व्याजेन छलेन स्तुतिरिति, स्तुत्या निन्दाज्ञाने व्याजरूपा स्तुतिरिति चार्थो बोध्यः। निन्दया स्तुतिबोधने उदाहरति—कस्त इति । हे गङ्गे ! अयं ते को विवेको विचारः। यत् पातकिनोऽपि स्वर्गं नाकं नयसि प्रापयसि । अत्र पापावपि पुरुषान् स्वर्गं नयसि त्वमिति ते विवेको नास्तीति गङ्गा-

श्वेत गौ जा रही है यह भेदविशिष्ट ज्ञान होता है। जिस रूप से गौ को देखा है, वैसा ज्ञान नहीं होता। क्योंकि देखने में तो गौ, श्वेतवर्ण, चलन क्रिया इन सबको अभिन्नरूप से देखा है और ज्ञान के समय उन तीनों का भेद रूप से ज्ञान होता है। इसी प्रकार व्यङ्ग्य अर्थ की शैली के अलावा दूसरी शैली से कथन करने पर इस अलंकार में भी व्यङ्ग्य ही वाच्य हो जाता है। कारण से, कार्य से और साहचर्य सम्बन्ध से इस अलंकार में प्रतीति होती है अतः इसके तीन भेद होते हैं। कुवलयानन्द में इस अलंकार का दूसरा लक्षण यह किया है—किसी छल से अपना कार्य बनाना भी पर्यायोक्ति होती है। उदाहरण यह है—कोई नायिका नायक और नायिका को मिलाकर कहती है कि मैं बगीचा देखने जा रही हूँ, आप यहां बैठिए। यहां पर संयोजिका नायिका बगीचा देखने के छल से दोनों को मिलाकर चली गई इसलिये पर्यायोक्त हुआ ॥ ७० ॥

व्याजस्तुति का स्वरूप देखिए—निन्दा से प्रशंसा के बोध में और प्रशंसा द्वारा निन्दा की प्रतीति में व्याजस्तुति होती है। निन्दा से स्तुति के बोध का उदाहरण 'कस्ते विवेकः' है। हे गंगे ! यह तेरा क्या विचार है कि तू पापी पुरुषों को भी स्वर्ग में पहुँचा देती है ? यहां पापियों को भी तू स्वर्ग में पहुँचा देती है


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्र संदर्शयात्मानमथवास्ति प्रियामुखम् ॥ ७२ ॥

निन्दाव्याजेन तन्माहात्म्यरूपा गङ्गास्तुतिर्बोध्यत इति व्याजस्तुतिः । यस्यैव निन्दा तस्यैव स्तुतिरिति समानविषयैवैषा व्याजस्तुतिर्भवितुमर्हतीति रसगङ्गाधरे । कुवलयानन्दे तु भिन्नविषयापि वैधर्म्येणापि स्वीकृतेति विज्ञेयम् ॥ ७१ ॥

आक्षेपालङ्कारं प्रदर्शयति—आक्षेप इति । प्रयुक्तस्योपमानत्वेन कृतप्रयोगस्य वस्तुनो विचारणाद् विवेकात् । प्रतिषेधो निषेधः । आक्षेपः अलङ्कारो भवति । 'उपमेयस्योपमानसम्बन्धिसकलप्रयोजननिष्पादनक्षमत्वादुपमानकैमर्थ्यमुपमानाधिक्षेपरूपमाक्षेपः' इति रसगङ्गाधरे । उपमेयस्योपमानकार्यनिष्पादकतयोपमानवैयर्थ्यप्रतिपादनमाक्षेप इति भावः । उदाहरति—चन्द्रेति । हे चन्द्र ! त्वमात्मानं स्वरूपं संदर्शय प्रदर्शय अथवा किं तव दर्शनेन यतः प्रियामुखं कामिनीवदनमस्त्येव । त्वया यत्कार्यं सम्पाद्यते ततोऽप्यधिकं कार्यं कामिनीवदनेन भविष्यति । अतस्तव दर्शनं व्यर्थमिति भावः । अत्रोपमानत्वेन संमतस्य चन्द्रस्य प्रियामुखास्तित्वविचारेणानर्थक्यकथनाल्लक्षणसङ्गतिः । एष चतुर्विधः साहित्यदर्पणे । वक्ष्यमाणविषये सामान्यतः सूचितस्य निषेधः, अंशोक्तावंशान्तरस्य निषेधश्च, उक्तविषये वस्तुस्वरूपस्य निषेधः, वस्तुकथनस्य निषेधश्चेति । अलङ्कारसर्वस्वेऽपि बहवो भेदा उक्ताः । ते च तत्रैव

इस निन्दा से गङ्गा के अलौकिक माहात्म्य की प्रतीति होती है, अतः व्याजस्तुति है । जिसकी निन्दा हो उसी की स्तुति जानी जाती है अतः समानविषया ही व्याजस्तुति होती है, यह रसगङ्गाधरकार मानते हैं । कुवलयानन्द में तो भिन्नविषया और वैधर्म्य से भी व्याजस्तुति मानी गई है ॥ ७१ ॥

आक्षेप का लक्षण यह है—पहिले उपमान का प्रयोग किया जावै और फिर किसी विचार से उसका निषेध हो तो आक्षेप अलङ्कार होता है । तात्पर्य यह हुआ कि उपमानसम्बन्धी कार्यों के उपमेय द्वारा निष्पन्न होने पर उपमान में व्यर्थता बतलाने को आक्षेप कहते हैं । 'चन्द्र ! संदर्शय' इसका उदाहरण है । हे चन्द्र ! तुम दर्शन दो, अथवा तुम्हारे दर्शन की आवश्यकता नहीं क्योंकि हमारे पास प्रियामुख है ही । चन्द्रदर्शन के आनन्द से अधिक आनन्द प्रियामुखदर्शन से प्राप्त हो जाता है अतः चन्द्रदर्शन व्यर्थ है । यहां पहिले तो चन्द्रदर्शन की प्रार्थना की । पुनः प्रियामुख का विचार करके उसका निषेध कर दिया । अतः आक्षेप अलङ्कार है । साहित्यदर्पण में वक्ष्यमाण वस्तु का निषेध, वक्ष्यमाण वस्तु में अंशमात्र का निषेध, उक्त विषय में वस्तुस्वरूप का निषेध, और

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गूढाक्षेपो विधौ व्यक्ते निषेधे चास्फुटे सति ।
हर सीतां सुखं, किं तु चिन्तयान्तकढौकनम् ॥ ७३ ॥
विरोधोऽनुपपत्तिश्चेद् गुणद्रव्यक्रियादिषु ।

दश्याः । कुवलयानन्दे निषेधाभासरूपो विध्याभासरूपश्चाप्याक्षेप उक्तः । यथा—
'निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥
आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ।
गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम' ॥ इति ॥ ७२ ॥

गूढाक्षेपं निरूपयति—गूढेति । कुवलयानन्दे यो हि विध्याभासरूप आक्षेप उक्तः स एवायमत्र गूढाक्षेपः । विधौ विधाने व्यक्ते स्फुटे निषेधे प्रतिषेधे चास्फुटेऽनभिव्यक्ते सति गूढाक्षेपोऽलङ्कारो भवति । विधिव्यक्तीकरणेन निषेधास्फुटत्वं गूढाक्षेपत्वम् । उदाहरति-हरेति । मारीचोक्तिरियम् । हे रावण ! त्वं सुखं यथा तथा सीतां जानकीं हर नय । किन्तु अन्तकस्य यमस्य ढौकनं गमनं चिन्तय विचारय । 'ढौकृ गतौ ।' सीताहरणेन त्वं यमलोकं प्राप्स्यसीति भावः । अत्र सीतां हरेति विधिः स्फुटः, किन्त्वित्यादिना मृत्युभयप्रदर्शनवर्णनेन निषेधश्चास्फुट इति लक्षणसङ्गतिः ॥ ७३ ॥

विरोधमाचष्टे—विरोध इति । चेद् यदि गुणश्चलत्वादिः द्रव्यं क्रिया चेत्यादयो येषु तेषु पदार्थेषु । आदिना जातिवाचकपदार्थग्रहणम् । अनुपपत्तिरेकाधिकरणतयाऽसंभवत्वप्रतिपादनम् । विरोधोऽलङ्कारः । आमुख एव प्रतीयमानो झटिति जायमानाव-

वस्तुकथन का निषेध, ये चार भेद माने हैं । कुवलयानन्द में निषेधाभास और विध्याभास भी आक्षेप के भेद माने हैं । अलङ्कारसर्वस्व में इस अलङ्कार के बहुत भेद माने हैं वे वहां हो देखने चाहिए ॥ ७२ ॥

गूढाक्षेप यह है—'कुवलयानन्द में इस अलङ्कार को विध्याभास नाम से बतलाया है ।' जहां निषेध की प्रतीति अस्फुट रूप से होवे और विधि प्रस्फुट रूप से प्रतीत हो वहां गूढाक्षेप होता है । 'हर सीताम्' यह श्लोकार्ध उदाहरण है । मारीच कहता है कि हे रावण ! तुम सीताहरण सुखसे करो, किन्तु यमराजके निकट पहुँचनेको विचार लेना अर्थात् सीताहरण से मृत्युको प्राप्त हो जाओगे । यहां सीताहरणकी प्रतीति स्फुट है और उसका निषेध अस्फुट है अतः गूढाक्षेप अलङ्कार है ॥७३॥

विरोध अलंकार यह है—गुण, द्रव्य, क्रिया और जातिवाचक पदार्थों का आपसमें विरोध होने को विरोध अलंकार कहते हैं । जहां अर्थ के सुनते ही विरोधकी प्रतीति हो और फिर विचार करने पर वह विरोध नहीं रहे तो यह अलंकार होता

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अमन्दचन्दनस्यन्दः स्वच्छन्दं दन्दहीति माम् ॥ ७४ ॥
श्लेषादिभूर्विरोधश्चेद्विरोधाभासता मता ।

विरोधबुद्धितिरस्कृतो विरोध इति रसगङ्गाधरे । उदाहरति—अमन्देति । विरहिण्या उक्तिरियम् । अमन्दश्चासौ चन्दनस्यन्दश्चेति बहलचन्दनद्रवः स्वच्छन्दं यथा तथा मां दन्दहीति—अतिशयेन दहति । इदं यङ्लुगन्तम् । अत्र चन्दनस्य दाहकताप्रतिपादनेन विरोधः । अमन्दता गुणः, चन्दनत्वं जातिः, चन्दनो द्रव्यम्, स्यन्दनं क्रिया चेति चतुर्णां दहनक्रियाविरोधे उदाहरणम् । साहित्यदर्पणे चास्य दश भेदा उक्ताः । तथा हि—जातेर्जात्यादिचतुर्भिर्विरोधे चत्वारः, गुणस्य गुणेन, क्रियया, द्रव्येण च विरोधे त्रयः, क्रियायाः क्रियया द्रव्येण च विरोधे द्वौ, द्रव्यस्य च द्रव्येण विरोध एक इति संकलने दश भेदाः । क्रिया चात्र न वैयाकरणानामिव शुद्धा भावना । नापि नैयायिकानामिव स्पन्दरूपा । किन्तु तत्तद्धातुवाच्या विशिष्टव्यापाररूपेति ज्ञेयम् । अत्रोदाहरणे चन्दनस्य दाहकताप्रतिपादनेन पूर्वं विरोधः प्रतीयते ततो विरहिण्यवस्थाज्ञानाच्च तन्निवृत्तिः । विभावनाविशेषोक्त्योः कार्यकारणभावो वर्तते, अत्र तु नेति भेदः ॥

विरोधाभासं निरूपयति—श्लेषादीति । चेद् यदि । श्लेषादिना भवतीति श्लेषादिजन्यो यदि विरोधःपरस्परमनुपपत्तिस्तदा विरोधाभासता मता । श्लेषहेतुकविरोधे विरोधाभासतेति भावः । आ ईषद्भासत इत्याभासः । विरोधश्चासावाभासश्चेति

है । 'अमन्दचन्दन' इसका उदाहरण है । कोई वियोगिनी नायिका कहती है कि यह चन्दन का लेप भी मुझे अधिक तपाता है । यहां चन्दन से ताप को सुनते ही विरोध की प्रतीति होती है और फिर विरहिणी की अवस्था के विचार से विरोध का निरासा हो जाता है । क्योंकि वियोगिनी को चन्दन; माला, चन्द्र आदि शीतल भी पदार्थ तप्त मालूम पड़ते हैं । यहाँ अमन्द शब्द गुणवाचक, चन्दनत्व जातिवाचक, चन्दन द्रव्यवाचक और स्यन्दन क्रियावाचक शब्दों का दहनरूप क्रिया से विरोध है । साहित्यदर्पण में इस अलङ्कार के दस भेद बतलाये हैं—जातिका जाति, गुण, द्रव्य और क्रिया के साथ विरोध होने पर चार भेद; गुण का गुण, क्रिया. द्रव्य से विरोध में तीन भेद; क्रिया का क्रिया और द्रव्य से विरोध में दो भेद और द्रव्य का द्रव्य से विरोध होने पर एक भेद; सब मिलाकर दस भेद होते हैं । विभावना और विशेषोक्ति अलङ्कार में कार्य-कारणभाव रहता है । यहां नहीं रहता यह परस्पर भेद जानिये ॥ ७४ ॥

विरोधाभास का स्वरूप देखिए—श्लेषादि अलङ्कार के कारण जहां विरोध की प्रतीति हो, वहां विरोधाभास अलंकार समझना चाहिए । 'विरोध' की झलक

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अप्यन्धकारिणाऽनेन जगदेतत्प्रकाश्यते ॥ ७५ ॥
असंभवोऽर्थनिष्पत्तावसंभाव्यत्ववर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयिष्यति ॥ ७६ ॥

विरोधाभासः । प्राचीनग्रन्थेषु विरोधो विरोधाभासश्चाभिन्न एव । वास्तवविरोधपरिहारमूलश्लेषादिजन्यविरोधज्ञानत्वं विरोधाभासत्वम् । उदाहरति—अपीति । अन्धं करोतीत्यन्धकारी तेनापि । अनेन शिवेन । एतदिदं जगत् । प्रकाश्यते दीप्यते । अत्र योऽन्धकारी स एव प्रकाशक इति विरोध; परिहारस्तु श्लेषमूलकः, यथा अन्धकस्यासुरस्यारिणा वैरिणा शिवेन जगदिदं प्रकाश्यत इति ॥ ७५ ॥

असम्भवं व्याचष्टे—असम्भव इति । अर्थस्य पदार्थस्य निष्पत्तावुत्पत्तौ । असम्भाव्यत्वस्यासम्भावनीयत्वस्य वर्णनं कथनमसम्भवोऽलङ्कारः । भूतार्थोत्पत्तेरसम्भवत्वप्रतिपादनमसम्भवत्वम् । उदाहरति—को वेदेति । गोपशिशुको गोपबालकः । कृष्ण इति यावत् । शैलं गोवर्धनाख्यम् । उत्पाटयिष्यत्युद्धरिष्यति । इति कः पुरुषो वेद जानाति । न कोऽपि वेदेति भावः । गोपशिशुक इत्यत्र निन्दायां स्वार्थे वा कन्प्रत्ययः । 'भगवता कृष्णेन गोवर्धनाख्यो गिरिरुद्धृत इति भूतार्थस्योत्पत्तेः गोपबालस्याल्पवयसः पर्वतोद्धरणरूपं महत् कार्यं न कोऽपि मनुते' इत्यादिनाऽसम्भाव्यत्ववर्णनादत्रासम्भवोऽलङ्कारः ॥ ७६ ॥

होना विरोधाभास का यौगिक अर्थ है । प्राचीन ग्रन्थों में विरोध और विरोधाभास दे दोनों एक ही माने गये हैं । 'अप्यन्धकारिणा' यह इसका उदाहरण है । अन्धकार को फैलाने वाले शिव इस संसार को प्रकाशित करते हैं । यहां शिव को अन्धकारकर्त्ता और प्रकाशक भी वतलाया, अतः विरोधाभास है । श्लेष अलंकार से यह विरोध नहीं रहता । 'अन्धकारिणा' पद का अन्धकासुर का वैरी यह अर्थ समझ लेने पर विरोध नहीं रहता । समझ में आ जाता है कि अन्धकासुर के वैरी भगवान् शंकर से जगत् प्रकाशित है । भगवान् शंकर में वास्तविक प्रकाशकता वतलाने के लिये श्लेष अलंकार से यह विरोध की झलकमात्र दिखलाई गई है ॥ ७५ ॥

असंभवालंकार यह है—कार्यसिद्धि हो जाने पर जहां सन्देह प्रकट किया जावे, वहां असम्भव अलंकार होता है । 'को वेद' यह श्लोकार्ध इसका उदाहरण है । यह कौन जानता था कि एक गोपाल बालक(कृष्ण) गोवर्धननामक पर्वत को उठा लेगा । कृष्ण ने पर्वत उठाया तव लोगों ने सन्देह किया कि यह गोपवालक इस कार्य को कर लेगा ऐसा हमें विश्वास नहीं था । ऐसे वर्णन से यहां असम्भव अलंकार है ॥७६॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।
पश्य लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७७ ॥

---

विभावनां लक्षयति—विभावनेति। चेद् यदि कारणं विना कार्यजन्म फलोत्पत्तिः। तदा विभावनालङ्कारो भवति। सति कारणे निमित्ते कार्यं भवतीति नियमः। अत्र तु तद्वैपरीत्यम्। विभाव्यंते विचार्यते हेतुरस्यामिति विभावना। बाहुलकादधिकरणे युच्प्रत्ययः। पश्येत्युदाहरणम्। लाक्षारसेनालक्तकेनासिक्तमलिप्तं त्वच्चरणद्वयं तव पादयुग्मं रक्तं रक्तवर्णं पश्य विलोकय। चरणयुगलस्य रक्ततोत्पादने लाक्षारसः कारणम्। अत्र तु तद्विनैव रक्तता प्रदर्शितेति विभावना। वेदेऽपि विभावना दृश्यते 'अपाणिपादो जवनो ग्रहीता' ( श्वेताश्वतरोप० ३।१९ ) इत्यादिषु मन्त्रेषु। इयमुक्तनिमित्ता, अनुक्तनिमित्तेति द्विविधा साहित्यदर्पणादौ। कुवलयानन्दादौ तु षट् प्रकारा विभावनाया उक्ताः। यथा—रसगङ्गाधरे 'कारणं विना कार्योत्पत्तिरेका विभावना। कारणानामसमग्रत्वे द्वितीया। सत्यपि प्रतिबन्धके कार्योत्पत्तिस्तृतीया। अकारणात्कार्योत्पत्तिश्चतुर्थी। विरुद्धात्कार्यजन्म पञ्चमी। कार्यात्कारणजन्म षष्ठी' इति। एते भेदाः 'कारणं विना कार्योत्पत्तिः' इति भेद एवान्तर्गताः। सामान्यलक्षणं विना विशेषलक्षणानुदयात्। अत्रातिशयोक्तिरनुप्रायिकेत्यलंकारसर्वस्वकारः। अभेदाध्यवसानमिति रसगङ्गाधरकारः॥ ७७ ॥

---

विभावना का स्वरूप यह है—कारण के विना कार्य की उत्पत्ति होने को विभावना अलंकार कहते हैं। विभावनापद का अर्थ यह होता है कारण का विचार। 'पश्य लाक्षा०' यह इस का उदाहरण है। लाक्षारस ( अलता ) के विना ही अपने दोनों चरणों को लाल देखो। पैर अलता लगाने पर ही लाल हो सकते हैं यहाँ विना उसके भी पैरों को लाल बतलाया। अतः कारण के विना ही रक्तता (लालवर्ण) रूप कार्य की उत्पत्ति होने से विभावना की लक्षणसंगति होती है। यह अलंकार 'अपाणिपादो जवनः' ( श्वेताश्वतरोप० ३।१९ ) इत्यादिक वैदिकस्थलों में भी प्राप्त होता है। इसके उक्तनिमित्ता, अनुक्तनिमित्ता ये भेद साहित्यदर्पण में बतलाये गये हैं। रसगङ्गाधरमें इसके छै भेद बतला कर उन सबका प्रथम भेद में ही अन्तर्भाव किया है। कारण के विना कार्योत्पत्ति होना प्रथम भेद है। सम्पूर्ण कारण के न होने पर दूसरा भेद होता है। प्रतिबन्धक होने पर भी कार्य की उत्पत्ति होवे तो तृतीय भेद, अकारण से कार्य का होना चतुर्थ भेद, विरुद्ध कारण से कार्योत्पत्ति में पञ्चमभेद, कार्य से कारण के जन्म में षष्ठ भेद होता है ॥ ७७ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे ।
नमन्तमपि धीमन्तं न लङ्घयति कश्चन ॥ ७८ ॥
आख्याते भिन्नदेशत्वे कार्यहेत्वोरसंगतिः ।
त्वद्भक्तानां नमत्यङ्गं भङ्गमेति भवक्लमः ॥ ७९ ॥

विशेषोक्तिं प्रदर्शयति—विशेषोक्तिरिति । कारणे हेतौ सति कार्यस्य फलस्यानुत्पत्तिरनुद्भवो विशेषोक्तिरलङ्कारः । कारणे सति कार्यमवश्यं भवतीति लोके नियमः । अत्र तु तद्वैपरीत्यम् । नमन्तमपीत्युदाहरणम् । नमन्तमपि धीमन्तं मतिमन्तं कश्चन कोऽपि न लङ्घयति नाभिभवति । अत्र नमनरूपकारणे सत्यपि लङ्घनरूपकार्याभाव उक्तः । निम्नं वस्तु लङ्घयितुं शक्यम् । तथापि लङ्घनाभावः । विरोधपरिहारस्त्वत्र सज्जनानां स्वाभाविकनम्रतया न तु निम्नत्वार्थकप्रतिपादनेन । इयमपि द्विविधा उक्तनिमित्ततया ॥ ७८ ॥

असङ्गतिं ब्रूते—आख्यात इति । कार्यं च हेतुश्चेति कार्यहेतू तयोः कार्यहेत्वोः । भिन्नदेशत्वे भिन्नावस्थानत्वे । आख्याते कथिते सति । असङ्गतिरलङ्कारः । यत्र कारणं तत्रैव कार्यमत्र तु तद्वैपरीत्यम् । कार्यकारणविभिन्नाधिकरणत्वमसङ्गतित्वम् । उदाहरति—त्वदिति । हे भगवन् ! त्वद्भक्तानां तव सेवकानाम् । अङ्गं शरीरं नमति निम्नं भवति । भवक्लमः संसारदुःखं भङ्गं विनाशमेति याति । अत्र नमनरूपं कारणं भक्ताङ्गनिष्ठं भङ्गरूपं कार्यं च भवक्लमनिष्ठमिति कार्यकारणयोर्वैयधिकरण्यादसङ्गतिः । ईशनत्या संसारदुःखनिवृत्तिरिति विरोधपरिहारः । यत्र कार्यहेत्वोर्भिन्नदेशत्वं न विरुद्धं तत्र नायमलङ्कार इत्यभिधाय कुवलयानन्देऽन्येऽपि भेदा अभिहिताः । एते च रसगङ्गाधरकारानभिमताः । भेदाश्चैते—
'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा । अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥

विशेषोक्ति का स्वरूप देखिए—कारण के रहने पर भी कार्य के न होने पर विशेषोक्ति अलङ्कार होता है । 'नमन्तमपि०' यह इसका उदाहरण है । बुद्धिमान् पुरुष को नम्र होने पर भी कोई नहीं लांघता । यहां नम्र ( नीचा ) होना रूपी कारण होने पर भी उल्लङ्घनरूपी कार्य की अनुत्पत्ति बतलाई । नीची वस्तु को हर एक आदमी दबा सकता है । तो भी यहां उल्लङ्घन का अभाव बतलाया । भावार्थ यह हुआ की नम्रता के कारण पुरुष सज्जन कहलाता है । इसके भी उक्तनिमित्ता, अनुक्तनिमित्ता ये दो भेद होते हैं ॥ ७८ ॥

असङ्गति यह है—कार्य और कारण की भिन्नदेश में अवस्थिति होने को असंगति कहा गया है । 'त्वद्भक्तानाम्' इसका उदाहरण है । हे भगवन् ! भक्तों का शरीर तो झुकता (नमस्कार करता) है और सांसारिक दुःखका विनाश होता है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विषमं यद्यनौचित्यादनेकान्वयकल्पनम् ।
क्वातितीव्रविषाः सर्पाः क्वासौ चन्दनभूरुहः ॥ ८० ॥
सममौचित्यतोऽनेकवस्तुसंबन्धवर्णनम् ।

---

अपारिजातां वसुधां चिकीर्षन्द्यां तथा कृथाः ।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः' ॥ इति ॥ ७९ ॥

विषमं व्याचष्टे—विषममिति । यदि । अनौचित्यादननुरूपत्वात् । अनेकेषां पदार्थानामन्वयस्य सम्बन्धस्य कल्पनं वर्णनं विषमालङ्कारः । अननुरूपानेकवस्तुसम्बन्धकल्पनत्वं विषमत्वम् । उदाहरति—क्वातीति । अतितीव्रं तीक्ष्णं विषं गरलं येषां तेऽतितीव्रविषाः सर्पाः फणिनः क्व कुत्र । असौ शीतलः सुगन्धश्च चन्दनभूरुहश्चन्दनवृक्षश्च क्व, अनयोः सम्बन्धोऽनुचित इति भावः । अत्र चन्दनसर्पयोर्मिथोऽननुरूपयोः सम्बन्धेऽनौचित्यं प्रदर्शितमिति विषमालङ्कारः । अयं चतुर्धा साहित्यदर्पणे—हेतुकार्ययोर्गुणविरोधे क्रियाविरोधे चेति द्वौ । आरब्धस्य कार्यस्य सानर्थं वैकल्ये विरूपयोर्घटने चेति द्वौ । विरूपघटनादर्शकभेदस्य लक्षणमुदाहरणं च ग्रन्थकर्त्रा स्वयमेवाभिहितम् । अन्येषां भेदानां लक्षणोदाहरणे कुवलयानन्दे—

'विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् । कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥
अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ।
भक्ष्याशयाहिमञ्जूषां दष्ट्वाखुस्तेन भक्षितः' ॥ इति ॥ ८० ॥

समं निरूपयति—सममिति । औचित्यतोऽनुरूपत्वात् । अनेकवस्तूनां पदार्थानां सम्बन्धस्यान्वयस्य वर्णनं कल्पनं सममलङ्कारः । उचितपदार्थद्वयसम्बन्धत्वं सम-

---

अर्थात् परमेश्वर के नमस्कार से संसार का दुःख दूर हो जाता है । यहां नमस्काररूप कारण भक्त के शरीर में रहता है और भङ्ग (विनाश) रूप कार्य संसारके दुःख में बतलाया है । अतः कार्य और कारण भिन्न देश में होने से असङ्गति है ॥७९॥

विषम का निरूपण यह है—अनुचितरूप से दो पदार्थोंके सम्बन्ध की कल्पना को विषम अलंकार कहा है । 'क्वातितीव्रविषाः सर्पाः' इसका उदाहरण है । तीव्र विष को धारण करने वाले सर्प कहां और शीतल चन्दन के वृक्ष कहां ? अर्थात्—चन्दन और सर्प का सम्बन्ध अनुचित है । यहां दोनों का अयोग्य सम्बन्ध होने से विषम अलंकार माना गया है । साहित्यदर्पण में इसके ये चार भेद बतलाये हैं—कार्य और कारण में गुण का विरोध, और क्रियाविरोध, प्रारम्भ किये हुए कार्य में अनर्थ होना और अयोग्य सम्बन्ध । कुवलयानन्द में इनके लक्षण देखिए ॥ ८० ॥

सम अलंकार का निर्वचन यह है—परस्पर योग्य दो पदार्थोंके सम्बन्ध वर्णन को

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ८१ ॥
विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः ।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ८२ ॥
अधिकं बोध्यमाधारादाधेयाधिक्यवर्णनम् ।
यया व्याप्तं जगत्तस्यां वाचि मान्ति न ते गुणाः ॥ ८३ ॥

त्वम् । अत्र विषमालङ्कारप्रतिद्वन्द्विभेदा ऊह्या इति कुवलयानन्दकृत् । उदाहरति—अनुरूपमिति । हारेण मुक्ताहारेण । कुचमण्डलं स्तनमण्डलमनुरूपमुचितं सद्म सदनं कृतं विहितम् , अत्र हारकुचयोर्मिथः शोभाजनकतयाऽनुरूपसम्बन्धवर्णनेन समालङ्कारः ॥

विचित्रं निरूपयति—विचित्रमिति । चेद् यदि । विपरीतं प्रतिकूलं फलं प्रददातीति विपरीतफलप्रदो विरुद्धफलदः प्रयत्नः उद्योगः स्यात्तदा विचित्रालङ्कारः । स्वेष्टफलविरोधिक्रियाश्रयत्वं विचित्रत्वम् । उदाहरणमाह—नमन्तीति । सन्तः सज्जनाः । त्रैलोक्यादपि त्रिभुवनादपि । समुन्नतिमुत्कृष्टतां लब्धुं प्राप्तुं नमन्ति नम्रा भवन्ति । अत्र नमनरूपप्रयत्नो विपरीतफलदायीति विचित्रालङ्कारः ॥ ८२ ॥

अधिकं लक्षयति—अधिकमिति । आधारादधिकरणादाधेयस्य निधेयपदार्थस्याधिकं वर्णनमधिकं बोध्यं ज्ञेयम् । आधारपृथुलतावर्णनपुरःसराधेयपदार्थाधिक्यवर्णनत्वमधिकत्वम् । पृथुलेऽप्याधारे आधेयाधिक्येन तत्रावस्थानार्हत्वमिति यावत् । उदाहरति—ययेति । यया वाचा जगद् व्याप्तं तस्यां वाचि वचने हे भगवन् ! ते गुणा न मान्ति । वचोऽतीतास्ते गुणा इति भावः । अत्र गुणाधारभूताया वाचो जगद्व्यापकतयाधिक्यवर्णनं पुनश्च गुणानामाधेयानां तस्मिन्पृथुलेऽप्याधारे वाग्रूपे

सम अलंकार कहा जाता है । 'अनुरूपम्' श्लोकार्ध इसका उदाहरण है । मोतियों के हार ने अपने योग्य ही कामिनी के सुन्दर स्तनमण्डल को अपना घर बनाया है । यहां हार और कुच परस्पर शोभित होते हैं । अतः योग्य सम्बन्ध के वर्णन से सम अलंकार है ॥ ८१ ॥

विचित्र का निरूपण यह है—विपरीत फलको देने वाले उद्योग के वर्णन में विचित्र अलंकार माना गया है । 'नमन्ति सन्तः' उदाहरण है । सज्जन मनुष्य तीनों लोकों से भी उन्नत (ऊंचे) होने को नम्र होते हैं । यहां नमनरूपी उद्योग से उन्नतिरूप विपरीत फल की प्राप्ति का वर्णन किया गया है । अतः विचित्र अलंकार है ॥

अधिक अलंकार यह है—आधार से आधेय की अधिकताके वर्णन में अधिक अलंकार होता है । 'यया व्याप्तं' इसका उदाहरण है । जिस वाणी से सम्पूर्ण संसार व्याप्त हो रहा है । हे भगवन् ! उस विशाल वाणीमें भी आपके गुण नहीं समाते । अर्थात् वाणी से आपके गुण कहे नहीं जा सकते । यहां वाणीरूपी

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।
त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ८४ ॥
विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।
गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ८५ ॥

---

स्थानाभावत्वप्रतिपादनमित्याधिक्यालङ्कारः। ग्रन्थान्तरे आधाराधिक्ये आधेयाधिक्ये चास्य द्वौ भेदौ ॥ ८३ ॥

अन्योन्यं व्याचष्टे—अन्योन्यमिति। यत्र वाक्ये परस्परं मिथः उपकारः स्यात्तत्रान्योन्यालङ्कारः। परस्परोपकारकथनत्वमन्योन्यत्वम्। त्रियामा रात्रिः। शशिना चन्द्रेण भाति शोभते। शशी चन्द्रश्च त्रियामया रात्र्या भाति शोभते। अत्र त्रियामाशशिनोर्मिथः शोभाजनकत्वेनोपकारकत्वादन्योन्यालङ्कारत्वम् ॥ ८४ ॥

विशेषं प्रदर्शयति—विशेष इति। ख्यातं प्रसिद्धमाधारं विनाधिकरणं विनापि आधेयवर्णनं विशेषोऽलङ्कारः। आधारं विनापि तदाधेयवर्णनं विशेष इति भावः। उदाहरति—गतेऽपीति। सूर्ये गतेऽपि दीपस्थाः प्रदीपस्थितास्तत्कराः सूर्यकिरणास्तमोऽन्धकारं छिन्दन्ति निवारयन्ति। अत्र सूर्यकिरणाधारं सूर्यं विनापि तत्किरणवर्णनाद्विशेषोऽलङ्कारः। आधारं विनाधेयवर्णनम्, एकाधेयस्यानेकाधारता किञ्चित् कुर्वतः पुरुषस्याशक्यनिर्माणमिति त्रयो भेदा विशेषस्य साहित्यदर्पणेऽभिहिताः॥८५॥

---

आधार की अपेक्षा भगवान् के गुणरूपी आधेय की अधिकता बतलाने से अधिक अलंकार होता है। आधाराधिक्य और आधेयाधिक्य ये दो भेद इसके माने गये हैं।

अन्योन्य यह होता है—जिस वाक्य में एक पदार्थ को किसी दूसरे पदार्थ का उपकारण बतलाया जावे वहाँ अन्योन्य अलंकार होता है। इसका 'त्रियामा शशिना' उदाहरण है। रात्रि चन्द्रमा से शोभित होती है और चन्द्रमा रात्रि से शोभित होता है। यहां चन्द्रमा और रात्रि आपस में शोभाजनक होने से परस्पर उपकारक होते हैं। अतः अन्योन्य अलंकार है ॥ ८४ ॥

विशेष अलंकार यह है—आधार के विना ही आधेय के वर्णन में विशेष अलंकार होता है। 'गतेऽपि सूर्ये' यह इसका उदाहरण है। सूर्य के अस्त होने पर भी दीपक में स्थित सूर्य की किरणें अन्धकार को नष्ट करती हैं। यहाँ सूर्य के विना भी सूर्य की किरणों की सत्ता बतलाने से विशेष अलंकार होता है। आधार के विना आधेयवर्णन, एक आधेय के अनेक आधार, किसी कार्य में असमर्थता का होना, ये तीन भेद साहित्यदर्पण में बतलाये गये हैं ॥ ८५ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याद्व्याघातोऽयथाकारि वस्त्वन्यक्रियमुच्यते ।
यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥
गुम्फः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः ।

व्याघातं व्याचष्टे—स्यादिति चेत् । अन्या क्रिया यस्य तत् तादृशं वस्तु । अयथाकारि विरुद्धक्रियमुच्यते तदा व्याघातोऽलङ्कारः स्यात् । एकेन कर्त्रा येनोपायेन यद्वस्तु कृतं ततो द्वितीयेन कर्त्रा तेनैवोपायेन तद्वस्तु पूर्वक्रियाविरोधि निष्पाद्यते चेत्तदा व्याघात इति भावः । उदाहरति—यैरिति । यैः कुसुमैर्जगत् संसारः प्रीयते प्रसन्नं भवति कुसुमायुधः पुष्पायुधः कामस्तैरेव जगत् हन्ति मारयति । लोकप्रीतिकरत्वं कुसुमानां प्रसिद्धम् । पुनस्तेषामेव पूर्वक्रियाविरोधिमारणक्रियाकारित्वमुक्तं कामस्य कुसुमायुधत्वात् । अतो व्याघातोऽत्रालङ्कारः ।

'सौकर्येण विरुद्धापि क्रिया कार्यविरोधिनी ।
दया चेद्बाल इति मय्यपरित्याज्य एव ते' ॥

इति कुवलयानन्दे व्याघातलक्षणान्तरमुक्तं ज्ञेयम् ॥ ८६ ॥

कारणमालां लक्षयति–गुम्फ इति । प्राक् च प्रान्तं च प्राक्प्रान्ते ते अनतिक्रम्येति यथाप्राक्प्रान्तं, यथाप्राक्प्रान्तं यानि कारणानि तैर्यथाप्राक्प्रान्तकारणैः । यथाप्राक्कारणैर्यथाप्रान्तकारणैश्चेति भावः । परं परं प्रति पूर्वपूर्वस्य कारणैः; पूर्वं पूर्वं प्रति परपरस्य कारणैश्च गुम्फो रचनाविशेषः कारणमालालङ्कारो भवति । कारणानां माला कारणमाला । यद्यप्यत्र कार्याणामपि माला विद्यते तथापि कविसंरम्भः कारण-

---

व्याघात यह है—एक पदार्थ से जो कार्य किया जाता है, दूसरा मनुष्य उसी पदार्थ से पूर्वविरुद्ध कार्य को उत्पन्न करे तो व्याघात अलंकार हो जाता है। 'यैर्जगत्०' इसका उदाहरण है। जिन पुष्पों से संसार प्रसन्न होता है, उन्हीं पुष्पों से कामदेव संसार को दुखी करता है। अर्थात् विरहावस्था में पुष्प सन्तापक होता है। यहाँ संसार को प्रसन्न करनेवाले पुष्परूप पदार्थ को भी कामदेव के द्वारा दुःखप्रद बतलाने से एक ही वस्तु विरुद्ध क्रियाकारी हुई। अतः व्याघात है ॥ ८६ ॥

कारणमाला का लक्षण यह है—क्रम से पूर्व-पूर्व के पद आगे के पदों के प्रति कारण हों और उत्तर के (आगे के) पद पूर्व के पदों के प्रति कारण हों तो कारणमाला होती है। भावार्थ यह हुआ कि पूर्व २ के पद कारण और उत्तर-उत्तर के पद कार्य हों तो प्रथमकारणमाला, पूर्व २ के पद कार्य और उत्तर २ के पद कारण हों तो दूसरी कारणमाला होती है। कारणों की माला पर ही कवि का ध्यान होने से कारण-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥ ८७ ॥
गृहीतमुक्तरीत्यर्थश्रेणिरेकावली मता ।

मालावर्णन एवेत्युचितमभिधानम् । पूर्वं पूर्वं कारणं परं परं कार्यमित्येका, पूर्वं पूर्वं कार्यं परं परं कारणमिति द्वितीया कारणमाला । तत्र प्रथमामुदाहरति—नयेनेति । नयेन नीत्या श्रीर्लक्ष्मीः । श्रियः लक्ष्म्या त्यागो दानं त्यागेन च विपुलमधिकं यशः कीर्तिर्भवति । अत्र पूर्वं नयश्रीत्यागाः कारणानि, परं श्रीत्यागयशांसि तेषां कार्याणीति प्रथमा कारणमाला । द्वितीया यथा कुवलयानन्दे—

'भवन्ति नरकाः पापात्पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत्' ॥ इति ।

अत्र पूर्वं नरकपापदारिद्र्याणि कार्याणि ततश्च तेषां कारणानि पापदारिद्र्याप्रदानानि समुपात्तानीति द्वितीया कारणमाला ॥ ८७ ॥

एलावलीं प्रदर्शयति—गृहीतेति । गृहीता स्थापिता च मुक्ता च त्यक्ता चेति गृहीतमुक्ता, सा चासौ रीतिर्विशेष्यविशेषणत्वप्रतिपादनशैली तया निबद्धा याऽर्थानां पदार्थानां श्रेणिः पङ्क्तिस्तया । एकावली मता । एकावली हारभेदः । 'एकावल्येकयष्टिका' इत्यमरकोशात् । एका चासाववली चेति कर्मधारयः । एकयष्टिका एकलतिका चेत् ( एकसरा चेत् ) एकावलीत्युच्यत इति तदर्थः । तथा च तत्सादृश्यादलङ्कारे लक्षणेति । पूर्वं पूर्वं प्रति परं परं विशेषणत्वेन विशेष्यत्वेन च स्थापितमपोहितं च यत्र

---

माला इसका नाम है । 'नयेन श्रीः०' इसका उदाहरण है । नीति से लक्ष्मी, लक्ष्मी से दान और दान से विपुल यश होता है । यहां पूर्व के पद-नीति, लक्ष्मी और दान क्रम से लक्ष्मी, दान और यश के कारण हैं । लक्ष्मी, दान, यश उनके कार्य हैं । अतः प्रथम कारणमाला है । दूसरी कारणमाला का उदाहरण कुवलयानन्द में 'भवन्ति नरकाः०' यह है । पाप से नरक मिलता है, दारिद्र्य से पाप पैदा होता है, दान नहीं देने पर दारिद्र्य होता है अतः दान करना चाहिये । यहां उत्तरपद पाप, दारिद्र्य, अप्रदान क्रम से नरक, पाप और दारिद्र्य के कारण बतलाये गये हैं । अर्थात् पाप से नरक मिलता है । यहां पापरूप उत्तरपद नरकरूप पूर्वपद का कारण है । अतः द्वितीय कारणमाला है ॥ ८७ ॥

एकावली का लक्षण यह है—पूर्वपदों को विशेषण या विशेष्य बनावे या विशेषण या विशेष्यपन से हटावे तो एकावली अलंकार होता है । एकावली मोती और हीरों के हार को कहते हैं । उसी हार के सदृश इस अलंकार में माला रूप से विशेषण-विशेष्यभाव की स्थापना या त्याग किया जाता है । अतः लक्षणाशक्ति से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नेत्रे कर्णान्तविश्रान्ते कर्णौ दोर्मूलदोलिनौ ॥ ८८ ॥
दीपकैकावलीयोगान्मालादीपकमुच्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ ८९ ॥

---

स्यात्तत्रैकावली । एवं चास्याश्चत्वारो भेदाः—पूर्वं प्रति परस्य विशेषणत्वेन स्थापने, अपोहने चेति द्वौ भेदौ । पूर्वं प्रति परस्य विशेष्यत्वेन स्थापनेऽपोहने च द्वौ भेदौ । पूर्वं पूर्वं प्रति परपरस्य विशेषणत्वस्थापनेऽपोहने चोदाहरति–नेत्र इति । तस्य राज्ञः । नेत्रे नयने । कर्णयोः श्रोत्रयोरन्तः कर्णान्तस्तयोर्विश्रान्ते स्थिते स्तः । कर्णौ च दोर्मूलयोर्भुजमूलयोर्दोलनं ययोरस्तीति दोर्मूलदोलिनौ स्कन्धावलम्बिनौ स्तः । अत्र पूर्वं नेत्रयोर्विशेषणत्वेन कर्णयोर्ग्रहणं पुनश्चाग्रे तयोः कर्णयोर्विशेषणत्वेन त्यागो विशेष्यत्वेन ग्रहणं चेत्येकावली । अन्यभेदानामुदाहरणान्यन्यत्र द्रष्टव्यानि ॥ ८८ ॥

मालादीपकमुच्यते – दीपकेति । दीपकश्चैकावली चेति दीपकैकावल्यौ तयोर्योग एकत्र समावेशस्तस्मात् । मालादीपकमुच्यते कथ्यते । दीपकस्यैकावल्याश्चैकत्र समावेशे मालादीपकमिति भावः । अयमलङ्कारो हि काव्यप्रकाशादिभिर्दीपकप्रकरणेऽभिहित इत्यभिहितं प्राक् १३४ पृष्ठे । उदाहरति—स्मरेणेति । नायकं प्रति दूतीवचनम् । स्मरेण कामेन तस्या नायिकाया हृदये मनसि स्थितिरवस्थितिः कृता विहिता । तेन नायिकाहृदयेन त्वयि नायके स्थितिः कृता विहिता । अत्र स्थितिपदं हृदये,

---

एकावली पद अलंकार का बोधक होता है । इस अलंकार के चार भेद होते हैं— पूर्व पदों के प्रति उत्तर पदों को विशेषणपन से स्थापित करें या त्याग करें तो दो भेद होते हैं । तथा पूर्व पदों के प्रति उत्तर पदों को विशेष्यता से स्थापित करे या त्याग करें तो दो भेद और होते हैं । पूर्व पद के प्रति उत्तर पद को विशेषण बनाने वा त्याग करने का उदाहरण 'नेत्रे कर्णान्त०' यह श्लोकार्ध है । उस राजा के नेत्र कर्णपर्यन्त लम्बे हैं और कर्ण स्कन्ध प्रदेश तक लम्बे हैं । यहां कर्णान्त इस उत्तर-पद को नेत्ररूप पूर्व पद का विशेषण बनाया है और आगे 'कर्णान्त०' इस पद को भी विशेषण नहीं रक्खा किन्तु विशेष्य बना लिया । अतः पूर्व पद के प्रति उत्तर पद को विशेषणपन से स्थापना वा अपोहन करने से एकावली अलंकार है ॥८८॥

मालादीपक का स्वरूप देखिए—दीपक और एकावली का एकत्र समावेश होने को मालादीपक कहते हैं । काव्यप्रकाश में यह अलंकार दीपक अलंकार के प्रकरण में कहा है । 'स्मरेण हृदये तस्याः' यह इसका उदाहरण है । कामदेव ने उस नायिका के हृदय में अपना निवास किया और उस नायिका के हृदय ने हे नायक ! तेरे में निवास किया है । अर्थात् नायिका तेरे बिना कामपीड़ित हो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सारो नाम पदोत्कर्षः सारताया यथोत्तरम् ।
सारं सारस्वतं तत्र काव्यं तत्र शिवस्तवः ॥ ९० ॥

नायके चोभयत्र सम्बद्धमिति दीपकम् । पूर्वं हृदयस्य मदनाधारतया ग्रहणम् । ततश्च नायकस्याधारत्ववर्णनेन हृदयाधारत्वत्याग इत्येकावली । दीपकैकावल्योरेकत्र समावेशान्मालादीपकम् ॥ ८९ ॥

सारं निरूपयति—सार इति । सारताया उत्कृष्टतायाः । यथोत्तरमुत्तरमुत्तरमिति वीप्सायामव्ययीभावः । पदोत्कर्षोऽत्यन्तोत्कर्षः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि-वस्तुषु' इत्यमरकोशाद् व्यवसितोत्कर्षो वस्तूत्कर्षो वा । सारोऽलङ्कारः । नामेति स्वर्थं । श्लाघ्यगुणोत्कर्षरूपोऽश्लाघ्यगुणोत्कर्षरूप उभयरूपो वेति त्रिविधः । रसगङ्गाधरे पुन-रयमेकविषयोऽनेकविषयश्चाप्युक्तः । तत्र श्लाघ्यगुणोत्कर्षरूपमुदाहरति—सारमिति । अत्र संसारे सारस्वतं वाङ्मयं सारम् । तत्रापि शास्त्रेऽपि । काव्यं कविकर्म कवि-तादि । सारं श्रेष्ठम् । तत्र काव्येऽपि शिवस्तवः शिवस्तुतिरूपं काव्यं सारमस्ति । अत्र वाङ्मयकाव्यशिवस्तुतीनां यथोत्तरं सारतायाः प्रतिपादनात् सारालङ्कारः । अन्यान्युदाहरणानि ग्रन्थान्तरेषु दृश्यानि । अयमलङ्कारो वेदेऽपि यथा—

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्नापरं किंचित्सा काष्ठा सा परा गतिः' ॥ इति ॥

अयमलङ्कारोऽलङ्कारसर्वस्वे उदारनाम्नाभिहितः ॥ ९० ॥

रही है । यह नायक के प्रति दूती का वाक्य है । यहां एक स्थिति पद हृदय और नायक इन दोनों से सम्बन्ध रखता है, अतः दीपक अलङ्कार है । पहिले तो काम-देव के निवासस्थानरूप में नायिकाहृदय का ग्रहण किया । और फिर नायक को आधार बनाकर नायिका के हृदयरूपी आधार को छोड़ दिया । अतः ग्रहण वा त्याग से एकावली अलंकार हुआ । इन दोनों अलंकारों का एक स्थान पर समावेश होने से मालादीपक है ।। ८९ ।।

सार अलंकार यह है—अनेक उत्तम सारभूत वस्तुओं में भी तारतम्य विचार करके एक को अत्यन्त उत्कृष्ट बतलाने पर सार अलंकार होता है । श्लाघ्यगुणो-त्कर्ष, अश्लाघ्यगुणोत्कर्ष, उभयरूप, एकविषयक, अनेकविषयक ये इस अलंकार के भेद होते हैं । श्लाघ्यगुणोत्कर्ष का उदाहरण 'सारम्०' यह श्लोकार्ध है । इस संसार में विद्या सर्वश्रेष्ठ है, विद्या में भी काव्य श्रेष्ठ है, काव्यों में भी शिवस्तुति के काव्य सर्वोत्तम हैं । यहां अनेक उत्तम वस्तुओं में भी शिवस्तुति को ही सर्वोत्तम बतलाया अतः सार अलंकार है । 'महतः परमव्यक्तम्' इस वैदिक वाक्य में भी सार अलं-कार है । अलंकारसर्वस्व में इसका नाम उदार अलंकार कहा गया है ।। ९० ।।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उदारसारश्चेद्भाति भिन्नोऽभिन्नतया गुणः।
मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः॥ ९१॥
यथासंख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः।
शत्रुं मित्रं द्विषत्पक्षं जय रञ्जय भञ्जय॥ ९२॥

उदारसारं व्याचष्टे—उदारेति। चेद् यदि। यथोत्तरमुत्कृष्टतया कथ्यमानो भिन्नोऽपि गुणः अभिन्नतयैकतया भाति प्रतीयते तदोदारसारोऽलङ्कारः। उदाहरति—मधुरमिति। अत्र संसारे मधु क्षौद्रं मधुरमिष्टम्। तस्मान्मधुनो मधुरं पीयूषममृतमस्ति। तस्मात्पीयूषात् मधुरं कवेर्वचः काव्यमस्ति। संसारे सर्वतोऽधिकं माधुर्यं काव्ये वर्त्तत इति भावः। अत्र श्रेष्ठतया कथ्यमानं काव्यमाधुर्यं श्रोत्रग्राह्यं मध्वादिमाधुर्यं च रसनाग्राह्यमिति विभिन्नोऽपि माधुर्यगुणः शब्दमहिम्नाऽभिन्नवत्प्रतिपादित इत्युदारसारोऽलङ्कारः॥ ९१॥

यथासंख्यं निरूपयति—यथेति। चेद् यदि। द्विधा क्रियाकारकरूपाः। अर्थाः पदार्थाः। क्रमात् क्रमशः। एकैकं प्रत्येकमन्विताः सम्बद्धास्तदा संख्यामनतिक्रम्येति यथासंख्यमलङ्कारः। कारकाणां क्रियाणां वा क्रमिकाणां क्रमेण कारकेषु क्रियासु वाऽन्वयो यथासंख्यमिति भावः। यथासंख्यरूपं पाणिनिनापि 'यथासंख्यमनुदेशः समानाम्' इत्युक्तम्। उदाहरति—शत्रुमिति। हे राजन्! त्वं शत्रुं वैरिणं जय, मित्रं सुहृदं रञ्जयानुरक्तं कुरु, द्विषत्पक्षं भञ्जय भग्नं कुरु। अत्र पूर्वं कर्मकारकार्था उक्ता-

---

उदारसार यह है—भिन्न भी उत्कृष्ट गुण जहां अभिन्नरूप से बतलाया जावे तो उदारसार अलंकार माना जाता है। 'मधुरं मधु पीयूषम्' इसका उदाहरण है। इस संसार में शहद मिष्ट होता है। शहद से भी अधिक मिष्ट अमृत है। इस अमृत से भी अधिक मिष्ट कवि का वचन ( काव्य ) होता है। काव्य का माधुर्य श्रोत्रग्राह्य है और अमृत का माधुर्य रसना ( जिह्वा ) से जाना जाता है। अतः ये दोनों माधुर्य भिन्न हैं, तो भी इन सब को अभिन्नरूप से यहां बतलाया। अतः उदारसार अलंकार है॥ ९१॥

यथासंख्य अलंकार का लक्षण देखिए—जहां कारक वा क्रियाओं का क्रम से कारक वा क्रियाओं के साथ सम्बन्ध किया जावे तो यथासंख्य अलंकार होता है। 'शत्रुं मित्रम्' यह इस का उदाहरण है। हे राजन्! तुम शत्रुओं को जीतो, मित्रों को प्रसन्न करो और शत्रुपक्ष के पुरुषों को भग्न करो। यहां पहिले शत्रु-मित्र-द्विषत्पक्ष, ये कर्मकारक बतलाये और बाद में इन की जय-रञ्जन-भञ्जन ये क्रियायें बतलाईं और इन का क्रम से एक शब्द के साथ एक क्रिया का सम्बन्ध किया।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पर्यायश्चेदनेकत्र स्यादेकस्य समन्वयः ।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ ९३ ॥
परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।

स्ततश्च क्रमशस्तेषां क्रियार्था उक्ताः एतेषां यथासंख्यं क्रमशोऽन्वयाल्लक्षणसंगतिः। वामनाचार्येणायं क्रमनाम्नोक्तः ॥ ९२ ॥

पर्यायं प्रदर्शयति – पर्याय इति। चेद्यदि। क्रमादित्यनुषज्यते। एकस्य पदार्थस्यानेकत्रानेकस्थलेषु समन्वयः सम्बन्धः स्यात्तदा पर्यायोऽलङ्कारो भवति। 'पर्यायोवसरे क्रमे' इत्यमरः। 'परावनुपात्यय इणः' ( ३।३।३८ ) इति पाणिनिसूत्रेण घञ्। क्रमप्राप्तस्यानतिपातोऽनुपात्ययः। एकस्यानेकसंश्रयतया, अनेकस्यैकसंश्रयतया च पर्यायस्य द्वौ भेदौ। कुवलयानन्दे तु संकोचपर्यायो विकासपर्यायश्चेत्यपि पर्यायभेदावुक्तौ। उदाहरति—पद्ममिति। कामिनीवदनस्य कान्तामुखस्योपमा सादृश्यम्। पद्मं कमलं मुक्त्वा विहाय चन्द्रं शशिनं गता प्राप्ता। दिने कान्तामुखसादृश्यं पद्मे आसीत्, रात्रौ तु सति कमलसंकोचे तत् चन्द्रे प्राप्तम्। दिने पद्मे रात्रौ च चन्द्रे मुखसादृश्यमस्तीति भावः। अत्र कामिनीवदनोपमाया एकस्याः पद्मे चन्द्रे चानेकत्राधारत्वेन वर्णनाल्लक्षणसंगतिः ॥ ९३ ॥

परिवृत्तिं व्याचष्टे—परिवृत्तिरिति। न्यूनं चाभ्यधिकं चेति न्यूनाभ्यधिके तयोर्मिथः परस्परं विनिमयः परिवर्त्तनं परिवृत्तिरलङ्कारः। किञ्चिद् दत्वा कस्यचिदादानं

---

अतः यह यथासंख्य अलंकार है। वामनाचार्य ने इस अलंकार को क्रम नाम से लिखा है ॥ ९२ ॥

पर्याय अलंकार का निर्वचन यह है—एक पदार्थ का क्रम से अनेक पदार्थों के साथ सम्बन्ध होने पर पर्याय अलंकार होता है। यहां पर्याय का अर्थ क्रम माना गया है। एक पदार्थ का अनेक आश्रय होना और अनेक वस्तुओं का एक आश्रय होना ये पर्याय के दो भेद होते हैं। कुवलयानन्द में संकोचपर्याय और विकासपर्याय ये दो भेद और माने गये हैं। 'पद्मं मुक्त्वा गता' यह इसका उदाहरण है। कामिनी के मुख का सादृश्य रात्रि में पद्म को छोड़कर चन्द्रमा में प्राप्त हो गया। अर्थात् दिन में मुख का सादृश्य पद्म में रहता है, किन्तु रात्रि में कमल के सङ्कुचित हो जाने पर वह चन्द्रमा में पहुँच जाता है। दिन में पद्म में, रात्रि में चन्द्रमा में मुखसादृश्य रहता है। यहां एक ही मुखसादृश्य का पद्म और चन्द्र इन दो स्थानों के साथ सम्बन्ध बतलाने से लक्षणसङ्गति होती है ॥ ९३ ॥

परिवृत्ति अलंकार यह है—सम, न्यून वा अधिक पदार्थ द्वारा आपस में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जग्राहैकं शरं मुक्त्वा कटाक्षान् शत्रुयोषिताम् ॥ ९४ ॥
परिसंख्यानिषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।

परिवृत्तिः । इदमुपलक्षणं तेन समेन समस्यापि परिवृत्तिर्भवति । न्यूनत्वादि च संख्यया स्वरूपेण च भवति । उदाहरति—जग्राहेति । नृपः एकं शरं बाणं मुक्त्वा त्यक्त्वा शत्रुयोषितां वैरिनारीणां कटाक्षान्नेत्रप्रान्तान् । जग्राह स्वीचकार । शत्रुयोषितः पतिहन्तारं भवन्तं पश्यन्तीति भावः । अत्रैकशरत्यागेन शत्रुजयतदीयस्त्रीकटाक्षबाहुल्यस्वीकारात्परिवृत्तिः । अत्र च संख्याकृताधिक्यलाभवर्णनम् । रसगङ्गाधरे चेमे भेदाः—'सा च तावद् द्विविधा—समपरिवृत्तिर्विषमपरिवृत्तिश्चेति । समपरिवृत्तिरपि द्विविधा—उत्तमैरुत्तमानां न्यूनैर्न्यूनानां चेति । विषमपरिवृत्तिरपि तथा—उत्तमैर्न्यूनानां न्यूनैरुत्तमानां चेति ।' अत्र विनिमयः कविकल्पित एव ग्राह्यो न तु वास्तवः । यत्र वास्तवस्तत्र नायमलङ्कारः । यथा—'क्रीणन्ति प्रविकचलोचना समन्तान्मुक्ताभिर्बदरीफलानि यत्र बालाः' इत्यादौ ॥ ९४ ॥

परिसंख्यां लक्षयति—परिसंख्येति । एकत्र स्थले एकं वस्तु निषिध्य प्रतिषिध्य । अन्यस्मिन्स्थले तस्यैव वस्तुनो नियन्त्रणं नियमनं परिसंख्यालंकारः । एकस्यैव वस्तुन एकत्र निषेधोऽपरत्र च शब्दसाम्येनाभिन्नस्य तस्यैव वस्तुनः सद्भावकथनमिति भावः । परिशब्दोऽत्र वर्जनार्थकः । 'परेर्वर्जने' (८।१।५) इति पाणिनिसूत्रात् । संख्या बुद्धिः । 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते'

परिवर्तन (लेन-देन) करने पर परिवृत्ति अलंकार होता है । 'जग्राहैकं शरं मुक्त्वा' यह इसका उदाहरण है । राजा ने शत्रुओं पर एक वाण चलाकर शत्रुस्त्रियों के कटाक्षों को ग्रहण किया । भावार्थ यह हुआ कि शत्रुओं को मारने से उनकी स्त्रियां राजा को देखने लगीं कि यह हमारे पति को मारने वाला है । यहाँ राजा ने एक वाण के बदले शत्रुजय और उनकी स्त्रियों के अनेक कटाक्षों को ग्रहण किया अतः परिवृत्ति अलंकार है । एक वाण के बदले अधिकसंख्यक पदार्थों के ग्रहण से यहाँ संख्या की अधिकता से परिवृत्ति है । रसगङ्गाधर में इसके ये भेद माने गये हैं—समपरिवृत्ति और विषमपरिवृत्ति ये दो भेद हैं । पुनः समपरिवृत्ति के दो भेद होते हैं—उत्तम वस्तु के परिवर्तन में उत्तम वस्तु लेना और न्यून से न्यून का ग्रहण करना । उत्तम से न्यून के ग्रहण में और न्यून से उत्तम वस्तु के लेने में विषमपरिवृत्ति के भी दो भेद होते हैं ॥ ९४ ॥

परिसंख्या का लक्षण यह है—किसी वस्तु का एक स्थान पर अभाव बतला कर दूसरे स्थान पर उसी वस्तु की नियमित सत्ता (उपस्थिति) बतलाने पर परिसंख्या होती है । परि शब्द का अर्थ त्याग और संख्या पद का अर्थ बुद्धि माना


CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्नेहक्षयः प्रदीपेषु स्वान्तेषु न नतभ्रुवाम् ॥ ९५ ॥

इति भगवद्गीतावचनात्। एवं वर्जनबुद्धिः परिसंख्येतिनाम्नो निर्वचनम्। पूर्वमीमांसायां परिसंख्यास्वरूपमिदम्—

'पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः।
गोधा कूर्मः शशः खड्गी शल्यकश्चेति ते स्मृताः' ॥

इति देवलोक्तं वाक्यं न पञ्चनखभक्षणविधायकम्। पञ्चनखभक्षणस्य रागतः प्राप्तत्वात्। ततश्चेदं वाक्यमपञ्चनखभक्षणनिवृत्तिपरमिति परिसंख्याविधिरयम्। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिरिति लक्षणात्। पञ्चनखानामपि भक्षणनिवृत्तिस्तु महाफला। मीमांसाप्रदर्शितेयं परिसंख्या नालङ्कारः। अलङ्कारसामान्यलक्षणोक्तचमत्कारस्याभावात्। 'स्नेहक्षयः प्रदीपेषु' इत्युदाहरणम्। रजन्यां स्नेहक्षयस्तैलक्षयः प्रदीपेषु दीपेषु आसीत्। किन्तु नतभ्रुवां कामिनीनां स्वान्तेषु हृदयेषु स्नेहक्षयोऽनुरागाभावो नासीत्। अत्र स्नेहपदस्य श्लेषमहिम्नाऽभेदस्वीकारः। स्नेहस्य दीपेषु निषेधः कामिनीमनःसु च तस्यावस्थानमिति लक्षणसंगतिः। अस्यालङ्कारस्य चत्वारो भेदा रसगङ्गाधरे—शुद्धा, प्रश्नपूर्विका, शाब्दी, आर्थी चेति ॥ ९५ ॥

---

गया है। इस पर इन दोनों के मिलाने पर परिसंख्या पद का त्यागबुद्धि अर्थ होता है। पूर्वमीमांसा में परिसंख्या का स्वरूप यह है—'पञ्च पञ्चनखा भक्ष्याः' (पांच नख के जन्तु का ही मांस खाना चाहिए और का नहीं) यह देवल का वाक्य परिसंख्याविधि है। इस वाक्य से पञ्चनख जन्तु के भक्षण का विधान नहीं है। क्योंकि मांसभक्षण तो अपनी इच्छा ही से मनुष्य कर लेता है फिर इसके विधानकी क्या आवश्यकता थी ? अतः यह वाक्य पञ्चनख से भिन्न जन्तु के मांसभक्षण का निषेध करता है। यदि मनुष्य पञ्चनखभक्षण को भी त्याग देवै तो अत्यन्त पुण्य वा प्रशंसा की बात है। यही पूर्वमीमांसा की परिसंख्या काव्य में चमत्कारक रीति से कहने पर अलंकार हो जाती है। 'स्नेहक्षयः प्रदीपेषु' इसका उदाहरण है। रात्रि में स्नेहक्षय कामिनियों के अन्तःकरण में नहीं हुआ किन्तु दीपकों में अवश्य स्नेहक्षय (तैल का न होना) हुआ। स्नेहपद के श्लेष से अनुराग और तैल ये दो अर्थ होते हैं इन दोनों में अभेद बुद्धि करके यह अलंकार यहां किया गया है। यहां स्नेहरूप वस्तु का दीपक में अभाव बतलाकर उसी की सत्ता कामिनियों के अन्तःकरण में बतलाई अतः परिसंख्या होती है। शुद्धा, प्रश्नपूर्विका, शाब्दी और आर्थी ये चार भेद रसगङ्गाधर में लिखे गये हैं ॥ ९५ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विकल्पस्तुल्यवलयोर्विरोधश्चातुरीयुतः।
कान्ताचित्तेऽधरे वापि कुरु त्वं वीतरागिताम् ॥ ९६ ॥
भूयसामेकसंबन्धभाजां गुम्फः समुच्चयः।

विकल्पं व्याचष्टे--विकल्प इति। तुल्यबलयोः समानबलयोर्द्वयोश्चातुरीयुतश्चातुर्येण विहितः। विरोधो युगपत्कथनं विकल्पोऽलङ्कारः। युगपत्कर्तुमशक्ययोः द्वयोः कार्ययोर्युगपत्कथनं विकल्पालङ्कारः। उदाहरति-कान्तेति। खण्डितानायिकोक्तिः। कान्ताया मम चित्तेऽन्तःकरणे। अधरे स्वाधरे वा। त्वं वीतरागितामनुरागशून्यतां रक्ताशून्यत्वं च कुरु विधेहि। मय्यनुरागाभावं स्वाधरेऽन्यनायिकाकर्तृकरक्तवर्णाभावं च कुर्वित्यर्थः। अत्र कार्यद्वयस्य कान्तानुरागस्य निजाधरनिष्ठरक्तवर्णताया निषेधस्य च युगपदशक्यत्वेऽपि शक्यत्ववर्णनेन लक्षणसङ्गतिः। अयं समुच्चयस्य प्रतिपक्षभूतो व्यतिरेक इवोपमायाः। अत्र च विकल्प्यमानयोरौपम्यमलङ्कारताबीजम्। तदादायैव चमत्कारस्योल्लासात्। अन्यथा तु विकल्पतामात्रम्। यथा 'जीवनं मरणं वास्तु नैव धर्मं त्यजाम्यहम्' इत्यादौ। अत्र जीवनमरणयोर्नौपम्यस्य प्रतीति। तस्मादत्र न विकल्पालङ्कारता ॥ ९६ ॥

समुच्चयं प्रदर्शयति-भूयसामिति। एकं संबन्धं भजन्तीति तथोक्तास्तेषां भूयसां बहूनामनेकगुणानामनेकक्रियाणामनेककारकाणां वा गुम्फो रचना समुच्चयोऽलङ्कारः। युगपत्पदार्थानामन्वयः समुच्चय इति भावः। प्रस्तुतकार्यस्य साधक एकस्मिन् स्थिते

विकल्प अलंकार यह है—एक समय में न होनेवाले दो पदार्थों को अपने चातुर्य से एक समय में बतला देने पर विकल्प होता है। 'कान्ताचित्ते' इसका उदाहरण है। खण्डिता नायिका का कथन है कि हे रसिकमहोदय! आप मेरे चित्त में और अपने ओष्ठ पर वीतरागिता (अनुरागाभाव और रक्तता का अभाव) को करें। अर्थात् मेरे से प्रेम न करके आप अन्य नायिका से चुम्बन द्वारा अपने ओष्ठ की रक्तता को दूर कराइये। कान्तानुराग और ओष्ठ की रक्तता का एक काल में निरास असम्भव है तथापि उनको सम्भव रूप से बतलाया, अतः विकल्प है। जिस प्रकार व्यतिरेक अलंकार उपमा का प्रतिपक्षी है उसी प्रकार यह अलंकार समुच्चय का प्रतिपक्षी है। दोनों पदार्थों में सादृश्य की प्रतीति होना ही इस अलंकार का प्राण है। अन्यथा यह विकल्प अलंकार के रूप को धारण नहीं कर सकता है ॥ ९६ ॥

समुच्चय का स्वरूप देखिए—एक सम्बन्ध (कार्य) में अनेक गुण, अनेक क्रिया वा अनेक कारकों का योग बतलाने पर समुच्चय अलंकार होता है। काव्यप्रकाश में लिखा है कि जहां किसी कार्य के सिद्ध करने में एक साधक हेतु हो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विषः ॥ ९७ ॥

समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः ।

यत्र साधकान्तराणि सम्भवन्ति तत्रापरः समुच्चय इति काव्यप्रकाशादौ । काव्यलिङ्गे हि हेतुत्वमात्रं विवक्षितं भवति । समाध्यलङ्कारे चैकेन हेतुना कार्ये निष्पद्यमाने आगन्तुकेनापरेण कार्यस्य सौकर्यकरणं भवति । अत्र तु बहूनां कार्यकारणक्षमाणां साहित्यं विवक्षितमिति परस्परं भेदः । उदाहरति—नश्यन्तीति । हे राजन् ! तव द्विषः शत्रवः नश्यन्ति राज्यच्युता भवन्ति । पश्यन्ति विलोकयन्ति । पश्चाच्च भ्रश्यन्ति भ्रष्टा भवन्ति । अत्रानेकक्रियाणां नाशदर्शनभ्रंशरूपाणामेकशत्रुरूपपदार्थसम्बन्धकथनेन लक्षणसंगतिः । अस्यालङ्कारस्य षड् भेदाः साहित्यदर्पणे—सद्योगे, असद्योगे, सदसद्योगे, गुणयोर्यौगपद्ये, क्रिययोर्यौगपद्ये, गुणक्रिययोश्च यौगपद्ये। एषामुदाहरणानि तत्रैव द्रष्टव्यानि ॥ ९७ ॥

समाधिं व्याचष्टे—समाधिरिति । अन्यत्कारणमिति कारणान्तरं तस्य योगतो हेत्वन्तरसम्बन्धाद् यदि कार्यसौकर्यं कार्यसमुत्पादनसारल्यं स्यात्तदा समाधिरलंकारः । सम्यक् आधिराधानमुत्पादनं समाधिरित्यन्वर्थेयं संज्ञा कार्योत्पत्त्यनुकूलकारणसत्त्वेऽपि काकतालीयन्यायेन कारणान्तरसत्तया शीघ्रं कार्यसमुत्पादने समाधिरिति भावः । यत्रैकमेव कारणं प्रधानतया विवक्षितमपरं च सहकारितया तत्रायमलङ्कारः । उभयोः कारणयोः प्राधान्ये विवक्षिते तु समुच्चयः । अत एवात्र काकतालीयन्यायेन योगः, समुच्चये तु खले कपोतिकान्यायेन समकक्षतया कारणान्तरयोग

---

तो भी वहाँ अन्य साधक हेतु उपस्थित होवे तो समुच्चय होता है । काव्यलिङ्ग में पद वा वाक्य केवल हेतुरूप से रहता है । समाधि अलङ्कार में एक कारण से भी कार्य सिद्ध हो सकता है तथापि अनेक कारणों द्वारा वहां कार्य की सिद्धि में सरलता बतला दी जाती है । यहां तो कार्य को करने वाले अनेक कारणों के समूह की आवश्यकता रहती है । यह इन सब में भेद जानना चाहिए । 'नश्यन्ति पश्चात्' यह उदाहरण है । हे राजन् ! आपके शत्रु राज्यच्युत होते हैं और पीछे राज्य को देखते हैं और भ्रष्ट हो जाते हैं । यहां 'नश्यन्ति, पश्यन्ति, भ्रश्यन्ति' इन अनेक क्रियाओं का शत्रुविनाशरूप एक कार्य में सम्बन्ध बतलाया गया अतः समुच्चय है । साहित्यदर्पण में इसके छै भेद बतलाये हैं—सद्योग, असद्योग, सदसद्योग, गुणयौगपद्य, क्रियायौगपद्य और गुणक्रियोभययौगपद्य ॥ ९७ ॥

समाधि का निर्वचन यह है—कार्य की सिद्धि के अनुकूल एक कारण के होने पर भी जहां काकतालीयन्याय से अन्य कारण द्वारा कार्यसिद्धि में शीघ्रता या सरलता हो तो समाधि होती है । समुच्चय में खले कपोतिकान्याय से सब कारणों की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्कण्ठितां च कलयन् जगामास्तं च भानुमान् ॥ ९८ ॥
प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥ ९९ ॥

---

इत्यनयोर्भेदः। उदाहरति—उत्कण्ठितामिति। उत्कण्ठितां प्रियाभिसरणे उत्सुकतां कलयन् जानन् भानुमान् सूर्यः। अस्तं जगाम। अत्र प्रियाभिसरणे उत्कण्ठैव पुष्कलं कारणं पुनरपि दैवादापतता सूर्यास्तमयोदितेनान्धकारेण तत्र प्रियाभिसरणे सौकर्यमात्रं कृतमिति लक्षणसंगतिः ॥ ९८ ॥

प्रत्यनीकं निरूपयति—प्रत्यनीकमिति। बलवतो बलयुक्तस्य शत्रोर्वैरिणः। पक्षे सहायके पराक्रमो बलप्रयोगः प्रत्यनीकमलङ्कारः। बलवच्छत्रुपराजयाक्षमस्य पुनस्तदीयशत्रुसहायकतिरस्कारवर्णने प्रत्यनीकालङ्कारः। अत्र प्रतिशब्दः प्रतिनिध्यर्थकः। 'प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः' इत्यमरः। 'प्रतिः प्रतिनिधिप्रतिदानयोः' (१।४।९२) इति पाणिनिश्च। अनीकं सैन्यम्। 'अनीको ऽस्त्री रणे सैन्ये' इति मेदिनी। अनीकात् प्रतीति विग्रहे 'अव्ययं विभक्ति०' (२।१।६) इति पाणिनिसूत्रेणाव्ययीभावः। अथवा 'सुपा' (२।१।४) इति सूत्रेण 'भूतपूर्वः' इत्यत्रेव सुप्सुपासमासः। तथा च प्रत्यनीकशब्देन सैन्यप्रतिनिधिरुच्यते, तत्साम्याच्च प्रकृतार्थे लक्षणया प्रयोगः। 'लोके हि प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते। तदशक्तौ प्रतिपक्षसम्बन्धिनः कस्यचित्तिरस्कारः क्रियते। स चानीकसदृशप्रयुज्यमानत्वात्प्रत्यनीकमुच्यते' इति रसगङ्गाधरे। उदाहरति—जैत्रेति। उत्पलाभ्यां कमलाभ्यां जैत्रे जयनशीले ये नेत्रे नयने तयोरनुगावनुयायिनौ

---

प्रधानता रहती है और यहां एक कारण की प्रधानता औरों की काकतालीयन्याय से सहकारितामात्र रहती है। 'उत्कण्ठितां च कलयन्' इसका उदाहरण है। अभिसारिका की उत्कण्ठा को जानता हुआ सूर्य अस्ताचल को चला गया। भाव यह हुआ कि अन्धकार होने से शीघ्र ही अभिसारिका प्रिय के पास पहुँच जायगी। यहां प्रिय के घर जाने में उत्कण्ठा ही प्रबल कारण था तथापि सूर्यास्त से उत्पन्न हुए अन्धकार द्वारा प्रियगृहगमन में सरलता हो गई अतः समाधि है ॥९८॥

प्रत्यनीक का निरूपण यह है—बलवान् शत्रु के पराजय करने में असमर्थ पुरुष जहाँ उसके सहायकवर्ग का पराभव करे तो प्रत्यनीक अलङ्कार होता है। प्रति शब्द का अर्थ प्रतिनिधि और अनीक का अर्थ सेना होता है। इन दोनों शब्दों को मिलाने से सेना का प्रतिनिधि यह अर्थ हुआ। अतः यह शब्द अर्थसाम्यसम्बन्ध से लक्षणा शक्ति द्वारा अलङ्कार का बोधक हो जाता है। 'जैत्रनेत्रानुगौ' इसका उदाहरण है। पद्मों ने अपने शत्रु नेत्रों के पीछे रहने वाले कर्णों को दबा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतीपमुपमानस्य हीनत्वमुपमेयतः ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १०० ॥

---

कर्णौ । अधःकृतौ तिरस्कृतौ । अवतंसतया तदुपरिस्थितत्वादधस्तात्कृतौ चेति श्लेषः । अत्र नेत्रयोः पराभवाक्षमाणामुत्पलानां जैत्रनेत्रानुगकर्णपराभववर्णनात् प्रत्यनीकम् ॥ ९९ ॥

प्रतीपं वर्णयति—प्रतीपमिति । उपमेयत उपमेयात् । उपमानस्य हीनत्वं न्यूनता प्रतीपमलङ्कारः । उपमेयादुपमानस्य हीनत्ववर्णनेऽयमलङ्कार इति भावः । प्रतिगच्छन्त्यापो यस्मिन्निति प्रतीपं निम्नोन्नतस्थलं तत्सादृश्यादलङ्कारे लक्षणा । 'ऋकपू०' इत्यादिनाऽप् प्रत्ययः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीदादेशः । उदाहरति-दृष्टमिति । चेद् यदि । तस्या रमण्या वदनमाननं दृष्टं तदा पद्मेन कमलेन किम् । इन्दुना चन्द्रेण च किं प्रयोजनम् । पद्मचन्द्रौ निष्फलाविति भावः । अत्र उपमेयान्मुखादुपमानस्य पद्मचन्द्ररूपस्य किमिति काक्वा कार्याक्षमकथनेन हीनत्वप्रतीत्या लक्षणसंगतिः । कुवलयानन्दे प्रतीपस्य पञ्च भेदाः—उपमानस्योपमेयत्वे, निष्फलत्वे, प्रकारान्तरेण निष्फलत्वे, अनुत्पत्तौ, कैमर्थ्ये चेति । रसगङ्गाधरे चैते भेदा निराकृताः । तथा हि—आद्यास्त्रयोऽप्युपमायामेवान्तर्गताः । चतुर्थः केषांचिदा-

---

दिया । अर्थात् नायिका ने कर्णों के ऊपर कमल शोभार्थ लगा लिये । यहां नेत्रों के पराभव करने में असमर्थ पद्मों ने नेत्रों के साथ रहनेवाले कर्णों ( कानों ) को दवा दिया, इस वर्णन से प्रत्यनीक अलंकार है ॥ ९९ ॥

प्रतीप का वर्णन किया जाता है—उपमेय से उपमान की हीनता बतलाने में प्रतीप अलंकार होता है । जहां पर प्रवाहरूप से जाता हुआ जल सामने टक्कर खाकर वापस लौट आवे उस निम्नोन्नत ( ऊँचे-नीचे ) स्थल को प्रतीप कहते हैं । समान अर्थ होने से लक्षणाशक्ति द्वारा यह पद अलंकार का भी वाचक हो जाता है । 'दृष्टं चेद्वदनं तस्या' यह इस का उदाहरण है । उस नायिका के मुख को देख लेने पर चन्द्रमा और पद्म किसी काम के नहीं मालूम पड़ते । अर्थात् निस्तेज मालूम पढ़ते हैं । यहां मुखरूपी उपमेय से चन्द्र और पद्मरूपी उपमान में हीनता बतलाई गई अतः प्रतीप अलंकार है । कुवलयानन्द में इस के पांच भेद बतलाये हैं—उपमान को उपमेय बनाना, उपमान में निष्फलता, अन्य प्रकार से उसमें निष्फलता, उपमान का अभाव और किंशब्द के प्रयोग से उपमान की निष्फलता । रसगंगाधर में प्रथम तीन भेदों को उपमा में, चौथे भेद को आक्षेप में और

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते ।
तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥ १०१ ॥

---

तेरूपः । पञ्चमस्त्वनुक्तवैधर्म्ये व्यतिरेकेऽन्तर्गत इति । विशेपस्तत्रैव द्रश्यः ॥१००॥

उल्लासं व्याचष्टे—उल्लास इति । चेद् यदि । अन्यमहिम्नाऽन्यगुणेन । अन्यत्राऽन्यस्मिन् स्थले दोपो वर्ण्यते कथ्यते तदोल्लासः । इदमुपलक्षणमन्यगुणेनान्यदोपवर्णनम् । तेनास्य चत्वारो भेदाः–अन्यगुणेनान्यगुणवर्णनमेकः, अन्यगुणेनान्यदोपवर्णनं द्वितीयः, अन्यदोपेणान्यदोपवर्णनं तृतीयः, अन्यदोपेणान्यगुणवर्णनं चतुर्थः, इति । तत्र द्वितीयमुदाहरति—तदभाग्येति । यद् धनं सज्जनं सत्पुरुषं नाश्रयति न प्राप्नोति, तद् धनस्यैव वित्तस्यैवाभाग्यं दौर्भाग्यं वर्तते । अत्र सज्जनमहिमगुणेन धनस्य तदनाश्रयदोपवर्णनमिति लक्षणसंगतिः । भेदान्तराणामुदाहरणानि कुवलयानन्दे प्रतिपादितानि । तथा च प्रथमभेदोदाहरणमिदम्–'अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी' अत्र पतिव्रतागुणेन गङ्गागुणवर्णनम् । तृतीयोदाहरणं यथा—

'काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ।
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः' ॥ इति ॥

अत्र पलायनपरिपन्थिपादमार्दवदोपेण धातुर्निन्द्यत्वदोषो वर्णितः । चतुर्थभेदो-

---

पाँचवें भेद को अनुक्तवैधर्म्यरूप व्यतिरेक के अन्तर्गत माना है ॥ १०० ॥

उल्लास अलंकार का वर्णन किया जाता है—किसी एक पदार्थ के गुण वा दोप आदि के वर्णन से दूसरे पदार्थ में गुण वा दोष की प्रतीति होने को उल्लास कहते हैं । इसके चार भेद होते हैं । एक के गुणवर्णन से दूसरे में गुण की प्रतीति होने पर एक भेद, गुण से दोष की प्रतीति में दूसरा भेद, दोष से दोष के वर्णन में तृतीय भेद, दोष से गुण के वर्णन में चतुर्थ भेद होता है । 'तद्भाग्यं' यह श्लोकार्ध दूसरे भेद का उदाहरण है । यदि सम्पत्ति सत्पुरुषों के उपभोग में नहीं आती है तो इसमें सम्पत्ति का ही मन्द भाग्य जानना चाहिए । यहां सज्जनों के गुण से धन में 'सज्जनों के उपभोग में न आना' यह दोष बतलाया । अतः उल्लास अलंकार है । अन्य भेदों के उदाहरण कुवलयानन्द में दिये गये हैं । प्रथम भेद का उदाहरण देखिए–गङ्गा चाहती है कि पतिव्रता स्त्री के स्थान से मैं कृतार्थता को प्राप्त करूं । यहां पतिव्रता के गुण से गङ्गा के गुण का वर्णन है । तृतीय भेद का उदाहरण देखिए—हे राजन् ! आपके शत्रुओं की स्त्रियाँ भागने में असमर्थ होती हुई ब्रह्मा की निन्दा करती हैं कि ब्रह्मा ने हमारे स्तनों की कठिनता हमारे चरणों में क्यों नहीं रख दी । यहां चरणों के कोमलतारूप दोष से ब्रह्मा के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तद्गुणः स्वगुणत्यागादन्यतः स्वगुणोदयः ।
पद्मरागारुणं नासामौक्तिकं तेऽधराश्रितम् ॥ १०२ ॥

दाहरणं यथा--'लाभोऽयमेव भूपालसेवकानां न चेद्वधः' इत्यत्र राज्ञः क्रौर्यदोषेण सेवकानां वधाभावो गुणो वर्णित इति ॥ १०१ ॥

तद्गुणं निरूपयति--तद्गुण इति । स्वस्य गुणस्तस्य त्यागात् । अन्यतोऽन्यस्मात् । स्वस्मिन् गुणोदयो रूपादिगुणप्राप्तिः । तद्गुणोऽलङ्कारः तस्याप्रकृतस्य गुणो यत्र सः । स्वगुणत्यागपूर्वकान्यदीयगुणग्रहणं तद्गुण इति भावः । गुणग्रहणं च जपाकुसुमादिवद् भवति । गुणशब्दोऽत्र रूपवचनः 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूत्रे वृकोदरे' इति कोशवचनात् । उल्लासे तु गुणान्तरस्य पावनत्वादिगुणस्याधानं भवति । न नीलरक्तादिगुणस्येति भेदः । मीलिते धर्मिणोऽपि तिरस्कारः । सामान्ये चापरित्यक्तनिजगुणस्यापृथक्प्रतिभासः, इह तु गुणमात्रस्यैव तिरस्कारो धर्मिणश्च पृथगवभास इति भेदः । भ्रान्तिमति स्मर्यमाणस्यारोपः । अत्र तु गृह्यमाणस्येति भेदः । उदाहरति--पद्मेति । आधाराश्रितं रक्तवर्णाधरौष्ठसंसक्तं ते नासामौक्तिकं पद्मरागवद्रक्तमणिवदरुणं रक्तमस्ति । अत्र नासामौक्तिकस्य श्वेतगुणत्यागेनाधरगुणरक्तताग्रहणवर्णनेन लक्षणसंगतिः ॥ १०२ ॥

---

दोष का वर्णन है । चतुर्थ भेद का उदाहरण यह है--राजा ने अपने सेवकों का वध नहीं किया यही बहुत लाभ है । यहां राजा के क्रूरतारूपी दोष से वध न होना रूप गुण का वर्णन है ॥ १०१ ॥

तद्गुण का स्वरूप यह है कि अपने गुण (नील, पीत आदि रङ्ग) का त्याग करके जहां अन्य के गुण का ग्रहण हो वहां तद्गुण अलंकार होता है । 'पद्मरागा०' यह उदाहरण है । हे कान्ते ! तेरा नासामौक्तिक अधरोष्ठ के सम्बन्ध से लालमणि के रूप को धारण करता है । यहाँ मोती ने अपने श्वेत गुण को छोड़ कर नायिका के अधर की रक्तता को ग्रहण किया अतः तद्गुण है । उल्लास अलंकार में पावनत्वादि गुण का ग्रहण किया गया है; नील, पीत आदि गुण का ग्रहण नहीं किया, यह परस्पर का भेद है । मीलित अलंकार में धर्मी का भी स्वरूप नहीं मालूम पड़ता, सामान्य में त्याग के विना भी अपने गुण का भिन्न रूप से ज्ञान नहीं होता । यहां तो गुणमात्र का त्याग और धर्मी का ज्ञान होता है अतः आपस में भेद जानिए । यह अलंकार भ्रान्तिमान् अलंकार के अन्तर्गत भी नहीं हो सकता क्योंकि भ्रान्तिमान् में स्मरण की हुई वस्तु का आरोप होता है यहां नहीं ॥ १०२ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनः स्वगुणसम्प्राप्तिर्विज्ञेया पूर्वरूपता ।
हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १०३ ॥
यद्वस्तुनोऽन्यथारूपं तथा स्यात्पूर्वरूपता ।
दीपे निर्वापिते ह्यासीत्काञ्चीरत्नैरहर्महः ॥ १०४ ॥

---

पूर्वरूपतां लक्षयति—पुनरिति । पुनरन्यगुणसम्बन्धानन्तरमपि । स्वगुणस्य संप्राप्तिर्लाभः पूर्वरूपतालङ्कारः । अन्यगुणसम्बन्धनिरसनपूर्वकं पुनः स्वगुणलाभकथनत्वं पूर्वरूपत्वम् । उदाहरति—हरेति । हरस्य नीलकण्ठस्य कण्ठांशुभिर्नीलकिरणैर्लिप्तोऽपि नीलवर्णमाप्तोऽपीति भावः । शेषः शेषाहिः । हे राजन् ! त्वद्यशसा त्वत्कीर्त्या सितः श्वेतवर्ण एवास्ति । अत्र श्वेतवर्णस्य शेषाहेर्हरकण्ठकिरणजन्यनीलत्वनिरसनपुरःसरं पुनः श्वेतगुणप्राप्तिकथनात्पूर्वरूपता ॥ १०३ ॥

प्रकारान्तरेण पूर्वरूपतां कथयति—यदिति । पुनरित्यस्यानुवृत्तिः । वस्तुनः पदार्थस्य यदन्यथारूपमुच्छिन्नरूपं वस्तु पुनस्तद्रूपं तथा पूर्ववदेव स्यात्तदा पूर्वरूपता ज्ञेया । वस्तुनाशकथनपूर्वकवस्त्वन्तरजन्यतत्कार्यकथनत्वं पूर्वरूपत्वम् । उदाहरति—दीप इति । दीपे निर्वापिते शान्तिं नीतेऽपि । काञ्चीरत्नै रशनास्थमणिकान्तिभिः । अहर्महो दिनसम्बन्धि तेजः प्रकाश इति यावत् । आसीत् । अत्र दीपविनाशकथनेऽपि काञ्चीहीरकैर्दीपकप्रकाशकथनात्पूर्वरूपता । पूर्वत्र तु न गुणोच्छेदः किं त्वन्यभावः । अत्र तूच्छेद एवेति द्वयोर्भेदः ॥ १०४ ॥

---

पूर्वरूपता का लक्षण देखिए—अपने पर आई हुई दूसरे की क्रान्ति को दूर करके पुनः अपना गुण प्रकट करने को पूर्वरूपता कहते हैं । 'हरकण्ठांशु०' इसका उदाहरण है । श्वेतवर्ण शेषनाग नीलकण्ठ ( शिव ) के नीले कण्ठ में लिपट जाने के कारण नील वर्ण को प्राप्त हो चुका तथापि हे राजन् ! वह आपकी कीर्त्ति से पुनः अपने श्वेत वर्ण को प्राप्त करता है । कवियों ने कीर्त्ति का रङ्ग श्वेत ही माना है । राजा की कीर्त्ति सब स्थानों पर व्याप्त है यह इसका भावार्थ समझना चाहिए । यहां नीलवर्ण को दूर कर के पुनः शेषनाग में सितवर्णता ( सफेदी ) बतलाने से लक्षण समन्वय समझिये ॥ १०३ ॥

पूर्वरूपता का दूसरा लक्षण यह है—किसी वस्तु के नष्ट हो जाने पर भी उस वस्तु का कार्य नष्ट नहीं हो तो दूसरी पूर्वरूपता होती है । दीपक को शान्त करने पर भी कान्ता के काञ्चीरत्नों से प्रकाश बना ही रहा । दीपक के शान्त होने से अन्धकार होना चाहिए । किन्तु मणियों द्वारा प्रकाश की सत्ता बतलाने से पूर्वरूपता है । प्रथम लक्षण में गुण का सर्वथा विनाश नहीं था अतः आपस में भेद है ॥ १०४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।
विशन्नपि रवेर्मध्यं शीत एव सदा शशी ॥ १०५ ॥
प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ।
कर्णोत्पलानि दधते कटाक्षैरपि नीलताम् ॥ १०६ ॥
अवज्ञा वर्ण्यते वस्तु गुणदोषाक्षमं यदि ।

---

अतद्गुणं निरूपयति—संगतेति । संगतः स्वसंबद्धो योऽन्यस्य पदार्थस्य गुणस्तस्यानङ्गीकारमग्रहणमतद्गुणमलंकारमाहुः । 'अन्यगुणसम्बन्धेऽपि तद्गुणाग्रहणमतद्गुणम् । उदाहरति–विशन्निति । रवेः सूर्यस्य मध्यं विशन् प्रविशन्नपि शशी चन्द्रः सदा शीतः शीतल एव । चन्द्रस्य सूर्यसंनिहितगमनमेकराशिस्थे चन्द्रे भवति । अत्र सूर्यसम्बन्धेन चन्द्रस्य तापजनकताग्रहणमुचितं तथापि तदनङ्गीकारवर्णनेन लक्षणसंगतिः ॥

अनुगुणं प्रदर्शयति—प्रागिति । परसंनिधेः परसामीप्यात् । प्राक्सिद्धस्य पूर्वस्थितस्यैव स्वगुणस्योत्कर्षं आधिक्यमनुगुणोऽलंकारः । 'प्राक्सिद्धिः स्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति पाठं मत्वा केचित्प्राक्सिद्धिमलंकारमाहुः । उदाहरति—कर्णेति । नीलानि कर्णोत्पलानि कटाक्षैरपि नीलतां नीलत्वोत्कर्षं दधते धारयन्ति । अत्र कर्णावतंसीकृतनीलकमलानां कटाक्षैरतिनीलतापादनात्प्राक्सिद्धस्वगुणोत्कर्षवर्णनेनानुगुणोऽलंकारः ॥ १०६ ॥

अवज्ञां व्याचष्टे—अवज्ञेति । यदि गुणदोषयोरक्षममयोग्यं वस्तु वर्ण्यते तदाऽवज्ञालंकारः । अन्यगुणदोषाभ्यामन्यत्र गुणदोषौ न स्यातां तदावज्ञेति भावः । अयम-

---

अतद्गुण का निरूपण यह है—दूसरे का सम्बन्ध होने पर भी उसके गुण का ग्रहण न करना अतद्गुण होता है । 'विशन्नपि' श्लोकार्ध इसका उदाहरण है । सूर्य के मध्य में प्रविष्ट होता हुआ भी चन्द्रमा शीतल ही रहता है । यहां सूर्य के साथ चन्द्रमा का सम्बन्ध होने पर भी चन्द्रमा में उष्णता न होने से अतद्गुण होता है ॥ १०५ ॥

अनुगुण का रूप देखिए—दूसरे के सम्बन्धसे अपने गुण की वृद्धिको अनुगुण कहते हैं । 'कर्णोत्पलानि' इसका उदाहरण है । कर्ण में लगाये हुए नीलवर्ण के कमल कटाक्षों से अधिक नीलेपन को प्राप्त करते हैं । यहां नीले कमलों में कटाक्षों के कारण अधिक नीलता बतलाने से अनुगुण अलङ्कार है ॥ १०६ ॥

अवज्ञा का वर्णन यह है—किसी एक के गुण वा दोष से दूसरे को हानि वा लाभ न प्राप्त हो सके तो अवज्ञा समझना चाहिए । यह अलंकार उल्लास का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

म्लायन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥ १०७ ॥
प्रश्नोत्तरं क्रमेणोक्तौ स्यूतमुत्तरमुत्तरम् ।
यत्राऽसौ वेतसी पान्थ तत्रासौ सुतरा सरित् ॥ १०८ ॥

लङ्कारः उल्लासालङ्कारविपर्ययरूपः । उदाहरति--म्लायन्तीति । यदि पद्मानि कमलानि चन्द्रं दृष्ट्वा म्लायन्ति संकुचन्ति । तदाऽमृतद्युतेश्चन्द्रस्य का हानिः का क्षतिः स त्वमृतद्युतिरेवास्ति । अत्र म्लायन्तीति पद्मदोषेण चन्द्रस्य दोषालाभवर्णनादवज्ञालक्षणसङ्गतिः ॥ १०७ ॥

प्रश्नोत्तरं निरूपयति--प्रश्नेति । यत्र तयोः प्रश्नोत्तरयोरुक्तौ कथने क्रमेण क्रमशः उत्तरमुत्तरं यावत् । अग्रे इति भावः । उत्तरं प्रतिवचनं स्यूतं संलग्नं तत्र प्रश्नोत्तरमलङ्कारः । ग्रन्थान्तरेऽयमुत्तरालङ्कारनाम्ना व्यपदिश्यते । अतः केचित् 'प्रश्नोत्तरक्रमेणोक्तौ' इति पाठमङ्गीकुर्वन्ति । यथा--प्रश्नोत्तरयोः क्रमेणोक्तौ यत्र स्यूतं संलग्नमुत्तरं प्रतिवचनमस्ति तत्रोत्तरमलङ्कार इति । रसगङ्गाधरे चास्येमे भेदाः-उन्नेयप्रश्नरूपः-निबद्धप्रश्नरूपश्चेति द्वौ भेदौ । द्विविधोऽप्ययं प्रश्नोत्तरयोरन्यतरस्योभयोश्च साभिप्रायत्वेन निरभिप्रायत्वेन च चतुर्विध इत्यष्टधा । उन्नेयप्रश्नरूपं भेदमुदाहरति--यत्रेति । हे पान्थ पथिक ! यत्रासौ वेतसी वानीरवृक्षस्तत्र सरिन्नदी सुतरा सुखेन तरितुं योग्या । सरित्तरणमार्गं पृच्छन्तं पान्थं प्रति 'यत्रासौ वेतसी' इत्युत्तरमिति

---

विरोधी है । 'म्लायन्ति' यह श्लोकार्ध इसका उदाहरण है । कमल यदि चन्द्रमा को देखकर म्लान ( संकुचित ) होते हैं तो इससे चन्द्रमा की कोई हानि नहीं । वह तो अमृतद्युति नाम से ही विख्यात रहेगा । यहां पद्मों के संकोचरूपी दोष से चन्द्रमा की कोई हानि नहीं बतलाई गई, अतः लक्षणसमन्वय होता है ॥ १०७ ॥

प्रश्नोत्तर अलंकार यह है—प्रश्नोत्तररूप वाक्य में जहां गुप्त प्रश्न का उत्तर दिया जावे वहां प्रश्नोत्तर अलंकार होता है । दूसरे ग्रन्थों में इस अलंकार का नाम उत्तर रक्खा गया है । उनके मत में 'प्रश्नोत्तरक्रमेणोक्तौ' यह पाठ मानना चाहिए । रसगंगाधर में इसके आठ भेद माने गये हैं—उन्नेयप्रश्न, निबद्धप्रश्न ये दो भेद हैं । ये दोनों भेद प्रश्न वा प्रश्नोत्तर के निरभिप्राय वा साभिप्राय के कारण आठ भेद होते हैं । यथा—साभिप्रायोन्नेयप्रश्न, निरभिप्रायोन्नेयप्रश्न, साभिप्रायनिबद्धप्रश्न, निरभिप्रायनिबद्धप्रश्न, साभिप्रायोन्नेयप्रश्नोत्तर, निरभिप्रायोन्नेयप्रश्नोत्तर, साभिप्रायनिबद्धप्रश्नोत्तर, निरभिप्रायनिबद्धप्रश्नोत्तर । 'यत्रासौ वेतसी' यह उन्नेयप्रश्न का उदाहरण है । नदी की अगाधता को पूछने वाले पान्थ को कामिनी ने उत्तर दिया कि हे पान्थ !

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पिहितं परवृत्तान्तज्ञातुरन्यस्य चेष्टितम् ।
प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ १०९ ॥
व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम् ।

---

स्पष्टार्थः । अत्र पान्थस्य सरित्तरणमार्गप्रश्न उन्नीयते । अत्रेदमाकूतम्—कामुकः पान्थः सङ्केतस्थलं पप्रच्छ । तदुत्तरे वेतसीलतामण्डपसंकेतस्थलं कामयमाना कामिनी कथितवतीत्यङ्गीकाररूपमुत्तरं ज्ञेयम् । अत्रान्यव्यपोहे तात्पर्याभावात्परिसंख्यातो भेदः । न चानुमानान्तर्भावः साध्यसाधनयोर्द्वयोरभावात् । न च काव्यलिङ्गम् उत्तरस्य प्रश्नं प्रत्यजनकत्वात् ॥ १०८ ॥

पिहितं लक्षयति—पिहितमिति । परस्यान्यस्य वृत्तान्तस्य वृत्तस्य ज्ञाता वेदिता तस्यान्यस्य चेष्टितं परकीयवृत्तज्ञानानुगुणक्रिया पिहितमलङ्कारः । गुप्तपरकीयवृत्तज्ञानानुगुणक्रिया पिहितमिति भावः । उदाहरति—प्रिय इति । प्रातः प्रातःकाले प्रिये स्वामिनि गृहागते गेहमायाते सति कान्ता रमणी तल्पं शय्यामकल्पयत् कल्पितवती । त्वं रात्रावन्यत्र जागरणेन श्रान्तोसि, अधुना स्वपिहीति भावः । अत्र प्रियस्य सपत्नीसंसर्गं बुध्यमाना कान्ता रात्रिजागरणज्ञानानुकूलां चेष्टां चकारेति लक्षणसमन्वयः ॥ १०९ ॥

व्याजोक्तिं प्रदर्शयति—व्याजेति । शङ्कमानस्य गुप्तवृत्तं वितर्कयतः पुरुषस्य । छद्मना व्याजेन वस्तुगोपनं वृत्तगोपनं व्याजोक्तिः । व्याजोक्तिरित्यन्वर्थेयं संज्ञा ।

---

जहां यह बेंत का कुञ्ज है वहां यह नदी गहरी नहीं है, वहां तुम इसे पार कर सकते हो । यहां पान्थ ने नदी की गहराई पूछी यह प्रतीत होता है । गुप्तप्रश्न यह है कि कामुक पान्थ ने संकेत-स्थल पूछा और कामिनी ने उत्तर में लतामण्डप को बतलाकर कामकेलि की स्वीकृति दी । परिसंख्या में वस्तु का एक स्थल में निषेध भी किया जाता है, यहां नहीं । अनुमान में साध्य और साधन इन दोनों की स्थिति रहती है, यहां नहीं ॥ १०८ ॥

पिहित का स्वरूप यह है—दूसरे के गुप्त आचरण को चेष्टाद्वारा प्रकट करने पर पिहित अलंकार होता है । 'प्रिये गृहागते' यह उदाहरण है । प्रातःकाल में पति के गृह आ जाने पर कान्ता ने शय्या बिछा दी । भावार्थ यह हुआ कि आपने मेरी सपत्नी के घर मे रात्रि भर जागरण किया है अतः श्रान्त हो गये हैं । अब शयन कीजिये । यहां नायक की गुप्त चेष्टा को कामिनी ने शय्या बिछा के प्रकट कर दिया । अतः पिहित अलंकार है ॥ १०९ ॥

व्याजोक्ति का निर्वचन यह है—गुप्त वृत्त की शंका को किसी छल से निवृत्त

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सखि पश्य गृहारामपरागैरस्मि धूसरा ॥ ११० ॥
वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् ।
मुञ्च मानं दिनं प्राप्तं मन्द नन्दी हरान्तिके ॥ १११ ॥

केनापि कारणेन गुप्तवृत्तं शङ्कमानं प्रति यत्र व्याजेन वृत्तगोपनं तत्रायमलङ्कार इति भावः। उदाहरति—सखीति। हे सखि! अहं गृहारामपरागैरुद्यानधूलिभिः धूसरा मलिनास्मीति त्वं पश्य विलोकस्व। चौर्यरतलग्नधूलिधूसरा नास्मीति भावः। अत्र चौर्यरतभूपृष्ठलग्नधूलिं शङ्कमानां सखीं प्रति नायिकया गृहारामशोधपरागधूसराहमस्मीति छद्मना चौर्यरतगोपनं कृतमिति व्याजोक्तिः। अपह्नुतौ निह्नवकारिणो विषयस्यानभिधानान्नान्तर्भावः। इतोऽग्रे कुवलयानन्दे—गूढोक्ति—विवृतोक्ति—युक्ति—लोकोक्ति—छेकोक्त्यलङ्कारा दर्शिताः ॥ ११० ॥

वक्रोक्तिं लक्षयति—वक्रोक्तिरिति। श्लेषश्च काकुश्चेति ताभ्यां श्लेषकाकुभ्यां यत्र वाच्यार्थान्तरस्य कल्पनं तत्र वक्रोक्तिः। अन्याभिप्रायेणोक्तं वाक्यमन्यार्थकतया श्लेषेण काका वा योज्यते तदा वक्रोक्तिरिति भावः। उदाहरति—मुञ्चेति। कामुकः कान्तामुवाच—हे प्रिये! दिनं प्राप्तं दिनोदयो जातः। अतो मानं मुञ्च त्यजेति। कान्ता च शब्दश्लेषेण नन्दिनं प्राप्तं मा मुञ्चेत्यर्थान्तरं संयोज्योत्तरवती—मन्द मूढ! नन्दी वृषभः। हारान्तिके शिवनिकटे अस्ति। यदि सोऽत्र भवेत्तदा न मुञ्चेयमिति। तस्यात्राभावात्कथं तं मुञ्चेयमिति भावः। अत्र सभङ्गश्लेषेणार्थान्तरकल्पनाद् वक्रोक्तिः

कर देने पर व्याजोक्ति होती है। 'सखि! पश्य' यह श्लोकार्ध इसका उदाहरण है। हे सखि! मैं अपने बगीचे की धूल से मलिन हो रही हूँ, यह तू देख, अर्थात् मैं गुप्त सम्भोग में धूलि से मलिन नहीं हुई हूँ। किन्तु बगीचे की सफाई के कारण मेरी देह पर धूलि लग गई है। यहां नायिका ने सखी को संभोगधूलि की शंका को मिटा दिया अतः व्याजोक्ति है। इसके आगे कुवलयानन्द में—गूढोक्ति, विवृतोक्ति, युक्ति, लोकोक्ति और छेकोक्ति अलंकार बतलाये गये हैं ॥ ११० ॥

वक्रोक्ति यह है—जहां श्लेष वा काकु (उक्तिविशेष) के कारण अन्य अभिप्राय के वाक्य का दूसरा अभिप्राय समझा जावै वहां वक्रोक्ति होती है। 'मुञ्च मानम्' यह श्लोकार्ध श्लेषवक्रोक्ति का उदाहरण है। कामुक कान्ता से कहता है कि हे प्रिये! प्रातःकाल हो गया, अब तो मान को छोड़कर कृपा करो। कान्ता ने इस वाक्य का श्लेष के बल से 'नन्दिकेश्वर आ गये इसे मत छोड़ो' यह अर्थ समझकर उत्तर दिया कि हे मूर्ख! नन्दिकेश्वर तो शिव के निकट हैं। यदि नन्दी यहां होवै तो उसे मैं पकड़ूं। यहां श्लेष से एक वाक्य का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वभावोक्तिः स्वभावस्य जात्यादिषु च वर्णनम् ।
कुरङ्गैरुत्तरङ्गाक्षि स्तब्धकर्णैरुदीक्ष्यते ॥ ११२ ॥
भाविकं भूतभाव्यर्थसाक्षाद्दर्शनवर्णनम् ।

---

श्लेषमूला । काकुवक्रोक्तिर्यथा—

'काले कोकिलवाचाले सहकारमनोरमे ।
कृतागसः परित्यागात्तस्याश्चेतो न दूयते' ॥

इत्यत्र न दूयते, अपि तु दूयत एवेति काका वक्रोक्तिः । अयमलङ्कारः शब्दनिष्ठ इति दर्पणादौ । आचार्यकुन्तको वक्रोक्तिजीवितग्रन्थे सर्वेषामलङ्काराणां वक्रोक्त्यलङ्कारे समावेशं चक्रे । 'वक्रोक्तिः काव्यजीवितम्' इत्यपि च तेन तत्रैवोक्तम् । वक्रोक्तिजीवितग्रन्थस्य तृतीयोन्मेषे वाक्यवैचित्र्यवक्रता द्रष्टव्या ॥ १११ ॥

स्वभावोक्तिं निरूपयति—स्वभावोक्तिरिति । जात्यादिषु हरिणत्वादिषु सत्सु यत्स्वभावस्य क्रियारूपादेः वर्णनं तत् स्वभावोक्तिः । स्वभावस्य स्वाचरणस्य, उक्तिः स्वभावोक्तिः । प्राकृतिकवर्णनमत्रालङ्कारे भवतीति ज्ञेयम् । उदाहरति—कुरङ्गैरिति । उत्तरङ्गे तरङ्गायमाणे अक्षिणी यस्या असौ तत्सम्बुद्धौ हे उत्तरङ्गाक्षि ! स्तब्धौ निश्चलौ कर्णौ येषां ते तैर्निश्चलकर्णैः कुरङ्गैर्मृगैः । उदीक्ष्यते उद्वीक्ष्यते । मृगाः कौतुकं स्तब्धकर्णाः । सन्त एव पश्यन्तीति स्तब्धकर्णत्वं मृगजातिस्वभाववर्णनमिति लक्षणसङ्गतिः । एवं क्रियास्वभाववर्णनमपि ज्ञेयम् ॥ ११२ ॥

भाविकं दर्शयति—भाविकमिति । भूता अतीता भाविनः अनागताश्च येऽर्थाः पदार्थास्तेषां साक्षात्कारस्य वर्णनं भाविकमलङ्कारः । भावः कवेराशयो यत्रास्तीति

---

अन्य अभिप्राय समझकर उत्तर दिया गया है अतः श्लषवक्रोक्ति है । काकुवक्रोक्ति का उदाहरण यह है कि 'वसन्त के समय में निरपराध मुझ नायिका के त्याग से क्या वह नायक दुखी नहीं होगा, अपि तु दुखी होगा ही' । आचार्य कुन्तकने वक्रोक्तिजीवित ग्रन्थ में वक्रोक्ति अलङ्कार को ही प्रधान माना है । इसके तृतीय उन्मेष में वाक्यवैचित्र्यवक्रता देखनी चाहिए ॥ १११ ॥

स्वभावोक्ति का लक्षण यह है—किसी पदार्थ की स्वाभाविक क्रिया वा रूप के वर्णन में स्वभावोक्ति होती है । 'कुरंगैः' यह इसका उदाहरण है । हे चञ्चलाक्षि ! कान खड़े करके हिरण देखते हैं । कान खड़े करके देखना मृगों का स्वभाव है । अतः स्वाभाविक वर्णन से यहां स्वभावोक्ति है ॥ ११२ ॥

भाविक अलङ्कार का निरूपण यह है—भूत और भावी पदार्थों को प्रत्यक्षरूप से बतलाने पर भाविक अलङ्कार होता है । कवि की भावना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अलं विलोकयाद्यापि युध्यन्तेऽत्र सुरासुराः ॥ ११३ ॥
देशात्मविप्रकृष्टस्य दर्शनं भाविकच्छविः ।
त्वं वसन् हृदये तस्याः साक्षात्पञ्चेषुरीक्ष्यसे ॥ ११४ ॥
उदात्तमृद्धिश्चरितं श्लाघ्यं चान्योपलक्षणम् ।

भाविकम् । अतीतानागतयोर्वर्त्तमानत्वे भाविकत्वम् । उदाहरति—अलमिति । अत्र स्थले । सुरासुरा देवासुराः । अद्यापि साम्प्रतमपि । युध्यन्ते युद्धं कुर्वन्ति । त्वमलं पर्याप्तम् । विलोकय पश्य । रणभूमिभीषणतादर्शनायातीतयुद्धस्य वर्तमानतया वर्णनम् । अत्रातीतदेवासुरसंग्रामस्य साक्षाद्दर्शनवर्णनाद् भाविकम् । न च प्रसाद-गुणेऽन्तर्भावः । भूतभाविपदार्थप्रत्यक्षतायाः प्रसादाहेतुत्वात् । न चाद्भुतो रसः । अत्र विस्मयस्याभावात् । न चातिशयोक्तिः । अध्यवसायाभावात् । न च भ्रान्ति-मान् । भूतभाविनोर्भूतभावितयैव प्रकाशनात् ॥ ११३ ॥

भाविकच्छविं व्याचष्टे—देशेति । देशेनात्मना वा विप्रकृष्टस्य दूरस्थस्य वस्तुनो दर्शनं यत्र वर्ण्यते तत्र भाविकच्छविरलङ्कारः । दूरस्थस्याप्यर्थस्य सान्निध्यवर्णनेऽय-मलंकारः । भाविकस्य छविरिव छविर्यत्र स भाविकच्छविः । उदाहरति—त्वमिति । अत्र नायकं प्रति दूतीवाक्यम् । त्वं तस्या नायिकाया हृदये मनसि वसन् साक्षा-त्पञ्चेषुः कामः । ईक्ष्यसे दृश्यसे । अत्र विप्रकृष्टाया नायिकाया हृदये नायकस्य कामाभिन्नत्वेन दर्शनाद् भाविकच्छविः ॥ ११४ ॥

उदात्तं निरूपयति—उदात्तमिति । श्लाघ्या प्रशस्या ऋद्धिः सम्पत्तिरुदात्तम् ।

भाविपद का अर्थ है । 'अलं विलोकय' उदाहरण है । इस रणभूमि में देव और असुर आज भी युद्ध करते हैं, आप देखिये । रणभूमि की भीषणता बतलाने के लिये व्यतीत देवासुरसंग्राम को वर्त्तमान बतलाया है । यहां अतीत के वर्णन से भाविक अलंकार है । प्रसादगुण में भूत, भावी पदार्थ नहीं होते । अद्भुतरस में विस्मयजनक वर्णन होता है । अतिशयोक्ति में विषयका निगरण होता है । भ्रान्ति-मान् में भूत, भावी पदार्थों की प्रतीति भूत-भावीरूप से ही होती है । अतः यह भिन्न ही अलंकार माना गया है ॥ ११३ ॥

भाविकच्छवि का लक्षण यह है—दूर में स्थित पदार्थ को निकट बतलाने पर भाविकच्छवि अलंकार होता है । 'त्वं वसन्' यह इसका उदाहरण है । दूती नायक से कहती है कि तुम उस नायिका के हृदय में निवास करने से साक्षात् कामदेव से मालूम पड़ते हो । यहां दूर-स्थित नायिका के हृदय में नायक का निवास बतला कर उसे कामदेव का रूप बतलाया, अतः भाविकच्छवि अलंकार है ॥ ११४ ॥

उदात्त का निरूपण यह है—सम्पत्ति की अधिकता के वर्णन में तथा उत्तम

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सानौ यस्याभवद्युद्धं तद् धूर्जटिकिरीटिनोः ॥ ११५ ॥
अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।
त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः ॥ ११६ ॥

---

श्लाघ्यं चरितं चान्यस्यापरस्योपलक्षणमङ्गं यत्र स्यात्तत्राप्युदात्तम्। उत्कर्षेणादीयते गृह्यते स्मेत्युदात्तम्। 'निष्ठा' (३।२।१०२) इत्यनेन पाणिनिसूत्रेण कर्मणि क्तप्रत्ययः। 'अच उपसर्गात्तः' (७।४।४७) इति सूत्रेण च तादेशः। सम्पदाधिक्यवर्णनमेकमुदात्तम्। महतां चरितस्यान्याङ्गत्वं चापरमुदात्तम्। अत्र द्वितीयमुदाहरति—सानाविति। यस्य हिमालयस्य सानौ शिखरे। धूर्भारभूता। जटिर्जटा यस्य स धूर्जटिः शिवः। 'जट कट संघाते' (भ्वा. प. से.) इति धातोः 'सर्वधातुभ्यः' (उणा ४।११८) इतीन्प्रत्ययः। 'जटिर्जटा' इति द्विरूपकोशः। किरीटी अर्जुनः। तयोस्तद् महाभारतप्रसिद्धं युद्धं संगरोऽभवत्। सोऽयं हिमालयो वर्तते। अत्र रुद्रपार्थयोर्युद्धस्य हिमालयाङ्गत्वेन वर्णने तस्याङ्गिन उत्कर्षः प्रतीयते इति द्वितीयमुदात्तम्। समृद्धेरुदाहरणमन्यत्र दृश्यम् ॥ ११५ ॥

अत्युक्तिं वर्णयति—अत्युक्तिरिति। अद्भुतं विस्मयजनकम्। अत्र आश्चर्यार्थेऽव्ययम्। तस्य भवनम्। 'अदि भुवो डुतच्' (उणा. ५।१) इत्यनेन डुतच् प्रत्ययः। अद्भुतं च तदतथ्यं चासत्यं च तत्तादृशं शौर्यौदार्यादीनां वर्णनमत्युक्तिरलंकारः। लोकातीतशौर्यादिवर्णनमत्युक्तिरिति भावः। उदाहरति—त्वयीति। हे राजेन्द्र! त्वयि दातरि वदान्ये सति कल्पशाखिनोऽपि कल्पवृक्षा अपि याचका जाताः, अथवा

---

पुरुषों के चरित्र के अङ्गरूप से वर्णन में उदात्त अलंकार होता है। उत्कर्षरूप से किसी पदार्थ का ग्रहण करना उदात्तपद का यौगिका अर्थ है। उत्तम पुरुषों के चरित्रवर्णन में 'सानौ यस्य' यह श्लोकार्ध उदाहरण है। जिस हिमालय के एक शिखर पर शंकर तथा अर्जुन का युद्ध हुआ था, यह वह हिमालय है। यहां कविने प्रस्तुत हिमालय के वर्णन में अर्जुन और शंकर के युद्ध को अङ्गरूप से बतला कर हिमालय के उत्कर्ष को प्रस्फुट किया। अतः लक्षणसमन्वय होता है। सम्पत्तिवर्णन का उदाहरण अन्यत्र देखिए ॥ ११५ ॥

अत्युक्ति का वर्णन किया जाता है—अद्भुत तथा असत्य शौर्य वा औदार्य आदिके वर्णन में अत्युक्ति होती है। 'त्वयि दातरि' यह श्लोक इसका उदाहरण है। हे राजेन्द्र! आपके दान से याचकवर्ग भी कल्पवृक्ष बन गये। भाव यह हुआ कि जो याचना करते थे वे भी आज धनिक होकर कल्पवृक्ष के समान

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रसभावतदाभासभावशान्तिनिबन्धनाः ।

याचका अपि कल्पवृक्षा दातारो जाताः। अत्र राज्ञो वदान्यत्वे 'याचका अपि कल्पवृक्षसदृशदातारो जाताः' इति राज्ञो मिथ्यौदार्योक्तिः। याचकानां कल्पवृक्षत्वसमवदान्यत्वाभावात्। शौर्यात्युक्तिरन्यत्र दृश्या। एवमलङ्कारा निरूपिताः ॥११६॥

अथ रसवदाद्यलङ्कारानाह–रसेति। अलंकारप्राधान्ययुगे हि प्रतीयमानार्थप्रतिपादका रसादयो रसवदाद्यलंकारतया स्वीकृताः। रसप्राधान्ययुगे च रसवदादीनां शब्दार्थनिष्ठोपकारजननद्वारा रसोपकारकत्वाभावान्न वास्तविक्यलंकारता। किन्तु गौणस्तत्रालंकारत्वप्रयोगः। रसवदादयोऽलंकाराः काव्यप्रकाशादौ गुणीभूतव्यङ्ग्यान्तर्गताः। एषां क्रमविकासश्चैवम्। यथा भामहकृते काव्यालंकारे—

'प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम्।
द्विप्रकारमुदात्तं च भेदैः श्लिष्टमपि त्रिधा' ॥ इति।

दण्डिनः काव्यादर्शे च—

'प्रेयः प्रियतराख्यानं रसवद् रसपेशलम्।
ऊर्जस्वि रूढाहकांरयुक्तोत्कर्षं च तत् त्रयम्' (२ प० २७५) ॥ इति।

---

दान देने लग गये। राजा के दान से याचक भी कल्पवृक्ष के समान धनिक हो गये, यह राजा के दानका वर्णन असत्य तथा विचित्र है। क्योंकि कल्पवृक्ष के समान राजा भी नहीं हो सकते, अन्य की तो कथा ही क्या? यहां राजा के औदार्य की अत्युक्ति है। शौर्यात्युक्ति को अन्यत्र देखिए। इस ग्रन्थकार के मत से यह अलंकार निरूपण हुआ ॥ ११६ ॥

रसवदादि अलंकारों का निरूपण किया जाता है—अलंकार की प्रधानता के समय में प्रतीयमान रस आदि की प्रतिति रसवदादि अलंकार के रूप में मानी जाती थी। अब रस की प्रधानता के समय में रसवदादि में अलंकार शब्द का प्रयोग गौणरूप से ही माना जाता है। क्योंकि जो रस अलंकारों से भूषित होता है वह स्वयं अलंकाररूप नहीं हो सकता। काव्यप्रकाश में इसीलिए रसवत् आदि को गुणीभूतव्यङ्ग के अन्तर्गत माना है। ध्वन्यालोक में तो रस की प्रधानता होने के कारण रसवत् आदि स्थल में मुख्य अलंकारता ही मानी गई है, यह आगे स्पष्ट होगा। रसवदादिक का क्रमविकास इस प्रकार है—रसवत्, प्रेय, ऊर्जस्वी और समाहित ये चार अलंकार भामह के काव्यालंकार में माने गये हैं। दण्डी ने काव्यादर्श में इन शब्दों का यह अर्थ किया है—रस से उत्पन्न आनन्द-कारक कथन को रसवत्, अत्यन्त प्रिय कथन को प्रेय और अहं-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**रसवत्प्रेयऊर्जस्वत्समाहितमयाभिधाः ॥ ११७ ॥**

एत एवालङ्कारा उद्भटभट्टीयकाव्यालङ्कारचतुर्थवर्गेऽपि स्वीकृताः । ध्वन्यालोके च 'यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलङ्कारताया विषयः' इत्युक्तम् । यथा—

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥
रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्' ॥ (२ उद्यो० ५-६) इति ।

एतेन ध्वनिकारमते रसवदादिष्वलङ्कारत्वप्रयोगो न भाक्त इति सिद्धयति । काव्यप्रकाशे तु 'अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलङ्काराः, इत्यभिधायैषां भावोदयभावसन्धिभावशवलतादीनां च गुणीभूतव्यङ्ग्येऽन्तर्भावः स्वीकृतः । रुय्यकेणालङ्कारसर्वस्वे रसवदादिचतुरलङ्कारेभ्यः पार्थक्येन 'भावोदयो भावसन्धिर्भावशबलता च पृथगलङ्काराः' इत्यादिना त्रयोऽलङ्कारा अधिकाः स्वीकृताः । ततश्चाधस्तनैश्चन्द्रालोकसाहित्यदर्पणकुवलयानन्दकारैश्चैते सप्ताप्यलङ्कारा अभिमताः । रसाः शृङ्गारादयश्च, भावाश्च तयोराभासाश्च रसाभासा भावाभासाश्च, भावशान्तिश्चेति रसभावतदाभासभावशान्तयः, एता निबन्धनानि हेतवो येषां ते तथोक्ताः । रसवत्प्रेयऊर्जस्वत्समाहितं चेति । रसवत्प्रेयऊर्जस्वत्समाहितानि रसवत्प्रेयऊर्जस्वत्समाहितरूपा अभिधा नामानि येषां ते तथोक्ता अलङ्कारा भवन्ति । अयमाशयः—यत्रैको रसो रसान्तरस्य भावस्य वाङ्गं भवति तत्र रसवदलङ्कारः । रसोऽस्तीति रसवत् । उदाहरणं यथा महाभारते

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।

---

कार युक्त वर्णन को ऊर्जस्वी कहते हैं । ये अलङ्कार उद्भटभट्टीय काव्यालंकार के चतुर्थ वर्ग में भी माने गये हैं । ध्वन्यालोक में तो स्पष्ट लिखा है कि जहां रस आदि पदार्थ अन्य वाक्यार्थ के अङ्ग ( उत्कर्षक ) हो जावें तो वहां के अप्रधान होने के कारण अलंकार माने जाते हैं ( २ उ० ५-६ ) । काव्यप्रकाश में इन को गुणीभूतव्यङ्ग्य के अन्तर्गत माना है । राजानक रुय्यक ने अलंकारसर्वस्व में रसवत्, प्रेय, ऊर्जस्वी, समाहित, इन चार के अलावा भावोदय, भावसंधि, भावशबलता ये तीन अलंकार और माने हैं । चन्द्रालोक, साहित्यदर्पण और कुवलयानन्द में ये सातों ही अलंकार लिखे गये हैं । रसवदादि का स्वरूप यह है—जहां एक रस किसी दूसरे रस वा भाव का अङ्ग बन जावें वहां रसवत् अलंकार होता है । 'अयं स रशनोत्कर्षी' यह महाभारत का श्लोक इसका

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः'॥ इति।

अत्र भूरिश्रवसश्छिन्नं हस्तं विलोक्य तद्वधूनां विलाप इति करुणरसः। स च पीनस्तनविमर्दनत्वादिस्मरणोद्दीपितेन विप्रलम्भश्रृङ्गारेण परिपुष्यत इति श्रृङ्गारः करुणस्याङ्गम्। तेन चात्र रसवदलङ्कारः। रसादीनां स्वरूपं षष्ठे मयूखे निरूपयिष्यते। यत्र भावोऽपरस्याङ्गं तत्र प्रेयोऽलङ्कारः। प्रकृष्टप्रियत्वात्प्रेय इति संज्ञा। प्रियशब्दादीयसुन्प्रत्ययः। विभावादिपरिपुष्टा निर्वेदादयस्त्रयस्त्रिंशत्संचारिभावा देवतागुरुराजादिविषयिणी रतिश्च भाव उच्यते।

उदाहरणं यथा—

'कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ! त्रिपुरहर! शम्भो! त्रिनयन!
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्'॥ इति।

अत्र कदा वाराणस्यां दिवसान् नेष्यामीति चिन्ताख्यो व्यभिचारिभावः। शान्तरसस्याङ्गमिति प्रेयोऽलङ्कारः। यत्र रसाभासो भावाभासश्चापरस्याङ्गं तत्रोर्जस्वदलङ्कारः। ऊर्जो बलं तदत्रास्तीत्यूर्जस्वत्। यत्र रसो भावश्चानौचित्येन प्रवृत्तो भवति तत्र रसाभासो भावाभासश्च भवति। ऊर्जस्वदुदाहरणं यथा—

'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम्'॥ इति।

अत्र परस्त्रीसुरतवर्णनेन श्रृङ्गाराभासः। स च राजविषयकरतिभावस्याङ्गमित्यूर्ज-

---

उदाहरण है। मृत भूरिश्रवा की पत्नी अपने पति के हाथ को देखकर विलाप करती है कि यह हाथ मेरे साथ कामकेलि में अग्रसर था। यहां श्रृङ्गार रस का वर्णन करुण रस का अङ्ग है। अतः रसवत् अलंकार है। रसों का वर्णन षष्ठमयूख में किया जावेगा। जहां एक भाव किसी दूसरे पदार्थ का अंग हो वहां प्रेय अलंकार होता है। प्रियशब्द से ईयसुन् प्रत्यय होने पर प्रेय बनता है। निर्वेदादिक तैंतीस संचारी भाव तथा देवता, गुरु और राजविषयक रति को भावध्वनि कहते हैं। 'कदा वाराणस्याममर०' यह प्रेय अलंकार का उदाहरण है। मैं कब गंगातट पर काशी में ध्यानलीन होऊंगा यह चिन्ता नामक भाव की ध्वनि यहां शान्तरस का अंग है अतः प्रेय अलंकार है। जहां रसाभास और भावाभास किसी अन्य के अंग होकर अप्रधान हों तो ऊर्जस्वत् अलङ्कार होता है। अनुचित रूप से रस और भाव के वर्णनमें रसाभास और भावाभास होते हैं 'वनेऽखिलकलासक्ताः' यह ऊर्जस्वत् का उदाहरण है। यहां पर स्त्री के साथ संभोग के

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

भावानामुदयः सन्धिः शवलत्वमिति त्रयः ।

स्वदलङ्कारः । भावस्य प्रशाम्यदवस्था भावशान्तिः । एतस्याः पराङ्गत्वे समाहित-मलङ्कारः । अत्र नपुंसके भावे क्तः । एतस्योदाहरणमिदम्—

'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात्' ॥ इति ।

हे राजन् ! तव वैरिणां मदस्तव दर्शनादेव शान्त इति मदाख्यभावस्य प्रशान्तिः । सा च मदाख्यभावशान्ती राजस्तुतावङ्गभूतेति समाहितमलंकारः । एवमेते चत्वारोऽलंकाराः सोदाहरणा निरूपिताः ॥ ११७ ॥

भावोदयादींस्त्रीनलंकारान् व्याचष्टे—भावानामिति । भावानामुदय उद्गमावस्था भावोदयः । द्वयोर्विरुद्धयोर्भावयोः सन्धिः परस्परस्पर्धा भावसन्धिः । अनेकेषां भावानां शबलत्वं मिश्रत्वं भावशबलता । एतेषां पराङ्गत्वे तदाख्या एवालंकाराः । भावोदयस्य पराङ्गत्वे भावोदयः, भावसन्धेः भावसन्धिः, भावशबलतायाश्च पराङ्गत्वे भावशबलतेति त्रयोऽलंकारा इति ज्ञेयम् । भावोदय उदाह्रियते—

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम्' ॥

हे राजन् ! त्वन्नाम श्रुत्वा ते शत्रवस्त्रस्ता इति त्रासाख्यभावोदयो राजस्तुताङ्गमिति भावोदयोऽलंकारः । भावसन्धेरुदाहरणं यथा—

---

वर्णन से शृङ्गाराभास है और यह राजा की स्तुतिरूपी भाव का पोषक है अतः ऊर्जस्वत् अलंकार है । जहां निर्वेदादि भावों में से किसी भाव की शान्ति किसी अन्य की पोषक हो तो समाहित अलंकार होता है । 'अविरलकरवाल०' यह इसका उदाहरण है । हे राजन् ! आपके दर्शनमात्र से ही शत्रुओं का मद ( गर्व ) शान्त हो गया । यहां मदरूपी भाव की शान्ति राजा की स्तुति की पोषक होने से समाहित अलङ्कार होता है । इस प्रकार चारों अलङ्कारों का निरूपण हुआ ॥११७॥

भावोदय, भावसंधि और भावशवलता का निरूपण यह है—जहां भाव की उत्पत्ति दूसरे की पोषक होकर अंग बने तो भावोदय अलङ्कार होता है । विरुद्ध दो भावों का एक साथ प्रादुर्भाव हो और वह प्रधान वाक्यार्थ का पोषक हो तो भावसंधि अलङ्कार होता है । अनेक भावों के मिश्रण को भावशवलता कहते हैं । और भावशवलता के गुणीभाव को भावशवलता अलंकार कहा है । 'मधुपानप्रवृत्तास्ते' यह भावोदय का उदाहरण है । यहां राजा के नाम को सुनते ही शत्रुगण भयभीत हो गये । यह त्रास नामक भाव का उदय राजा की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अलंकारानिमान् सप्त केचिदाहुर्मनीषिणः ॥ ११८ ॥

---

'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा' ॥ इति ।

अत्रौत्सुक्यलज्जाख्यभावयोः सन्धिः पार्वतीविषयकरतिभावाङ्गमिति भावसन्धिरलंकारः । भावशबलतोदाह्रियते—

'क्वाकार्यं, शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो, कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं पास्यति' ॥ इति ।

अत्र वितर्कौत्सुक्यमतिस्मरणशंकादैन्यधृतिचिन्तानां भावानां मिश्रणाद् भावशबलता । सा च विप्रलम्भश्रृङ्गारस्याङ्गमिति भावशबलतालङ्कृतिः । एते त्रयः पूर्वे च रसवदादयश्चत्वारो मिथो मिलित्वा सप्तालंकाराः केचिन्मनीषिण इमान् पूर्वोक्तान् सप्तालंकारानाहुः कथयन्ति । अत्र केचिदाहुरिमानलंकारान्, न चैते ममाभिमता इति भावः । रसादिरलंकार्यो न त्वलंकारः । तस्य व्यङ्ग्यभूतस्य रसादेः शब्दार्थद्वारान्योपकारकत्वासहत्वान्नालंकारता युक्ता । प्राचीनाचार्यैरुक्तोऽलंकारताप्रयोगो गौणरूपेण स्वीकार्यः । ध्वनिकारमते तु यथाकथंचिद्रसोपकारकत्वमलंकारत्वम् । तेन रसादीनामपि रसोपकारकत्वे वर्तमाने रसवदादिषु युक्तमलंकारत्वम् । काव्य-

---

स्तुति का पोषक होने से अङ्ग है अतः भावोदय अलंकार है । 'जन्मान्तरीणरमणस्याङ्ग०' यह भावसन्धि का उदाहरण है । सलज्जा पार्वती अपने पूर्व जन्म के पति भगवान् शङ्कर के आलिङ्गन के लिये उत्कण्ठित थी । इस वर्णन में उत्कण्ठा और लज्जारूपी दो भावों का साथ ही उदय है और वह पार्वती की स्तुतिरूपी रतिभावपोषक हुआ है अतः भावसन्धि अलंकार है । 'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' यह भावशबलता का उदाहरण है । यहां वितर्क, औत्सुक्य, मति, स्मरण, शङ्का, दैन्य, धृति और चिन्ता नामक भावों का संमिश्रण होने से भावशबलता है और यह भावशबलता विप्रलम्भ श्रृङ्गार रस का परिपोषक होने से अलंकार के रूप को धारण करती है । इस प्रकार रसवत्, प्रेय, ऊर्जस्वत्, समाहित, भावोदय, भावसन्धि और भावशबलता नामक इन सात अलंकारों को कोई-कोई हो विद्वान् मानते हैं, ग्रन्थकार नहीं मानता, क्योंकि रस स्वयं प्रधान-रूप से रहता है । वह अप्रधान होके किसी का अलंकार नहीं हो सकता । प्राचीनाचार्यों ने इनको अलंकार बतलाया सो अब इस उक्ति को गौण मानना चाहिये ।

CC0. Vasishtha Tripathi Collection: Digitized by eGangotri

शुद्धिरेकप्रधानत्वं तथा संसृष्टिसंकरौ।
एतेषामेव विन्यासान्नालङ्कारान्तराण्यमी ॥ ११६ ॥

---

प्रकाशे त्वेषां नालङ्कारता किन्तु गुणीभूतव्यङ्ग्यान्तःपातितेत्यनेकमतानि विविच्य ग्रन्थकारः केचिदिति पदेनालङ्कारतामुदाजहार। प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिः सम्भव ऐतिह्यमित्यष्टौ प्रमाणालङ्काराः कुवलयानन्दे प्रदर्शिताः। एषु प्रमाणेषु प्रथममेकं चार्वाकाः, द्वयं वैशेषिकाः, त्रयं ( शब्देन ) सांख्याः पातञ्जलाश्च; चतुष्कं नैनायिकाः, पञ्चकं प्राभाकराः, षट्कं भाट्टा वेदान्तिनश्च, सर्वमैतिह्यान्तं पौराणिकाश्च मन्यन्ते ॥ ११८ ॥

शुद्ध्यादीनां चतुर्णामलङ्कारान्तरत्वं निराकुरुते—शुद्धिरिति। शुद्धिः, एकप्रधानत्वम्, संसृष्टिः, त्रिविधः संकरश्चेत्यमी अलङ्कारा एतेषां पूर्वोक्तानामलङ्काराणामेव विन्यासात् स्थापनान्नालङ्कारान्तराणि सन्ति। शुद्ध्यादयो हि पूर्वोक्तालङ्कारेष्वेवान्तर्भूता न तु तेभ्यः पृथग्भूताः। विन्यासभेदे स्वरूपभेदानुदयात्। स्वरूपभेदे हि रसानामपि विन्यासभेदे रसान्तरत्वापत्तेः। यत्रैक एवालङ्कारस्तत्र शुद्धिः। द्वयोरलङ्कारयोर्यत्रैकोऽलङ्कारोऽन्योपपादकस्तत्रैकप्रधानत्वम्, तिलतण्डुलन्यायेन यत्र परस्परापेक्षाविरहेण शब्दार्थालङ्काराणां स्थितिस्तत्र संसृष्टिः। 'शब्दालङ्काराणामर्थालङ्काराणामु-

---

ध्वनिकार के मत से इनमें वास्तविक अलङ्कारता है और काव्यप्रकाश में इनको गुणीभूतव्यङ्ग्य के अन्तर्गत माना है। इन सब मतों को देखकर ग्रन्थकार ने अपने ग्रन्थ में केवल इनका दिग्दर्शन करा दिया। कुवलयानन्द में प्रत्यक्ष, अनुमान, उपमान, शब्द, अर्थापत्ति, अनुपलब्धि, सम्भव और ऐतिह्य ये आठ प्रमाणालङ्कार और माने हैं। इनमें चार्वाक केवल प्रत्यक्षको, वैशेषिक प्रत्यक्ष और अनुमान को, सांख्य और पातञ्जल प्रत्यक्ष, अनुमान और शब्द को, नैयायिक प्रत्यक्ष, अनुमान, उपमान और शब्द को, प्राभाकर मीमांसक पांच प्रमाणों को, भट्टमत के मीमांसक तथा वेदान्ती लोग छः प्रमाणों को तथा पौराणिक लोग आठों प्रमाणों को मानते हैं ॥ ११८ ॥

शुद्धि आदि में अलङ्कारत्व का निरास किया जाता है—शुद्धि, एकप्रधानत्व, संसृष्टि और सङ्कर ये अलङ्कार उक्त अलङ्कारों के ही विन्यासविशेष ( रचनाप्रकार ) से बन जाते हैं अतः उनसे भिन्न इनको नहीं मानना चाहिये। जहां एक ही अलङ्कार हो वहां शुद्धि होती है। दो अलङ्कारों में से जहां एक की प्रधानता हो तो वहां एकप्रधानता होती है। तिल और चावल के न्याय की तरह जहां शब्द व अर्थ के अलंकार आपस में निरपेक्ष रूप से रहें वहां संसृष्टि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भयेषां च परस्परानपेक्षया स्थित्या त्रिविधैषा । अर्थालङ्कारसंसृष्टेरुदाहरणमिदम्—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता' इति ।

अत्रोत्प्रेक्षोपमयोस्तिलतण्डुलन्यायेन परस्परानपेक्षया स्थित्यार्थालङ्कारसंसृष्टिः । नीरक्षीरन्यायेन यत्रालङ्काराणां स्थितिस्तत्र सङ्करः । अलङ्काराणामङ्गाङ्गिभावत्वेऽङ्गाङ्गिभावसंकरः, एकाश्रयस्थितावेकवाचकानुप्रवेशसङ्करः, सन्दिग्धत्वे च संदेहसङ्कर इति त्रयो भेदाः साहित्यदर्पणे । समप्राधान्यसङ्करः, सङ्करसङ्करश्चेत्यधिकं कुवलयानन्दे । अङ्गाङ्गिभावसङ्करोदाहरणं यथा—

'अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः' इति ।

अत्र सन्ध्यादिवसपदाभ्यां नायकनायिकाप्रतीतेः समासोक्तिः । इयं च अनुरागे सत्यपि न समागम इति विशेषोक्तेरङ्गमित्यङ्गाङ्गिभावसङ्करः । 'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इवेत्युपमा, उत चन्द्र एवेति रूपकमिति सन्देहः । साधक-

---

होती है । तिल और चावलों को मिलाने पर भी उनका तादात्म्य रूप से मिलन नहीं होता । वे पुनः अलग २ किये जा सकते हैं । इसीको तिलतण्डुलन्याय कहते हैं । 'लिम्पतीव तमोऽङ्गानि' यह अर्थालङ्कारों की संसृष्टि का उदाहरण है । यहां अन्धकार का वर्णन है कि आकाश मानों कज्जल को वरसाता है । इस अन्धकार में नेत्र दुर्जन की सेवा की तरह निष्फल हो गये । यहां उत्प्रेक्षा और उपमा की परस्पर निरपेक्ष स्थिति होने से संसृष्टि अलङ्कार है । नीरक्षीरन्याय से अलंकारों की एक स्थान में स्थिति को संकर कहते हैं । दूध और जल को मिलाने पर वह पुनः अलग-अलग नहीं हो सकता, इसको नीरक्षीर-न्याय कहते हैं । इसी प्रकार अलंकारों की स्थिति हो तो संकर हो जाता है । अङ्गाङ्गिभाव संकर, एकवाचकानुप्रवेश, संदेहसंकर ये तीन भेद साहित्यदर्पण में लिखे गये हैं । इनसे अधिक समप्राधान्यसंकर और संकरसंकर कुवलयानन्द में लिखे हैं । 'अनुरागवती सन्ध्या' यह अङ्गाङ्गिभाव संकर का उदाहरण है । यहीं सन्ध्या और दिवसपदों से नायिका और नायक की प्रतीति होने से समासोक्ति होती है । यह समासोक्ति, अनुराग होने पर भी आपस में सम्मिलन नहीं होता इस कारण के होने पर भी कार्याभावरूपो विशेषोक्ति को परिपोषक होने से अङ्ग बन जाती है, अतः अङ्गाङ्गिभाव संकर है । 'मुखचन्द्रं पश्यामि' यह संदेहसंकर का उदाहरण है । मुख चन्द्रमा के समान है यह उपमा है, अथवा मुखरूपी चन्द्रमा यह रूपक है, यहां इन दोनों अलंकारों के सन्देह से सन्देहसंकर अलंकार है । अन्य भेदों के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सर्वेषां च प्रतिद्वन्द्वप्रतिच्छन्दभिदाभृताम् ।
उपाधिः क्वचिदुद्भिन्नः स्यादन्यत्रापि सम्भवात् ॥ १२० ॥
माला परम्परा चैषां भूयसामनुकूलके ।
मनुष्ये भवतः क्वापि ह्यलङ्काराङ्गतां गते ॥ १२१ ॥

---

बाधकप्रमाणाभावात् । एवमन्येषामुदाहरणान्यन्यत्र दृश्यानि ॥ ११९ ॥

दूषणान्तरमाह—सर्वेषामिति । प्रतिद्वन्द्वो विरोधितया न्यूनता, प्रतिच्छन्द आधिक्यं ताभ्यां भिदां भेदं बिभ्रतीति तेषां न्यूनाधिक्यभेदवताम् । यद्वा प्रतिद्वन्द्वं विसदृशं प्रतिच्छन्दः सदृशं ताभ्यां भिन्नानां सर्वेषामलङ्काराणामुद्भिन्नः कथित उपाधिः प्रकारः क्वचिदन्यत्राप्युक्तशुद्ध्यादिस्थलेऽपि सम्भवात् स्याद् भवेत् । अयमाशयः—सर्वेषामलङ्काराणां न्यूनाधिकरूपतया विसदृशरूपाणि भवन्ति । तान्यपि शुद्ध्यादीनामलङ्कारत्वस्वीकारेऽलङ्कारान्तराणि स्युः । एवं चालङ्कारपरिगणनमेव न स्यात् । सादृश्यरूपकात्पृथक्कथितसादृश्यरूपकस्याधिक्यम् । इवादिपदाभावे, लुप्तोपमाया न्यूनत्वम् । अत्र रूपकोपमातोऽभेदादेते सादृश्यरूपकादयोऽलङ्कारा यथा न रूपकोपमादितो भिन्नास्तथैव शुद्ध्यादयोऽपि नालङ्कारान्तराणीति भावः ॥ १२० ॥

मालोपमारशनोपमादीनामपि नालंकारान्तरत्वमिति व्याचष्टे—मालेति । भूयसां बहूनामुक्तानामेषामुपमादीनामलंकाराणां माला मालाकारेण विन्यासः, परम्परा रशनाद्याकारेण विन्यासश्च । अलंकाराङ्गतामलंकारोपकारकत्वं गते प्राप्ते । अनुकूलके चमत्कारजनके । स्वार्थे कः । मनुष्ये इव क्वापि काव्ये भवतः स्तः । मनुष्ये यथा-

---

उदाहरण अन्यत्र देखना चाहिए ॥ ११९ ॥

शुद्धि आदि को अलङ्कार मानने में और भी दूषण दिखाया जाता है—शुद्धि आदि में पूर्व अलंकारों की अपेक्षा कहीं अधिकता और कहीं न्यूनता का भेद होने के कारण यदि अलंकारत्व माना जावे तो यह न्यूनता ( प्रतिद्वन्द्व ) और अधिकता ( प्रतिच्छन्द ) की उपाधि तो प्रायः सब ही अलंकारों में आ जाती है। ऐसी अवस्था में न्यूनाधिक रूप से अलङ्कारों की गणना अनन्त हो सकती है। अतः शुद्धि, संसृष्टि आदि अलङ्कार उक्त अलङ्कारों से भिन्न नहीं हो सकते। सादृश्यरूपक से पृथक्कथित सादृश्यरूपक में अधिकता है। पूर्णोपमा से लुप्तोपमा में न्यूनता है। इस प्रकार यथा ये दोनों अलङ्कार रूपक और उपमा से भिन्न नहीं हैं वैसे ही शुद्धि, संसृष्टि आदि भी अलङ्कारान्तर नहीं हो सकते ॥ १२० ॥

मालोपमा और रशनोपमा भी भिन्न अलङ्कार नहीं हैं। मनुष्य के शरीर में जैसे मालारूप से वा शृङ्खलारूप से आभूषणों का विन्यास शोभा करता है। वैसे ही

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दे पदार्थे वाक्यार्थे वाक्यार्थस्तवके तथा ।
एते भवन्ति विन्यासाः स्वभावातिशयात्मकाः ॥ १२२ ॥
कस्याप्यतिशयस्योक्तेरित्यन्वर्थविचारणात् ।

लंकाराणां माला परम्परा च शोभाजनके भवतस्तथा काव्ये काप्यलंकाराणां माला परम्परा च शोभाजनके स्तः । एवं च मालोपमारशनोपमादीनां रशनारूपकमालारूपकादीनां च नालंकारान्तरत्वमिति भावः ॥ १२१ ॥

'अतिशयोक्तितो न भिन्ना इमेऽलंकाराः' इति मतं दूषयितुमुपन्यस्यति—शब्दे, इत्यादिपद्यद्वयेन : शब्दे शब्दालंकारा अनुप्रासयमकादयः । पदार्थे उपमारूपकादयोऽर्थालंकाराः । वाक्यार्थे दृष्टान्तादयः । तथा वाक्यार्थस्तवके निदर्शनादयः । एते विन्यासा रचनाविशेषाः । स्वभावादतिशयोक्तिस्वभावादतिशयात्मका अतिशयोक्तिस्वरूपा एव सन्तीति केचन मन्यन्ते ॥ १२२ ॥

सर्वेषामलंकाराणामतिशयोक्तिसारूप्यं प्रदर्शयति—कस्येति । अमी अनुप्रासोपमादयोऽलंकाराः सर्वे प्रायेण कस्यापि कस्यचिदपि अतिशयस्याधिक्यस्योक्तेः कथनात् । अन्वर्थं सार्थकं विचारणं विचारस्तस्मात् सर्वत्रालंकारेषु अतिशयकथनरूपयौगिकार्थकसद्भावात् । अतिशयोक्तितो वक्रोक्तितो न भिन्नाः सन्ति । अतिशयोक्तिर्वक्रोक्तिरिति पर्याय इति बोध्यम् । सर्वेऽलंकारा अतिशयोक्तिरूपा एवेति भावः । अत एव काव्यप्रकाशे दशमोल्लासे विशेषालंकारप्रस्तावेऽभिहितम्—'सर्वत्रैवं-

काव्य में भी मालोपमा, रशनोपमा, मालारूपक और रशनारूपक अलङ्कार केवल शोभा करते हैं । ये उपमा और रूपकादि से भिन्न अलङ्कार नहीं हो सकते ।।१२१।।

अतिशयोक्ति के अन्तर्गत ही सब अलङ्कार हैं । इस मत का निराकरण करने के लिये पहिले इसका स्वरूप बतलाया जाता है । किसी विद्वान् का मत है कि शब्द के अलङ्कार अनुप्रास और यमक आदि, अर्थगत उपमा, रूपकादि, वाक्यार्थगत दृष्टान्त आदि, अनेकवाक्यार्थगत निदर्शनादि ये सब रचनाएं ( विन्यासविशेष ) अतिशयोक्ति के रूप से भिन्न नहीं हैं ।। १२२ ।।

सब अलंकारों में अतिशयोक्ति का स्वरूप बतलाया जाता है—अनुप्रास और उपमादिक सब अलंकारों में किसी न किसी प्रकार से अतिशय ( वक्रता ) का कथन होता है अतः ये सब अलंकार अतिशयोक्ति के अन्तर्गत हैं । अतिशयोक्ति का ही दूसरा नाम वक्रोक्ति है । काव्यप्रकाश में भी विशेष अलंकार के प्रकरण में लिखा है कि सब अलंकारों में अतिशयोक्ति ही प्राणरूप से रहती है । इसलिये प्राचीन आचार्यों ने लिखा है कि वक्रोक्ति ( अतिशयोक्ति ) की

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रायेणामी ह्यलंकारा भिन्ना नातिशयोक्तितः ॥ १२३ ॥
अलंकारप्रधानेषु दधानेष्वपि साम्यताम् ।
वैलक्षण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव ॥ १२४ ॥
अलंकारेषु तथ्येषु यद्यनास्था मनीषिणाम् ।
तदर्वाचीनभेदेषु नाम्नां नाम्नाय इष्यताम् ॥ १२५ ॥

---

विधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालङ्कारत्वायोगात्। अत एवोक्तम्—

'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना' ॥ इति ॥ १२३ ॥

अतिशयोक्तिमतं दूषयति—अलंकारेति । साम्यतां समता सम एव साम्यं स्वार्थे साम्यस्य भावः साम्यता ताम् अत्रैकः प्रत्ययश्छन्दोऽनुरोधात् स्वार्थे । तुल्यतामिति पाठे तु न काप्यनुपपत्तिः। दधानेषु दधत्सु । अलंकारा उपमादयः प्रधानानि यत्र तेषु वाक्येषु। व्यक्ताविति प्रतिव्यक्ति प्रतिशरीरमित्यर्थः। मुखेष्विव वैलक्षण्यं विलक्षणता भेदो वा प्रतिभाति शोभते । दृश्यते इत्यर्थः। यथा मुखत्वेन समानेष्वपि मुखेषु प्रतिमुखं विलक्षणता दृश्यते तथातिशयोक्तित्वेन समानेष्वप्युपमाद्यलंकारेषु प्रातिस्विकभेदोऽस्त्येवेति भावः। तेनैतेऽलंकारा अतिशयोक्तितो भिन्नाः। अपलापानर्हत्वात् ॥ १२४ ॥

स्वकल्पितालंकारेष्वलंकारत्वं स्थापयति—अलंकारेष्विति । यदि तथ्येषु सत्येषु कुण्डलादिषु । अलङ्कारेषु भूषणेषु मनीषिणां धीमतामनास्थाऽनादरस्तत्तदा अर्वाचीनभेदेषु नवीनसकलकविकल्पितेषूपमादिषु। नाम्नोपमादिनाम्ना। आम्नायः पाठो नेष्यतां न क्रियताम्। यदा नवीनशैल्या निर्मितेषु सुवर्णालङ्कारेष्वलङ्कारताप्रयोजकधर्म-

---

रचना में ही विशेष कर कवियों को प्रयत्न करना चाहिए । इसके विना और कोई अलंकार ही नहीं है ॥ १२३ ॥

अतिशयोक्तिवादी का खण्डन किया जाता है—जैसे मनुष्यों के मुखों में नासिका, नेत्र आदि के कारण एकता ( समता ) होने पर भी प्रतिमनुष्य के मुखमें विलक्षणता ( भेद ) प्राप्त होती है। उसी प्रकार उपमादि अलंकारों में वक्रता रूप से समानता होने पर भी परस्पर भेद अवश्य है अतः ये सब अलंकार अतिशयोक्ति से भिन्न हैं ॥ १२४ ॥

प्राचीन अलंकारों से भिन्न स्वकल्पित अलंकारों का स्थापन किया जाता है—जिस प्रकार नवीन परिपाटी से निर्मित सुवर्ण के आभूषण मनोहरता के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
चतुर्थः सैकोऽयं सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः॥ १२६॥

इति चन्द्रालोकालङ्कारे पञ्चमो मयूखः।



सत्त्वेऽपि नालङ्कारता स्वीक्रियते तदा पूर्वाचार्यालिखितेष्वेतद्ग्रन्थमात्रकल्पितेष्वपि नालङ्कारता भवतु। तत्र चालंकारतास्ति। तेन तत्र सत्त्वेऽत्रापि भवत्येव। तथा चैतद्ग्रन्थमात्रोद्भावितेष्वलङ्कारतास्त्येवेत्याशयः। विष्णुधर्मोत्तरे तु मार्कण्डेयेन वज्रं राजानं प्रति स्वल्पतरा अलङ्कारा उक्ताः, अत्र तु बहवस्तथाप्यलङ्कारत्वव्यवहारोऽस्त्येवेति भावः॥ १२५॥

अथ पञ्चममयूखसमाप्तिं व्याचष्टे—महादेव इति। महादेवः सत्रेति प्रथममयूखोक्तः षोडशश्लोक एवात्रापि समाप्तौ ज्ञेयः। किन्तु तस्य तृतीयपादः 'चतुर्थः सैकोऽयं सुकविजयदेवेन रचिते' इति पठनीयः एकेन सहितः सैकोऽयं चतुर्थः पञ्चम इत्यर्थः। अन्यत्पूर्ववत्॥ १२६॥

इति पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायाः
पञ्चममयूखे पर्यवसानम्॥ ५॥



---

कारण धारण किये जाते हैं। उसी प्रकार प्राचीनाचार्यों से अधिक बतलाये गये इस ग्रन्थ के नवीन अलंकारों में भी अलंकारत्व मानना चाहिए। मार्कण्डेय मुनिने विष्णुर्मोत्तरपुराग में वज्रनामक राजा को थोड़े ही अलंकार बतलाये हैं और प्रस्तुत ग्रन्थ में अधिक बतलाये गए हैं तथापि उक्त नियम के अनुसार इनमें भी अलंकारता मानना उचित है॥ १२५॥

'महादेवः सत्र' इस प्रथम मयूख के सोलहवें श्लोक के तृतीय पाद में 'चतुर्थः सैकोऽयं सुकविजयदेवेन रचिते' यह परिवर्त्तन करके पञ्चम मयूख की समाप्ति की जाती है॥ १२६॥

कथाभट्टीयानामक हिन्दी व्याख्या में चन्द्रालोक का पञ्चम मयूख समाप्त हुआ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## षष्ठो मयूखः

अथ रसाः

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।

काव्यलक्षणोद्देशक्रमेणावश्यकस्य रीतिनिरूपणस्य रसानुबन्धितया पूर्वं रसान्निरूपयितुं प्रतिजानीते—अथ रसा इति । अभिधीयन्त इति शेषः । रस्यते आस्वाद्यतेऽसाविति रसः । 'अकर्तरि च कारके संज्ञायाम्' इत्यनेन कर्मणि घञ्प्रत्ययः । रसशब्दो हि प्रायो वेदे सोमरसजलादिवाचको वर्तते । 'रसो वै सः, रसं ह्येवायं लब्धा आनन्दी भवति' इति तैत्तिरीयोपनिषदि ( २।७ ) च रसशब्द आनन्दार्थको लभ्यते । यद्यपि भरतमुनिप्रणीते नाट्यशास्त्रे प्रथमं रसनिरूपणं पश्यामस्तथापि वाल्मीकिरामायणे करुणरसप्रतीत्या प्रतीयते तावद् रसाविर्भावस्य भरतमुनितोऽपि प्राचीनता । भरतमुनिना नाट्यशास्त्रे 'नाट्येऽष्टौ रसाः' इत्यभिधायापि 'तेषामुत्पत्तिहेतवश्चत्वारो रसाः' इति चतुर्णां शृङ्गाररौद्रवीरबीभत्सानामेव प्राधान्यं प्रदर्शितम् । यथा—

'शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः। वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः॥

शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः ।

रौद्रस्यैव च यत्कर्म सोद्भुतः परिकीर्तितः ।

बीभत्सदर्शनं यच्च ज्ञेयः स तु भयानकः' ॥ इति ।

नाट्यशास्त्रे रसस्य परिपूर्णं निरूपणमुपलभ्यते । अस्मादनन्तरमलङ्काराणां

---

'निर्दोषा लक्षणवती' इत्यादि काव्यलक्षण के क्रम से पहिले रीति का वर्णन करना आवश्यक है किन्तु यह रीतिवर्णन रसनिरूपण की अपेक्षा रखता है अतः रीति के पूर्व रस का निरूपण किया जाता है । निरन्तर अनेक बार के आस्वादन को रस कहते हैं । वेद में रस शब्द से सोमरस, जल आदि की प्रतीति होती है । तैत्तिरीय उपनिषद् में रस शब्द का आनन्द अर्थ बतलाया है । यद्यपि भरतमुनि के नाट्यशास्त्र में सर्वप्रथम रस-निरूपण प्राप्त होता है तथापि वाल्मीकि मुनि के रामायण में करुण रस की प्रचुर प्रतीति होने से जाना जाता है कि भरतमुनि से पूर्व ही रस का आविर्भाव हो चुका था । भरतमुनिने नाट्यशास्त्र में आठ रस बतला के लिखा है कि शृङ्गार, रौद्र, वीर और भयानक ये चार ही रस प्रधान हैं। इन्हीं के आश्रय से अन्य रसों की स्थिति होती है । लिखा है कि शृङ्गार से हास्य रस; रौद्र से करुण रस; वीर से अद्भुत रस और बीभत्स रस से भयानक रस की उत्पत्ति होती है । इस प्रकार नाट्यशास्त्र में रस प्रकरण का परिपूर्ण

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राधान्यं बभूव। अत एव भामह–भट्टोद्भट–वामन–रुद्रटादिभिर्ग्रन्थकारैः स्वग्रन्थनामानि काव्यालङ्कारतया प्रख्यापितानि। भामहेन भट्टोद्भटेन च रसादीनां रसवदाद्यलङ्कारतया परिस्थितिः स्वीकृता। दण्डिना काव्यादर्शे तु—

'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥'

इत्यादिनाङ्कुरितमपि रसप्रकरणं न पल्लवितं न च पुष्पितं कृतम्। किन्त्वलङ्काराणामेव सप्रपञ्चं निरूपणं कृतम्। वामनेन काव्यालङ्कारे 'काव्यं ग्राह्यमलङ्कारात्' इत्यादिना दर्शितमलङ्कारराज्यम्। रसविचारस्तु स्वल्पोऽपि न विहितः। समासोक्त्यादिष्वलङ्कारेषु ध्वन्यमानार्थस्यान्तर्भावः कृतः। रुद्रटकृते काव्यालङ्कारे तु 'तस्मात्तत्कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्'। 'रसनाद्रसत्वं चैतेषां मधुरादीनामिवोक्तमाचार्यैः।' 'व्यवहारः पुंनार्योरन्योन्यं रक्तयो रतिप्रकृतिः' इत्यादि रसनिरूपणं सामान्येन विहितम्। ततश्चानन्दवर्धनाचार्येण ध्वन्यालोके श्रीअभिनवगुप्तपादाचार्येण च ध्वन्यालोकलोचने रसप्राधान्यं प्रवर्तितम्। स्फीतरूपेण च रसो विवेचितः। अत एवाभिनवगुप्तपादा ध्वनिप्रस्थापनाचार्यत्वेनोच्यन्ते। सरस्वतीकण्ठाभरणे तु भोजराजेन रसः स्थूलरीत्या निर्दिष्टः। यथा—

'रसोऽभिमानोऽहङ्कारः श्रृङ्गार इति गीयते।
योऽर्थस्तस्यान्वयात्काव्यं कमनीयत्वमश्नुते॥'
'विभावस्यानुभावस्य सात्त्विकव्यभिचारिणोः।

---

वर्णन प्राप्त होता है। नाट्यशास्त्र के अनन्तर अलङ्कारों का प्राधान्य प्रचलित हुआ। इस समय भामह, भट्टोद्भट, वामन और रुद्रट आदि ग्रन्थकारों ने अपने २ ग्रन्थ काव्यालङ्कार नाम से प्रथित किये। भामह और भट्टोद्भट ने रसवदादि अलंकारों में ही रस की प्रतीति मान ली। दण्डी ने काव्यादर्श में 'मधुरं रसवद्वाचि' इस श्लोक से रस का केवल इशारा मात्र किया और अलङ्कारों का सविशेष निरूपण किया। वामन ने काव्यालङ्कार में अलंकार होने के कारण काव्य उपादेय है इस कथन से अलंकारों की प्रधानता बतलाई तथा रस का स्वल्प भी विचार नहीं किया और ध्वन्यमान अर्थ का समासोक्ति आदि में अन्तर्भाव किया। रुद्रट के काव्यालंकार में रस का निरूपण सामान्य रूप से प्राप्त है। इसके अनन्तर युगपरिवर्तन हुआ, आनन्दवर्धनाचार्य ने ध्वन्यालोक में तथा इसकी टीका (लोचन) में अभिनवगुप्तपाद ने रसप्राधान्य का स्थापन किया और स्फीत रूप से रस का विवेचन किया। इसीलिये अभिनवगुप्तपाद को ध्वनिस्थापक बतलाया जाता है। सरस्वतीकण्ठाभरण में भोजराज ने रस का स्थूल रूप से विवेचन किया है। लिखा है कि विभाव, अनुभाव, सञ्चारी भाव के संयोग से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संयोगे तस्य निष्पत्तिमात्रं निष्पत्तिरिष्यते।
विषयाश्रय-संस्कार-गुण-प्रकृतिपाटवैः।
दीपनातिशयैश्चास्य प्रकर्षः पुष्टिरिष्यते'॥ इत्यादि।

शृङ्गारप्रकाशो भोजराजेन शृंगाररसप्रतिपादको महान् ग्रन्थो निर्मित इति प्रचलितं रसप्राधान्यम्। एवं क्रमविकासे सति काव्यप्रकाशादौ रसः काव्यस्यात्मत्वेन स्वीकृतः। अलङ्काराश्च रसपरिपोषकत्वेन निश्चिताः, अत एवोक्तं केनापि—'अस्ति चेद्रससम्पत्तिरलङ्कारा वृथा इव। नास्ति चेद्रससम्पत्तिरलङ्कारा वृथैव हि'॥ इति।

एवं काव्यप्रकाशसाहित्यदर्पणरसगङ्गाधरादिमुख्यग्रन्थेषु रसप्राधान्यं स्वीकृत्य तन्निरूपणं विस्तरशो विहितम्। नाटके शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक-बीभत्स-अद्भुताख्या अष्टौ रसाः, काव्ये तु शान्तोपि नवमो रसः। रुद्रटालङ्कारे च प्रेयान् दशमो रसः स्वीकृतः। साहित्यदर्पणे च वत्सलाख्यो दशमो रसः कथितः। भानुदत्तेन रसतरङ्गिण्यां वात्सल्य-लौल्य-भक्ति-कार्पण्याख्या अपि रसाः कथिताः। रूपगोस्वामिना-उज्ज्वलनीलमणिग्रन्थे भक्तिरस उज्ज्वलरसत्वेन स्वीकृतः। एवं रससङ्ख्याऽनवस्थायामपि काव्ये नाटये च नवैव रसा अन्ये च भक्त्यादयो भावा एवेति रसगंगाधरे निर्णीतम्। एष रसक्रमविकासः। प्रकृतमनुसरामः।

---

रस की उत्पत्ति होती है। शृंगारप्रकाश में महाराज भोजने केवल शृङ्गार रस का अधिक विस्तार से निरूपण किया है। इस प्रकार रस का प्राधान्य प्रवर्तित हुआ। काव्यप्रकाश में रसको ही काव्यकी आत्मा माना है और अलंकारों को रस का परिपोषक बतलाया है। इस समय से अलकारों की प्रधानता का विनाश हो गया तथा कविजन कहने लगे कि काव्य में रस है तो अलंकारों की अपेक्षा नहीं, और यदि रस नहीं है तो अलंकार व्यर्थ ही हैं। क्योंकि वे रस के बिना किसके परिपोषक होंगे। एवं काव्यप्रकाश, साहित्यदर्पण, रसगंगाधर आदि मुख्य ग्रन्थों में रस का प्रधान रूप से विस्तारपूर्वक निरूपण किया गया है। नाटक में शृङ्गार, हास्य, करुण, रौद्र, वीर, भयानक, बीभत्स और अद्भुत ये आठ रस होते हैं। काव्य में शान्तरससहित नौ रस माने गये हैं। रुद्रट ने प्रेयान् नामक दशम रस भी माना है। साहित्यदर्पण में वत्सल को दशम रस बतलाया है। भानुदत्त ने रसतरंगिणी में वात्सल्य, लौल्य, भक्ति और कार्पण्य को भी रस कहा है। रूप गोस्वामी ने उज्ज्वलनीलमणि में भक्तिरस को उज्ज्वलरस ( प्रधान-रस ) कहा है। इस प्रकार रसों की भेदगणना में परस्पर विमति होने पर भी आलंकारिक मत से रसगंगाधर में निर्णय किया गया है कि काव्य या नाट्य में नौ प्रकार का रस मानना उचित है। भक्ति आदि को भावध्वनि ही कहना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विभावादिपरिपुष्ट एव स्थायिभावो रस इति प्रतिपादयिष्यन् ग्रन्थकारः पूर्वं विभावादीन् व्याचष्टे—आलम्बनेति (१९५ पृष्ठे)। लोके यत्कारणमभिधीयते तदेव काव्ये नाट्ये च विभावपदेनोच्यते। रत्यादीन् विभावयन्ति आस्वादयोग्यान् जनयन्ति ते विभावाः। सोऽयं विभाव आलम्बन-उद्दीपनश्चात्मा स्वरूपं यस्य स तादृशः सन् द्विधा भवति। यथाग्निपुराणे—

'विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः' ॥ इति।

आलम्बनोद्दीपनतया द्विविधो विभावो रसमात्रे कारणमित्याशयः। आलम्बनविभावो नायिकादयः। अयमपि विषयालम्बन आश्रयालम्बनश्चेति द्विधा। यं विषयमालम्ब्य रसो हि प्रवर्तते स विषयालम्बनो रामादिः। यं चाश्रयमालम्ब्य रसः प्रवर्तते स आश्रयालम्बनो नायिकादिः। ये च रसमुद्दीपयन्ति ते चन्द्रचन्दनादय उद्दीपनविभावाः। एष उद्दीपनविभावश्चतुर्धा। यथोक्तम्—

'आलम्बनगुणाश्चैव तच्चेष्टा तदलंकृतिः।
तटस्थश्चेति विज्ञेयश्चतुष्कोद्दीपनक्रमः' इति।

अत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्चेति। तद्गुणा रूपलावण्यादयः। तच्चेष्टा भावहावादिः। तदलंकृतिर्भूषणादिः। तटस्थोद्दीपनविभावाश्च चन्द्र-

---

चाहिए, यह रसविकास का इतिहास है। विभावादिक से परिपुष्ट स्थायी भाव रस होता है अतः ग्रन्थकार प्रथम श्लोकसे विभावादिक का निरूपण करता है। लोकमें जो रत्यादि के कारण (उत्पादक) होते हैं, वे ही काव्य वा नाटक में विभाव कहे जाते हैं। रत्यादि को आस्वादयोग्य बनाना ही विभाव पद का यौगिक अर्थ है। यह विभाव आलम्बन और उद्दीपनविभाव के भेद से दो प्रकार का है। अग्निपुराणमें भी विभाव के दो ही भेद लिखे गये हैं। विषयालम्बन और आश्रयालम्बन;-ये दो भेद आलम्बन-विभाव के हैं। जहाँ विषय के आलम्बन से रस की प्रतीति हो वहाँ विषयालम्बन होता है। जैसे रामादि। नायिका आदि आश्रय के आलम्बन से रस होने पर आश्रयालम्बन होता है। रस के जो उद्दीपक (बढ़ानेवाले) होते हैं;-वे चन्द्रमा, चन्दनादि उद्दीपनविभाव कहे जाते हैं। आलम्बन के गुण, आलम्बन की चेष्टा, आलम्बन के अलंकार और तटस्थ ये उद्दीपन विभाव के चार भेद हैं। नायक व नायिकारूपी आलम्बन रस का समवायिकारण माना गया है। इसके गुण, रूप, लावण्य आदि उद्दीपन होते हैं। इसकी चेष्टा, भाव, हाव, कटाक्ष आदि और अलंकार उद्दीपन-भाव हैं। वसन्त, उद्यान आदि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कार्योऽनुभावो भावश्च सहायो व्यभिचार्यपि ॥ ९ ॥

चन्दनवसन्तादयः । लोके यत्कार्यमुच्यते तदेव काव्ये नाट्ये चानुभावपदेन व्यपदिश्यते । अनु पश्चात् स्थाय्युद्बोधानन्तरं रत्यादीन् स्थायिनोऽनुभावयन्ति आस्वादयन्ति तेऽनुभावाः कार्यरूपाः कटाक्षभुजक्षेपादयः । यथोक्तं साहित्यदर्पणे—

'उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः' ॥ इति ।

अयमपि स्वाभाविकत्वौपाधिकत्वाभ्यां द्विधा । तत्र पूर्वधर्माक्रान्ताः सात्त्विका उच्यन्ते, परधर्माक्रान्ताश्चानुभावाः । तदुक्तम्—

'ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥' इति ।

तथा—'स्मितं गीतं कटाक्षश्च भुजक्षेपश्च हुंकृतिः ।
तनुमोटनजृम्भादिश्चानुभावः प्रकीर्त्यते' ॥ इति च ।

लोके यत्सहकारिकारणं तत्काव्ये नाट्ये च व्यभिचारिभावपदेनोच्यते । ये विशेषेण अभितः सर्वतः स्थायिनं शरीरे चारयन्ति संचारयन्ति ते व्यभिचारिभावा निर्वेदादयः । यथोक्तम्—

'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ' ॥ इति ।

रसगंगाधरे चोक्तम्—

'रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः ।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः' ॥ इति ।

---

तटस्थोद्दीपन विभाव हैं । लोक में जो रत्यादि के कार्य हैं, वे ही काव्य व नाट्य में अनुभाव नामसे विख्यात हैं । अनु का अर्थ है पश्चात् अर्थात् जो स्थायी ( रत्यादि ) के बोध के अनन्तर स्थायी रत्यादि का आस्वादन करावें, वे कटाक्ष, हस्तचालन आदि अनुभाव कहे जाते हैं । स्वाभाविक और औपाधिक भेद से यह भी दो प्रकार का है । स्तम्भ, स्वेद, रोमाञ्च, स्वरभङ्ग, कम्प, वैवर्ण्य, अश्रु, प्रलय ये आठ सात्त्विकभाव स्वाभाविक अनुभाव के भेद हैं । औपाधिक अनुभाव के भेद स्मित, गीत, कटाक्ष, भुजक्षेप, हुंकार, आलस्य, जृम्भा आदि होते हैं । रत्यादिक का सहकारी कारण काव्य—नाट्य में व्यभिचारी ( संचारी ) भाव होता है । जो विशेषरूप से शरीर में चारों ओर रत्यादिक को फैलावे, वह व्यभिचारी भाव है । इसके निर्वेदादिक भेद आगे लिखे जायँगे । रसगंगाधर में लिखा है कि जो अधिक विभाव ( कारण ) से परिपुष्ट हों वे स्थायी भाव होते हैं और जो अल्प विभावों से पोषित होवैं वे व्यभिचारी भाव होते हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गलद्वेद्यान्तरोद्भेदं हृदयेष्वजडात्मनाम् ।

एवं विभावानुभावव्यभिचारिभावानां स्वरूपं प्रदर्शितम् । एते च प्रतिरसं भिन्ना भवन्ति । एतैरेव च परिपुष्टः स्थायी भावो रसतां लभते ॥ १ ॥

रससामान्यलक्षणं व्याचष्टे—गलदिति श्लोकद्वयेन । स्थायिभाव एव रसः स्मृतः। तिष्ठतीति स्थायी तादृशो रत्यादिर्भावः स्थायिभावः । तत्र आ प्रबन्धं स्थिरत्वादमीषां रत्यादीनां भावानां स्थायित्वम् । न च चित्तवृत्तिरूपाणामेषामाशुविनाशित्वेन कथं स्थायित्वमिति वाच्यम्। वासनारूपाणाममीषां मुहुर्मुहुरभिव्यक्तेरेव स्थिरपदार्थत्वात् । यद्वा—सजातीयैर्विजातीयैर्वा भावैरनुपमर्द्यत्वं स्थायित्वम् । यथोक्तम्—'सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् । यावद्रसं वर्तमानः स्थायिभाव उदाहृतः' ॥ 'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्याशु स स्थायी लवणाकरः॥

चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥' इति च ।

किं च भूयिष्ठविभावजत्वं स्थायित्वम् । तेन हासक्रोधादीनां श्रृङ्गारादौ व्यभिचारित्वमेव । भगवद्भक्तिरसायने स्थायिस्वरूपं स्फुटीकृत्य विवेचितम् । तथाहि—चित्तं स्वभावात्कठिनात्मकं भवति जतुवत् । तच्च कामक्रोधभयस्नेहादिभिस्तापकैर्द्रवतां प्राप्नोति । यथोक्तं तत्रैव—

'कामक्रोधभयस्नेहहर्षशोकदयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत् ॥' ( १।५ )

यदा तस्मिन् द्रुते चित्ते कान्तादिरूपो यो वस्त्वाकारो विनिक्षिप्यते तदा चित्तं तदाकारं भवति । इदं चित्तं द्रवतायां प्रविष्ट सत् पुनः काठिन्यदशां प्राप्त वस्तु पुन·

यह विभाव, अनुभाव, व्यभिचारी भावों का स्वरूप है । ये सब प्रत्येक रस के प्रति भिन्न २ होते हैं । इन सब से परिपुष्ट स्थायी भाव ही रस के स्वरूप को धारण करता है ॥ १ ॥

रस का लक्षण यह है—स्थायी भाव ही रस हो जाता है। स्थिररूप से रहनेवाले पदार्थ को स्थायी कहते हैं । रत्यादिक भाव वासनारूप से स्थिर रहते हैं अतः स्थायी कहे जाते हैं । अथवा सजातीय और विजातीय भावों के ज्ञान से जिन के ज्ञान का अभिभव न हो, उन्हें स्थायी भाव कहते हैं । मधुसूदनसरस्वती के भगवद्भक्तिरसायन में स्थायीभाव का निरूपण इस प्रकार किया गया है—प्रत्येक मनुष्य का चित्त लाक्षा ( लाख ) के समान कठिन होता है । वह चित्त काम, क्रोध, भय, स्नेह, हर्ष, शोकादि तापक द्रव्यों से द्रवीभाव ( रसरूपता ) को प्राप्त होता है । जैसे कि अग्नि के ताप से लाक्षा पिघल जाती है, वैसे ही चित्त

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिलन्मलयजालेप इवाह्लादं विकासयन् ॥ २ ॥
काव्ये नाट्ये च कार्ये च विभावाद्यैर्विभावितः ।

द्रुतो सत्यामपि न मुञ्चति । ततो वासनारूपतया स्थितो रत्यादिरयं स्थायिभावपदेनोच्यते । साङ्ख्यमतेन च स्थायिभावरूपभिदम्—तमोरजःसत्त्वगुणा मोहदुःखसुखरूपा भवन्ति । प्रकृतिः सर्वं कार्यं च त्रिगुणरूपम् । सत्त्वगुणस्य सुखरूपत्वात्सत्त्वोद्रेके सति मानसे यदा सुखाकारः प्रविष्टो भवति तदा स स्थायित्वं प्रतिपद्य रसो भवति । यथा मूषायां सुवर्णं द्रवीभूतं सत् मूषाकारं भवति तथैव द्रुतं चित्तं रत्याद्याकाराकारितं जायते । एवं बाह्यवस्तुनो विनाशेऽपि मनोमयो रत्यादिर्वासनारूपेण तिष्ठतीति स स्थायी भाव उच्यते । उक्तं च—

'बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥' इति (भक्तिरसा० १, २६)

कथंभूतः स्थायी रसो भवतीत्यपेक्षायामाह—काव्य इति । काव्ये नाट्ये दृश्यकाव्ये कार्ये नाट्यचित्रप्रेक्षणे च विभावाद्यैर्विभावानुभावसंचारिभिः । विभावितोऽभिव्यक्तः । 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनेनात्र कर्तरि क्तः । यथा दुग्धं दधिरूपेण विपरिणमते तथा प्राक्तनीवासनावासितो रत्यादिभावो रसतया विपरिणमत इति भावः । आस्वाद्यमाना चर्व्यमाणैका तनुः शरीरं यस्य स तादृशः । आस्वादनदशायामेव रत्यादिभावो रसो न त्वास्वादित आस्वादनीयो वा । अजडा रसादिपरिशीलनाभ्यासिन आत्मानो येषां

भी तापक पदार्थों से पिघलता है । इस द्रवीभूत चित्त में जो वस्तु मिल जाती है, वह फिर कभी उससे अलग नहीं होती । अर्थात् चित्त के कठिन होने पर भी वह वस्तु उसमें वासनारूप से मिली रहती है । इसीलिये द्रवीभूत चित्त में स्थित रत्यादि स्थिर रहने से स्थायीभाव कहे जाते हैं । सांख्यमत में प्रकृति वा इसके सब कार्य तीनों गुणों से व्याप्त हैं । सत्त्व, रज, तम ये तीनों गुण क्रम से सुख, दुःख और मोहरूप हैं । इनमें से सुखमय सत्त्वगुण की अधिकता होने पर मन में जब सुख का आकार प्रविष्ट होता है, तब वही स्थिरता को प्राप्त कर के रस बन जाता है । जैसे द्रवीभूत सुवर्ण अपने पात्र में फैल जाता है, उसी प्रकार रत्यादिक द्रवीभूत चित्त में व्याप्त हो जाते हैं । इस प्रकार बाह्य वस्तु के नाश होने पर भी रत्यादिक चित्त में वासना रूप से स्थिर रहते हैं अतः ये स्थायिभाव कहे जाते हैं ( भक्तिर० १, २६ ) । यह स्थायिभाव काव्य, नाटक वा नाटकचित्र ( सिनेमा ) में विभावादिक से व्यक्त होने पर रस कहलाता है । आस्वादन स्वरूप यह स्थायिभाव सहृदयपुरुषों के हृदय में चन्दन के आलेप के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आस्वाद्यमानैकतनुः स्थायिभावो रसः स्मृतः ॥ ३ ॥

तेषां प्राक्तनीदानीन्तनीवासनावासितानाम् । एतेन जरन्मीमांसकादीनां न रसानुभव इत्युक्तं भवति। हृदयेषु मनःसु। मलयजस्य चन्दनस्यालेपो मलयजालेपः, मिलंश्चासौ मलयजालेपश्चेति तथोक्तः। तादृगिव। वेदितुं योग्यं वेद्यम्, अन्यद्वेद्यमिति वेद्यान्तरं तस्योच्छेदो यस्मिन् कर्मणि यथा तथा। ज्ञानान्तरशून्यमित्यर्थः। आह्लादमानन्दं विकासयन् प्रकाशयन् स्थायी भावो रत्यादिः। रसः स्मृतः कथितः कविभिः। प्राक्तनीवासनावासितानां हृदयेषु विभावादिपरिपुष्टो रत्यादिः पौनःपुन्येनानुशील्यमानः सन् रसतां लभत इति भावः। यथोक्तम्—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतमुनिना। रसविषये रसगङ्गाधरे एकादश पक्षा अभिहिताः। यथाहि—विभाव्यमानो विभाव एव रस इत्येकः। अनुभाव एव रस इति द्वितीयः। व्यभिचार्येव रस इति तृतीयः। त्रिषु यश्चमत्कारी स एव रस इति चतुर्थः। त्रयः समुदिता रस इति पञ्चमः। विभावादिपरिपुष्टो रत्यादिः स्थायी भावो रसस्तत्र भट्टलोल्लटमतमिति षष्ठः। श्रीशङ्कुकनैयायिकमतमिति सप्तमः। भट्टनायकमतमित्यष्टमः। अभिनवगुप्तपादसिद्धान्त इति नवमः। आत्मचैतन्यप्रकाशितः शुक्तौ रजतभ्रान्तिरिवानिर्वचनीयो रत्यादिः स्थायिभावो रस इति नव्यालङ्कारिकमतमिति दशमः। भ्रम-

---

मनाम आह्लाद को प्रकट करता हुआ उन ( सहृदयों ) को रस के एकाग्रज्ञान में लीन करके रस की पूर्ण दशा को प्राप्त करता है। सार यह है कि रत्यादिक की वासना से युक्त ( सहृदय ) पुरुषों के हृदय में विभावादिक से परिपुष्ट रत्यादिक स्थायी भाव बारम्बार निरन्तर भावना करने पर रस होते हैं। भरतमुनि ने भी यही लिखा है, यह इस ग्रन्थ के मत से रस का निरूपण हुआ। रसगङ्गाधर में रस के विषय में एकादश मतों का निर्देश है। जैसे—१–विभाव ही भावना के बल से होता है यह प्रथम मत है। २–अनुभाव ही रस है। ३–व्यभिचारीभाव ही रस होता है। ४–विभावादिक तीनों में जो चमत्कारी हो, वही रस है। ५—तीनों का समुदाय रस होता है। इन पांचों मतों के अनन्तर यह पता चला कि विभावादिक से परिपुष्ट रत्यादिक स्थायी भाव रस होते हैं। इस सिद्धान्त के अनुसार भट्टलोल्लट के मत से भरतमुनि के रससूत्र की व्याख्या षष्ठ मत मानी जाती है। नैयायिक श्रीशंकुक के मत से भरतसूत्र की व्याख्या सप्तम मत होती है। अष्टम मत में भट्टनायक की व्याख्या है। इनमें श्री अभिनव गुप्तपाद की व्याख्या नवम मत है और सिद्धान्तपक्ष भी है। आत्मचैतन्य से प्रकाशित और भ्रान्ति से उत्पन्न रति आदि से आनन्द का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रूपोऽयं रस इति नव्यपरालङ्कारिकमतमित्येकादशः पक्षः । एषु मीमांसकभट्टलोल्लटमत-भरतसूत्रव्याख्येयम्—ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, कटाक्षभुजक्षेपादिभिरनुभावैः प्रतीतियोग्यः कृतः, उत्कण्ठादिभिः सञ्चारिभिः परिपोषितो रसतां लभते । सोऽयं रत्यादिभावोऽनुकार्ये दुष्यन्तादावेव रसः । अयं भावः—यथा सर्पाभावेऽपि सर्पतयाऽवलोकिताद् दाम्नोऽपि भयमुत्पद्यते तथा शकुन्तलादिविषयिणी दुष्यन्तादिरतिरविद्यमानापि नटेऽभिनय-नैपुण्येन स्थितेव प्रतीयमाना सामाजिकहृदये रसपदवीमधिरोहति । रसो दुष्यन्ते भवति नटे च सामाजिकसहृदया नाट्यनैपुण्येन दुष्यन्तारोपं कुर्वत इति सोयमारोप एव चमत्कारहेतुः । एतन्न रुचिरम् । सामाजिकेषु रसानुदये चमत्कारानुदयात् । न च तद्गतरतिज्ञानमेव चमत्कारकम् । लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गात् । किं च न केवलं साक्षात्कारश्चमत्कारकोऽपि त्वनुभवपुष्ट आरोपस्तथा भवतीति चेन्न । चन्द-

अनुभव होना नव्य आलंकारिकों का दशम मत है । रस केवल भ्रमरूप है यह ग्यारहवाँ मत है । इनमें मीमांसक भट्ट लोल्लट के मत से भरत मुनि के सूत्र की यह व्याख्या है—ललना आदिक आलम्बनविभावों से उत्पन्न, उद्यान आदि उद्दीपनविभावों से उद्दीपित, कटाक्ष प्रभृति अनुभावों से आस्वाद के योग्य किये गये तथा उत्कण्ठा आदिक संचारी भावों से परिपुष्ट रत्यादिक स्थायी भाव रस होते हैं । भावार्थ यह हुआ कि सर्प के न होने पर भी सर्परूप से प्रतीत रस्सी से भी जैसे भय होता है वैसे ही दुष्यन्त का शकुन्तलाविषयक प्रेम वास्तव रूप में अविद्यमान भी नर्तक की निपुणता से व वास्तवरूप से प्रतीत होता हुआ सामाजिक ( दर्शक ) के हृदय में रसता को प्राप्त होता है । रस तो अनुकार्य ( दुष्यन्तादि ) में होता है और सामाजिक नट की निपुणता से उस ( नट ) में दुष्यन्तादि का आरोप कर लेते हैं । यह आरोप ही चमत्कारक होनेसे रस है । इस मत में दोष यह आ जाता है कि वास्तविक रस तो दुष्यन्त आदि में है और उसी का आरोप नर्तक में कर लेने से नर्तक में आरोपित रस है । सामाजिक के हृदय में आरोपित वा वास्तविक में किसा प्रकार का रस नहीं है । ऐसी अवस्था में सामाजिक को ज्ञानमात्र से आनन्द नहीं हो सकता । केवल शब्द के द्वारा रस के ज्ञानमात्र से ही आनन्द की उत्पत्ति मानी जावै तो लौकिक शृङ्गार के दर्शन से भी चमत्कार होना चाहिए, सो होता नहीं । अनुभवयुक्त दर्शन से आनन्द की उत्पत्ति मानने पर चन्दन के आलेपमात्र से सुख नहीं होना चाहिए और सुख होता है अवश्य । ऐसी परिस्थिति में इस मत को दूषित मान कर

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नालेपादावनुभवं विनापि सुखोदयात्। अथातो नैयायिकश्रीशङ्कुकादीनामियं व्याख्या अनुमाप्यानुमापकभावसम्बन्धाद्रसस्य निष्पत्तिरनुमितिरिति तदर्थः। लोके हि चत्वारि ज्ञानानि प्रसिद्धानि—सम्यग्ज्ञान—मिथ्याज्ञान—संशयज्ञान-सादृश्यज्ञानानीति। एतेभ्यो लौकिकज्ञानेभ्यो विलक्षणेन चित्रतुरगज्ञानवद् दुष्यन्तरूपेण ज्ञातो नटः पक्षः शकुन्तलाविषयकरतिमान् तत्तद्विभावादिमत्वादित्यनुमानेन नटे स्थायिभावानुमानं सामाजिकानां जायते। अत्र नटेऽविद्यमानमपि विभावादित्रयं नटशिक्षाकौशलेन प्रत्यक्षमिव प्रतीयते। एवमनुकर्तरि नटे विद्यमानतया प्रतीतस्य स्थायिनोऽनुमानं सामाजिकानाम्। तदेव च रस इति फलितम्। प्रत्यक्षज्ञानमेव चमत्कारक नानुमानम्। अन्यथा सुखस्मरणमात्रेण सुखानुभवापत्तेरिति मनस्यरुचिं निधाय सांख्यमतावलम्बिना भट्टनायकेनेत्थं भरतसूत्रं व्याख्यायते—विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद्रसस्य निष्पत्तिर्भुक्तिरित्यर्थः। तथाहि शब्दात्मनः काव्यस्य त्रयो व्यापाराः। यदाहुः—'अभिधा भावना चैव तद्भोगीकृतिरेव च' इति। अत्राभिधा निरन्तरसान्तरार्थगतत्वेन द्विधेति लक्षणाऽप्यत्रान्तर्भूता। काव्यश्रवणेनाभिनयेन च प्रथममर्था-

---

नैयायिक श्री शङ्कुक आचार्य ने भरतसूत्र की व्याख्या इस प्रकार की है कि अनुमाप्य-अनुमापक सम्बन्ध से विभावादि द्वारा रस का अनुमान किया जाता है। इस मत का सारांश यह है—सम्यग्ज्ञान, मिथ्याज्ञान, संशयज्ञान और सादृश्य ज्ञान ये चार ज्ञान लोकमें प्रसिद्ध हैं। इन चारों ज्ञानों के अतिरिक्त एक ज्ञान और भी होता है। जैसे कि घोड़े का चित्र देखकर 'यह घोड़ा है' ऐसा ज्ञान। इसी ज्ञान के द्वारा सामाजिक लोग नट को दुष्यन्त आदि समझ लेते हैं और फिर इस नट (दुष्यन्त) में विभावादिक होने के कारण शकुन्तलाविषयक रति का अनुमान कर लेते हैं। जहाँ-जहाँ विभावादिक हैं वहाँ वहाँ रति रहती है। यह इस अनुमान की व्याप्ति होती है। सुन्दर काव्य के अनुसन्धान के बल से तथा पूर्णशिक्षित नट की कार्यपटुता से अविद्यमान भी विभावादिक स्वाभाविक तौर से प्रतीत हो जाते हैं। बस, इस प्रकार अनुकर्ता नट में रस होता है। सामाजिक रस का अनुमान कर लेते हैं। इस अनुमान का नाम ही रस है। इस मत में यह दोष आता है कि प्रत्यक्ष ज्ञान के द्वारा ही चमत्कार होता है, आनुमानिक ज्ञान से नहीं। अनुमान ज्ञान से ही सुख की प्रतीति होने लगेगी तो सुख के स्मरण मात्र से सुख का अनुभव होना चाहिए इत्यादि। इस दोष को मान कर सांख्यमतावलम्बी भट्टनायक ने भरतमुनि के रससूत्र की व्याख्या दूसरे प्रकारसे की है। उस मत का सार यह है—अभिधा, भावना और भोगीकरण ये काव्य में तीन क्रियायें होती हैं।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नुभवो जायतेऽभिधया। ततो भावनया साधारणीकरणेन विभावादयः साधारण्येन प्रतीयन्ते। पुनश्च भोगीकृतिव्यापारेण सत्त्वगुणाधिक्येन रजस्तमस्यभिभवपुरस्सरं सामाजिक आत्मचैतन्यप्रकाशितं सामान्यतः प्रतीतं रत्यादिस्थायिनमास्वादयति। अयं रत्यादिरेव रसः। एवं नारोपस्यावश्यकता न चानुमानस्येति सारः। अत्रालङ्कारिका अभिनवगुप्तपादा आहुः–लक्षणाप्रयोजनबोधफलेन, एकत्राभिधानियन्त्रणेऽपरार्थबोधकतया वक्तृबोद्धव्यादिवैशिष्ट्यसहकारेण तत्तदर्थावगमकतया च व्यञ्जनास्वीकारावश्यकता भवन्मतेऽपि। व्यञ्जनास्वीकारे सति भावकत्वभोजकत्वव्यापारद्वयकल्पनं निरर्थकं भवति। व्यञ्जनयैवोभयकार्यसिद्धेः। तेन विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात्सम्बन्धाद्रसस्य निष्पत्तिरभिव्यक्तिरिति भरतसूत्रार्थः। लोके नायिकादिभिरालम्बनकारणैः स्थायिनोऽनुमाने काव्ये तैरेव कारणत्वादिपरिहारेण विभावनत्वरूपव्यापारात् साधारण्येन प्रतीतैर्विभावादिभिरभिव्यक्तः, प्राक्तनीवासनावासितः, नियतप्रमातृगतोऽपि भावनाजनितसाधारण्येन विगलितनियतदुष्यन्तत्वा-

---

इनमें अभिधा द्वारा काव्य का अर्थ समझा जाता है। भावना से उस काव्य के अर्थ का अनुसन्धान किया जाता है कि जिससे काव्य में वर्णित विभावादिक हमारे साधारण रसास्वादन में अनुकूल हो जाते हैं। तृतीय क्रिया भोगीकरण से हम आत्मचैतन्य से प्रकाशित एवं साधारण रूप में उपस्थित रति आदि भावों का अनुभव करते हैं। यह अनुभव ही रस है। इस प्रकार कार्य वन जाने पर न आरोप की आवश्यकता रहती है और न अनुमान की। इस मत में भी दोष आ जाता है। क्योंकि व्यञ्जनाशक्ति तो इस मत में भी माननी ही पड़ेगी। विना व्यञ्जना के लक्षणा के प्रयोजन का बोध नहीं हो सकता तथा श्लिष्ट पदों में एक अर्थ के बोध से अभिधा के विरुद्ध हो जाने पर पुनः दूसरे अर्थ का बोध नहीं हो सकता। अतः व्यञ्जना की आवश्यकता होती है। व्यञ्जना के स्वीकार कर लेने पर फिर भावना और भोगीकरण रूप दो व्यापारों को मानने की कोई आवश्यकता नहीं। व्यञ्जना द्वारा ही सब कार्य सिद्ध हो जावेगा इत्यादि दोष को देख कर आलङ्कारिक अभिनवगुप्तपाद ने भरतमुनि के रससूत्र की व्याख्या दूसरे प्रकार से की है। वह यह कि विभावादिक रस के व्यञ्जक हैं और रस व्यङ्ग्य है। अतः विभावादि द्वारा स्थायीभाव की अभिव्यक्ति होती है। यह रत्यादिक की व्यक्ति प्राचीनवासना से युक्त सहृदय पुरुषों के हृदय में साधारणरूप से प्रतीत हुए विभावादिक से मिश्रित, तथा शर्वत की तरह आस्वादार्ह, अलौकिक आह्लादमय, परब्रह्म के साक्षात्कार के समान, रसरूपता को प्राप्त होती है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दिविशेषज्ञानेन, उत्पन्नवेद्यान्तरशून्यत्वेन तेनैव प्रमात्रा स्वाकार इवाभिन्नोऽपि गोचरीकृतो विभावादिसमूहालम्बनात्मकः, प्रपानकरसन्यायेन चर्व्यमाणः, आस्वादनचर्वणामयः, लोकोत्तराह्लादकः, ब्रह्मास्वादनसचिवः, सामाजिकैरास्वाद्यमानो रत्यादिरेव रसः। अयं भावः—काव्यनाट्योक्तविभावादीनामनुशीलनाभिन्नास्वादप्रभावेणात्मचैतन्यावरणमज्ञानं निराक्रियते। ततश्च वासनारूपेण स्थिता रत्यादय आत्मचैतन्येन प्रकाशन्ते। एवमात्मचैतन्योपहितानां सामाजिकहृदये वासनारूपेण विद्यमानानां रत्यादीनामनुभवो रस इति। पण्डितराजजगन्नाथमते त्वेतावान् भेदो यत्—भग्नावरणस्य रत्युपहितस्यात्मचैतन्यस्यानुभवो रस इति। अत्र मते आनन्दमयात्मचैतन्यस्यानुभवे प्राधान्यं रत्यादेर्गौणता। पूर्वोक्तालङ्कारिमते चानुभावे रत्यादिप्राधान्यं चैतन्यस्य गौणत्वमिति सारः। इदमेवालङ्कारशास्त्रे रसस्वरूपम्। ब्रह्मास्वादसहोदरोऽयं रसः—न ज्ञाप्यः, न कार्यः, न नित्यः, न भावी, न वर्तमानः, न निर्विकल्पकज्ञानवेद्यः, न सविकल्पकज्ञानवेद्यः, न प्रत्यक्षः, न परोक्षः, नोत्पाद्यः, न वाच्यः; किन्त्वलौकिकः, स्वप्रकाशः, अखण्डश्चेति सर्वं स्फुटं साहित्यदर्पणे (३ परि २०–२८)। किं च संयुता एव विभावादयो रसः। यत्र केवलं विभावाद्यन्यतमवर्णनं तत्रेतराक्षेपे रस

---

सारांश—यह हुआ कि विभावादिक के आस्वादन के प्रभाव से ही हमारे आत्मचैतन्य का आवरण ( अज्ञान ) दूर हो जाता है। इसीसे उस आत्मचैतन्य के द्वारा वासनारूप से स्थित रति आदि का प्रकाश होता है। इस प्रकार सामाजिक के हृदय में आत्मानन्दसहित-वासनारूपसे विद्यमान रति आदि का अनुभव रस होता है। पण्डितराज जगन्नाथ ने इस बात को मानकर केवल यह भेद किया कि जब रसास्वादन में आत्मानन्द और रति का साथ है तो फिर आत्मानन्द को गौण और रति आदिको प्रधान मानना उचित नहीं किन्तु यह मानना चाहिये कि रति आदि की प्रतीति गौणरूप से और आत्मानन्द की प्रतीति प्रधान रूप से होती है। हाँ, इतना अवश्य है कि यह आनन्द रति आदि से परिच्छिन्न होकर प्रतीत होता है, समाधि की तरह अपरिच्छिन्न रूप में नहीं, यह अलङ्कारशास्त्र के मत से रस का निरूपण हुआ। यह रसज्ञान ब्रह्मज्ञान के समान ज्ञाप्य नहीं, कार्य नहीं, नित्य नहीं, अनित्य नहीं, न भावी, न वर्तमान, न निर्विकल्पकज्ञान से वेद्य, न सविकल्पकज्ञान से वेद्य, न प्रत्यक्ष, न परोक्ष, न उत्पाद्य और न वाच्य है। किन्तु अलौकिक, स्वप्रकाश और अखण्डरूप है, यह सब साहित्यदर्पण में विस्तार से लिखा गया है। किं च, रस के बोध में विभाव, अनुभाव और सञ्चारी इन सबकी आवश्यकता होती है। यदि कहीं-कहीं इन सबका

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रत्याख्यस्थायिभावात्मा वल्लभादिविभावितः॥
आलस्येर्ष्याजुगुप्साभ्यो विना संचारिभिर्युतः॥ ४॥
अनुभावैः कटाक्षाद्यैरुन्मादाद्यैर्यथाक्रमम् ।
सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः॥ ५॥

इति सिद्धान्तः। एवं वेदान्तोक्तपञ्चीकरणप्रक्रियावदत्रापि पञ्चानामालम्बनोद्दीपनानुभावसंचारिस्थायिभावानां पञ्चीकरणप्रक्रिया भवतीति ज्ञेयम्॥ २-३॥

नवसु रसेषु प्रथमं शृङ्गारमाह—रत्याख्येति पद्यद्वयेन। स्थायिभावा नवरसानां नवैव। तेषु रतिराख्या यस्य तादृशो रत्याख्यः स्थायिभाव आत्मा स्वरूपं यस्य स तथोक्तः। रतिस्थायिभावात्मक इति यावत्। 'रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्' इति रतिलक्षणं दर्पणेऽभिहितम्। वल्लभादिविभावितः—आलम्बनविभावः कान्ता कान्तश्च। उद्दीपनविभावश्चन्दनादयः। द्विविधैरेतैर्विभावैर्युक्तः। यथाक्रमं कटाक्षाद्यैर्नेत्रविक्षेपाद्यैः। आदिना सात्त्विकसंग्रहः। अनुभावैः कार्यरूपैः। आलस्येर्ष्याजुगुप्साभ्य एतेभ्यः संचारिभावेभ्यो विना। उन्मादाद्यैः संचारिभिश्च युक्तः। आदिना हर्षादिसंग्रहः। संचारिभावास्त्रयस्त्रिंशत्तेषु त्रिवर्जं त्रिंशदत्र व्यभिचारिण इति भावः। एषां नामानि वक्ष्यन्ते। एतादृशः शृङ्गारो भवति। स च सम्भोगो विप्रलम्भश्चेति द्विविधो मतः। कविभिरिति शेषः। शृणाति चरमदशाप्रापणेन हिनस्ति कामुकानिति शृङ्गं मन्मथोद्भेदः। 'शॄ-हिंसायाम्' 'शृणातेर्ह्रस्वश्च' इत्युणादिसूत्रेण गुन्नुड्ह्रस्वाः। शृङ्गमृच्छति प्राप्नोतीति शृङ्गारः। कर्मण्यण्। श्यामवर्णो विष्णुदैवतोऽयं शृङ्गारः। परोढामननुरागिणीं वेश्यां विनान्यनायिका, धीरोदात्तादिनायकश्चालम्बनविभावः।

प्रयोग न हो तो अन्यका आक्षेप कर लिया जाता है, यह सिद्धान्त है। इस सिद्धांत के अनुसार वेदान्तदर्शन के पञ्चीकरण की तरह यहाँ भी पाँच भावों अर्थात् आलम्बन, उद्दीपन, अनुभाव, संचारीभाव और स्थायी का पञ्चीकरण होता है॥२-३॥

रस के नौ भेद होते हैं। उनमें प्रथम शृंगार का निरूपण यह है—शृंगार रस में रति स्थायी भाव होता है और ललना आदिक आलंबन विभाव होते हैं। चन्द्रमा, उद्यान आदि उद्दीपन विभाव हैं। कटाक्ष प्रभृति अनुभाव और आलस्य, ईर्ष्या और जुगुप्सा के विना उन्माद, हर्ष प्रभृति व्यभिचारी भावों से यह शृङ्गार रसयुक्त होता है। संभोग और विप्रलम्भ ये शृङ्गार के दो भेद होते हैं। कामचेष्टा की उत्पत्ति शृङ्गार का यौगिक अर्थ है। शृङ्गार का श्याम वर्ण माना गया है। विष्णु इसका देवता है। परोढा तथा प्रेमशून्य वेश्या के विना अन्य सब नायिकायें और धीरोदात्तादि नायक इस रस में आलंबन

CCO. Vasishtha Tripathi Collection: Digitized by eGangotri

नायकनायिकाभेदाः श्रृङ्गारसहायकास्तच्चेष्टाश्चेत्यादि सर्वं रसतरङ्गिण्यां द्रष्टव्यम्। पूर्वराग-मान-प्रवास-करुणभेदैर्विप्रलम्भश्चतुर्धा। पूर्वरागोऽपि नीली-कुसुम्भ-मञ्जिष्ठा-रागभेदेन त्रिधा। अत्र कामदशा दशेष्टाः—

'अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च।
उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः' ॥ इति।

प्रणयेर्ष्यासमुद्भवो मानोऽपि द्विधा। प्रवासो भावी, भवन्, भूतश्चेति त्रिधा। अत्रेमाः कामदशाः—

'अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः।
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥' इति।

करुणविप्रलम्भाख्यश्चैकरूप एव। विप्रलम्भो वियोगश्चेत्यनर्थान्तरम्।

यथा—'उत्तिष्ठ दूति ? यामो यामो यातस्तथापि नायातः।
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः' ॥ इति।

सम्भोगस्वरूपमिदम्—

'दर्शनस्पर्शनादीनि निषेवेते विलासिनौ।
यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः' ॥ इति ॥

---

विभाव माने गये हैं। नायक व नायिकाओं के भेद रसतरंगिणी में देखना चाहिये। पूर्वराग, मान, प्रवास और करुण ये विप्रलम्भ के चार भेद होते हैं। नीली, कुसुम्भ और मञ्जिष्ठा के भेद से पूर्वराग भी तीन प्रकार का होता है। इस पूर्वराग में अभिलाष, चिन्ता, स्मृति, गुणकथन, उद्वेग, संप्रलाप, उन्माद, व्याधि, जडता और मृति ये दश दशायें होती हैं। प्रणय से वा ईर्ष्या से जन्य होने के कारण मान के भी दो भेद होते हैं। भावी, भवन्, भूत ये तीन भेद प्रवास के होते हैं। प्रवास में दश कामदशायें निम्नलिखित हैं—यथा अंगों की असुन्दरता, ताप, पाण्डुता, कृशता, अरुचि, अधृति, अनालम्बन, उन्माद, मूर्च्छना और मृति। करुणविप्रलम्भ श्रृङ्गार तो एक ही प्रकार का होता है। विप्रलम्भ और वियोग ये दोनों पद समानार्थक हैं। 'उत्तिष्ठ दूति यामः' यह श्लोक नायक और नायिका के संयोग न होने से विप्रलम्भ का उदाहरण है। परस्पर अत्यन्त अनुरक्त कामिनी और कामुक के मिथः दर्शन व स्पर्शन प्रभृति चेष्टाओं के सेवन में संभोग श्रृङ्गार होता है। विप्रलम्भ के पश्चात् संभोग होता है। इस कारण पूर्वराग आदि चारों विप्रलम्भों के अनन्तर होने से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हासस्थायी रसो हास्यो विभावाद्यैर्यथाक्रमम्।
वैरूप्यफुल्लगण्डत्वावहित्थाद्यैः समन्वितः ॥ ६ ॥

---

अयमपि चतुर्धा। यथा—

'कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः' ॥ इति ॥

अस्योदाहरणमिदम्—

'नयनाञ्चलावमर्शं या न कदाचित्पुरा सेहे।
आलिङ्गिताऽपि जोषं तस्थौ सा गन्तुकेन दयितेन' ॥ इति ॥ ४-५ ॥

हास्यस्वरूपं व्याचष्टे—हासेति। वैरूप्यं च फुल्लगण्डत्वं चावहित्था चेति वैरूप्यफुल्लगण्डत्वावहित्थास्त आद्या येषां तैस्तादृशैर्विभावाद्यैर्यथाक्रमं समन्वितो युक्तः हासः स्थायी यस्य स हास्यो रसः स्मृतः। नायकनायिकाद्यैरालम्बनविभावैः, वैरूप्यादिभिरुद्दीपनविभावैः, फुल्लगण्डत्वादिभिरनुभावैः, अवहित्थाद्यैः संचारिभिः समन्वितो हासस्थायिभावो हास्यरसतां लभते। हासस्वरूपं यथा साहित्यदर्पणे—

'वागादिवैकृतैश्चेतोविकासो हास इष्यते' इति। हास्यरसस्य श्वेतो वर्णः प्रमथो देवश्च। अस्य षड् भेदाः साहित्यदर्पणे—

'ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च।
नीचानामपहसितं तथातिहसितं तदेष षड्भेदः' ॥ इति।

हास्यस्योदाहरणं यथा—

'गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च।
अमी समाघ्राय च तर्कवादान्समागताः कुक्कुटमिश्रपादाः'। इति ॥

लटकमेलके हास्यपरिपुष्टिः प्रदर्शनीया ॥ ६ ॥

---

यह भी चार प्रकार का होता है—'नयनाञ्चलावमर्शम्०' यह श्लोक परस्पर प्रेमपूर्वक आलिङ्गन के वर्णन से संभोग श्रृङ्गार का उदाहरण है ॥ ४-५ ॥

हास्य का स्वरूप यह है—हास्य रस में हास स्थायी भाव होता है। नायक और नायिका आलम्बनविभाव है। विरूपपुरुष आदि का दर्शन उद्दीपनविभाव तथा गाल फुलाना आदि अनुभाव एवं अवहित्था आदि संचारी भाव होते हैं। हास्य रस का श्वेत वर्ण तथा प्रमथ ( शिव के गण ) इसके देवता होते हैं। इसके छै भेद होते हैं—उत्तम पुरुषों का हास स्मित व हसित होता है, मध्यम-पुरुषों का हास विहसित व अवहसित, एवं नीचों का हास अपहसित व अतिहसित होता है। 'गुरोर्गिरः पञ्च०' यह हास्य का उदाहरण है। मीमांसाशास्त्र को पांच दिन तक, वेदान्त शास्त्र को तीन दिन तक पढ़कर और न्यायशास्त्र का आघ्राण


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अभीष्टविप्रयोगाश्रुपातग्लान्यादिभिः क्रमात् ।
विभावाद्यैर्युतः शोकः स्थायी स्यात् करुणो रसः ॥७॥

करुणं व्याचष्टे—अभीष्टेति । क्रमात्क्रमशः अभीष्टस्य प्रियस्य विप्रयोगो वियोगश्च अश्रुपातश्च ग्लानिश्चादौ येषां ते तैस्तथोक्तैर्विभावाद्यैर्नायकादिभिर्युक्तः शोकः स्थायी यस्य स तादृशः करुणो रसः स्यात् । अत्र नायको नायिका चालम्बनम् । अभीष्टविप्रयोगादिरुद्दीपनम् । अश्रुपातादयोऽनुभावाः । ग्लान्यादयो व्यभिचारिणः । शोकश्च स्थायी भावः । 'शोच्यतेऽनेनेति शोकः । 'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्' इति साहित्यदर्पणे । अयं कपोतवर्णो यमदैवतश्च । करुणविप्रलम्भे लोकान्तरगमनेन वियोगे सत्यपि पुनः संयोगेच्छया रतिर्न विनश्यति । यथोत्तररामचरिते । अत्र तु शोक एव स्थायी भावो भवतीति भेदः । इदं च करुणोदाहरणम्—

'विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्तनम् ॥' इति ।

अस्य परिपोषो रामायणे महाभारतीयस्त्रीपर्वणि च विलोकनीयः । ननु रस आनन्दरूपः, भवति च शृङ्गारादिनानन्दः, रत्यादिस्थायिभावत्वात् । अत्र करुणरसस्य तु शोकस्थायितया कथं सुखजनकतेति चेन्न । अत्र करुणादौ यत्सुखं जायते तत्र सहृदयाः प्रमाणम् । अत एव च करुणरसप्रतिपादके रामायणादौ सहृदयाः प्रवर्तन्ते ।

करके ये महाविद्वान् कुक्कुट मिश्र आये हैं । लटकमेलकनामक रूपकग्रन्थ में हास्य की अधिकता देखिए ॥ ६ ॥

करुण रस का स्वरूप देखिए—करुण रस में शोक स्थायी भाव होता है । प्रियवस्तु के नाश होने से चित्त की विक्लवता को शोक कहते हैं । नायक, नायिका आलम्बन विभाव होते हैं । प्रियवियोग आदि उद्दीपन होते हैं । अनुभाव अश्रुपातादिक हैं । ग्लानिप्रभृति संचारी भाव हैं । इस रस का वर्ण कपोत के समान है । इसका स्वामी यमराज है । करुणविप्रलम्भ शृङ्गार में पुनः संयोग की इच्छा से रति स्थायी भाव होता है और यहां शोक स्थायी भाव है अतः आपस में ये भिन्न हैं । 'विपिने क्व जटानिबन्धनम्' इस श्लोक में शोक का वर्णन होने से करुण रस है । करुण रस की अधिकता रामायण वा महाभारत के स्त्रीपर्व में देखिए । अब यहां यह प्रश्न उपस्थित होता है कि शृङ्गारादिक रस में रति स्थायी रहते हैं अतः उससे तो आनन्द अवश्य होना चाहिये । किन्तु करुणरस में शोक स्थिर रूप से रहता है अतः इससे आनन्दानुभव कैसे होता है ? इसका उत्तर यह है कि करुण रस से भी सुख होता है । अत एव मनुष्य रामायण आदि की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रोधस्थायी रसो रौद्रो विभावाद्यैः समन्वितः।
मात्सर्यहस्तनिष्पेषसंमोहाद्यैर्यथाक्रमम् ॥ ८ ॥

णानि शोकहर्षकारणानि, तैरेव शोकहर्षादयो भवन्तीति लोके नियमो न काव्ये। अत्र त्वलौकिकविभावनत्वादिव्यापारेण शोकादिभ्योऽपि सुरते दन्तघातादिभ्य इव सुखप्रतीतिः। अत्राश्रुपातास्त्वानन्दात्। यथा भगवद्गुणश्रवणे भक्तानामश्रुपाता भवन्ति। यदि चेदन्यथा तदा तादृशि कर्मणि लोकानां प्रवृत्तिर्न स्यात्। एवं करुणादीनामपि सुखजनकतेति सिद्धान्तः ॥ ७ ॥

रौद्रं व्याचष्टे—क्रोधेति। यथाक्रमं क्रमशः। मात्सर्याद्यैर्विभावाद्यैः समन्वितः। अत्राद्यशब्दस्य प्रत्येकमन्वयः 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते' इति नियमात्। तेन मात्सर्याद्यैरुद्दीपनविभावैः हस्तनिष्पेषादिभिरनुभावैः, संमोहादिभिः संचारिभावैः, शत्रुनायकनायिकादिभिरालम्बनविभावैश्च सहितः क्रोधः स्थायी यस्य तादृशः। रक्तवर्णो रुद्राधिदैवत्यो रौद्रो रसो भवति। 'प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते' इति क्रोधस्वरूपम्। क्रोधदीप्तिश्च मुष्टिप्रहारादिना जायते। यथोक्तम्—'मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव। संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढा'॥ इति।

रौद्ररसोदाहरणं यथा—
'नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति।
अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः'॥ इति॥

एषा रामभद्रं प्रति परशुरामस्योक्तिः। अत्र मदोद्धता रचना रौद्रस्य परमौजस्वितां परिपुष्णाति। शत्रुरूपालम्बनैक्येऽपि क्रोधोत्साहरूपस्थायिभावभेदेन रौद्र-

---

शोकपूर्ण कथा सुनने में प्रवृत्त होते हैं। शोक, हर्ष के कारणों से शोक, हर्ष ही होते हैं यह लौकिक नियम है। काव्य में तो शोक आदि के कारण से भी आनन्द ही होता है। जैसे कि सम्भोग में दन्तक्षत आदि से भी सुख होता है। भगवद्भक्ति के आनन्द से ही भक्त लोगों को अश्रुपात भी होता है। इसी प्रकार करुण से सुख ही होता है॥ ७ ॥

रौद्र का निरूपण यह है—रौद्र रस में क्रोध स्थायी भाव होता है। नायक व नायिका आलम्बनविभाव हैं। मात्सर्य आदि उद्दीपन विभाव और मुष्टि प्रहार आदि अनुभाव होते हैं। रौद्र रस का रुद्र देवता है। रक्त (लाल) इसका वर्ण है। "नवोच्छलितयौवन०" इस श्लोक में शिवधनुष के भंग से क्रुद्ध परशुराम के क्रोध की प्रतीति होती है अतः रौद्र रस है। रौद्र और वीर में शत्रुरूप एक ही आलम्बन है तथापि क्रोध व उत्साह रूप स्थायी भाव के भेद से रौद्र और

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्साहाख्यस्थायिभावः प्रभावादिविभावभूः ।
वीरोऽनुभावैः स्थैर्याद्यैर्भावैर्गर्वादिभिर्युतः ॥ ९ ॥
व्याघ्रादिभिर्विभावैस्तु वेपिताद्यनुभावभृत्
भावैर्मोहादिभिर्युक्तो भयस्थायी भयानकः ॥ १० ॥

वीरयोर्भेदोऽवसेयः ॥८॥

वीरं ब्रूते—उत्साहेति। प्रभावादिभ्यो विभावेभ्यो भवतीति तादृशः प्रभावादिभिरुद्दीपनविभावैः, स्थैर्याद्यैः स्थिरत्वादिभिरनुभावैः, गर्वादिभिर्व्यभिचारिभिर्युतः, उत्साह एवाख्या यस्य स तादृश उत्साहाख्य एव स्थायिभावो यस्य स तथोक्तो महेन्द्रदैवतो हेमवर्णो वीररसो भवति। नायकोऽत्रालम्बनविभावः। 'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते' इत्युत्साहस्वरूपं साहित्यदर्पणे। अस्य संचारिणो धृतिमतिगर्वस्मृतितर्करोमाञ्चाः सन्ति। अयं दानवीरः, धर्मवीरः, युद्धवीरः, दयावीरश्चेति चतुर्धा। एवं सत्यक्षमापाण्डित्यबलवीरादयोऽपि भेदा भवितुमर्हन्ति।

धर्मवीरोदाहरणे यथा युधिष्ठिरोक्तिः—

'राज्यं च वसु देहश्च भार्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद् धर्माय सदोद्यतम् ॥' इति ॥

अत्र युधिष्ठिरस्य धर्मार्थं सर्वत्यागोत्साहः प्रतीयते इति धर्मवीरः। अन्येषामुदाहरणान्यन्यत्र द्रष्टव्यानि ॥ ९ ॥

भयानकं निरूपयति-व्याघ्रेति। नायकादिभिरालम्बनविभावैः व्याघ्रादिभिरुद्दीपनविभावैः, मोहादिभिः संचारिभावश्च युक्तो वेपितादीन् कम्पितादीन् अनुभावान् बिभर्तीति तादृशो भयं स्थायी यस्य स तथोक्तो भूताधिदैवतः स्त्रीनीचप्रकृतिः कृष्ण-

---

वीर में भेद होता है ॥ ८ ॥

वीर रस का विवेचन यह है—इन्द्र इसका देवता है। सुवर्ण के समान इसका वर्ण है। उत्साह स्थायी भाव है। नायकादि आलम्बन विभाव; प्रभाव, बल, मद आदि उद्दीपन; स्थैर्य आदि अनुभाव और गर्व प्रभृति संचारी भाव हैं। दानवीर, धर्मवीर, युद्धवीर, दयावीर आदि और सत्य, क्षमा, पाण्डित्य एवं बलवीर आदि वीर रस के भेद हैं। 'राज्यं च वसु देहश्च' यह धर्मवीर का उदाहरण है। यहां धर्मार्थ राज्य व धन आदि के त्याग से युधिष्ठिर के उत्साह की प्रतीति होने से धर्मवीर है। दानवीर आदि के उदाहरण अन्यत्र देखिए ॥९॥

भयानक रस का निरूपण यह है—भूत पिचाश इसके देवता हैं। कृष्ण इसका वर्ण है। स्त्री, नीच मनुष्य व बाल आदि आलम्बन हैं। व्याघ्र आदि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थायी जुगुप्सा बीभत्सो विभावाद्यैर्यथाक्रमम् ।
अनिष्टेक्षणनिष्ठीवमोहाद्याः संमताः क्रमात् ॥ ११ ॥

वर्णो भयानकरसो भवति । 'रौद्रशक्त्या तु जनितं चित्तवैकल्यदं भयम्' इति भयलक्षणम् । अत्र जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताशंकापस्मारसंभ्रान्तिमृत्युप्रभृतिव्यभिचारिभावाः । बालकालम्बनभयानकोदाहरणं यथा—

'घोरमम्भोधरध्वानं निशम्य व्रजबालकाः ।
मातुरंके निलीयन्ते सकम्पविकृतस्वराः' ॥ इति ।

अत्र बालानां मेघध्वनितो भयमुत्पन्नम् । मेघध्वनिरुद्दीपनः, कम्पोऽनुभावः, आवेगादयो व्यभिचारिणः, भयं च स्थायी भाव इति भयानकरसप्रतीतिः ॥ १० ॥

बीभत्सरसमाह—स्थायीति । यथाक्रमं क्रममनतिक्रम्य । विभावाद्यैर्युक्तः । यस्य स्थायी भावो जुगुप्साऽस्ति स नीलवर्णो महाकालदैवतो बीभत्सो रसः कथ्यते । अत्र क्रमादनिष्टेक्षणं दुर्गन्धमांसाद्यालम्बनविभावः । तत्र कृमिपाताद्युद्दीपनविभावः । निष्ठीवो वान्तिरनुभावः । मोहाद्याः संचारिणः सन्ति । 'दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा' इति जुगुप्सानिर्वचनम् । 'गुप गोपनकुत्सनयोः' इति धातोर्निन्दायां 'गुप्तिज्किद्भ्यः सन्' इति सन्प्रत्यये ततश्च 'अ प्रत्ययात्' इत्यनेन स्त्रियामप्रत्यये । पुनश्च टापूकृते जुगुप्सापदं सिद्धम् । एवं बध बन्धने चित्तविकारे च' इति धातोः 'मान्बधदान्' इत्यादिना सन्प्रत्यये 'अ प्रत्ययात्' अनेन अप्रत्यये बीभत्सास्त्यत्रेति बीभत्सः । 'अर्श आदिभ्योऽच्' इत्यनेनाच्प्रत्ययः ।

बीभत्सो यथा—'नखैर्विदारितान्त्राणां शवानां पूयशोणितम् ।
आननेष्वनुलिम्पन्ति हृष्टा वेतालयोषितः ॥' इति ।

अत्र शवा आलम्बनम् । अन्त्रविदारणाद्युद्दीपनम् । आक्षिप्ता रोमाञ्चनेत्रनिमीलनादयोऽनुभावाः । आवेगादयः संचारिणः । एभिः परिपुष्टा जुगुप्सा बीभत्सो रसः ॥ ११ ॥

उद्दीपन विभाव हैं । कम्पन आदि अनुभाव व मोह आदि सञ्चारी भाव हैं । भय इसमें स्थायी भाव है । 'घोरमम्भोधरध्वानम्' यह भयानक का उदाहरण हैं । मेघध्वनि द्वारा बालकों के भय की प्रतीति होने से इसमें भयानक रस होता है ॥ १० ॥

बीभत्स रस यह है—यह नीले वर्ण का है । महाकाल इसके देवता हैं । जुगुप्सा स्थायी भाव है । दुर्गन्ध, मांस आदि आलम्बन हैं । दुर्गन्धित वस्तु में कीड़े पड़ना आदि उद्दीपन होते हैं । उद्वमन प्रभृति अनुभाव होते हैं । मोह आदि सञ्चारी भाव हैं । 'नखैर्विदारितान्त्राणाम्' यह बीभत्स रस का उदाहरण है । यहां मृत मनुष्यों के रुधिर वर्णन से जुगुप्सा ( घृणा ) की प्रतीति होती है अतः बीभत्स रस है ॥ ११ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अद्भुतो विस्मयस्थायी मायादिकविभावभूः ।
रोमाञ्चाद्यनुभावोऽयं स्तम्भादिव्यभिचारिकः ॥ १२ ॥
निर्वेदस्थायिकः शान्तः सत्सङ्गादिविभावभूः ।
क्षमादिकानुभावोऽयं स्तम्भादिव्यभिचारिकः ॥ १३ ॥

अद्भुतं लक्षयति—अद्भुत इति । मायादिका ये विभावास्तेभ्यो भवतीति तादृशः । रोमाञ्चादयोऽनुभावा यस्य स तथोक्तः । स्तम्भादयो व्यभिचारिणो यस्य तथाविधः । विस्मयः स्थायी यस्य सोऽयं पीतवर्णो गन्धर्वदैवतोऽद्भुतरसो भवति । अत्रालौकिकं वस्त्वालम्बनम् । गुणमहिमोद्दीपनम् । नेत्रविकासादयोऽनुभावाः । वितर्कादयो व्यभिचारिणो जायन्ते । 'विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः' इति विस्मयस्वरूपमुक्तम् । अद्भुतो यथा—

'चराचरजगज्जालसदनं वदनं तव । गलद्गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना' ॥ इति ।

भगवतः श्रीकृष्णस्य वदनमालोकितवत्या यशोदाया इयमुक्तिः । अत्र वदनमालम्बनम् । अन्तर्गतचराचरदर्शनमुद्दीपनम् । हृतचेतनागम्यं रोमाञ्चादि चानुभावः । त्रासादयो व्यभिचारिणः । एभिः परिपुष्टो यशोदाविस्मयोऽद्भुतरसो भवति सामाजिकानां हृदयेषु ॥ १२ ॥

शान्तं निरूपयति—निर्वेदेति । सत्सङ्गादिभ्यो विभावेभ्यो भवतीति सत्सङ्गादिविभावभूः सज्जनविद्वत्संगमाद्युद्दीपनविभावजन्यः । क्षमादिकोऽनुभावो यस्य सः । स्तम्भादिर्व्यभिचारी भावो यस्य तथोक्तः । निर्वेदः संसारदुःखानुभवः स्थायी यस्य स तादृशः शान्तरसो भवति । साहित्यदर्पणे शान्तरसस्य स्थायी भावः शम उक्तः ।

---

अद्भुत रस यह है—इसके देवता गन्धर्व हैं । पीत इसका वर्ण है । विस्मय ( आश्चर्य ) इसमें स्थायी भाव होता है । माया ( इन्द्रजाल ) आदि उद्दीपन, अलौकिक वस्तु आलम्बन, रोमाञ्च और नेत्रविकास आदि अनुभाव और स्तम्भ-वितर्कप्रभृति व्यभिचारी भाव होते हैं । 'चराचरजगज्जाल०' यह श्लोक इसका उदाहरण है । यहां श्रीकृष्ण भगवान् के मुख में चराचर संसार को देखने से यशोदा के विस्मय की प्रतीति होती है अतः अद्भुत रस है । इसमें भगवान् का मुख आलम्बन, 'चराचर का दर्शन' उद्दीपन, रोमाञ्चादि अनुभाव, त्रासादिक व्यभिचारी भाव हैं ॥ १२ ॥

शान्त का निरूपण करते हैं—शान्तरस में सज्जनसंगति आदि उद्दीपनविभाव, क्षमा आदि अनुभाव, स्तम्भप्रभृति व्यभिचारी भाव और निर्वेद स्थायी भाव, होता है । साहित्यदर्पण में शम को शान्त रस का स्थायी भाव बतलाया है ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तल्लक्षणं चेदम् 'शमो निरीहावस्थायाम् स्वात्मविश्रामजं सुखम्' इति। उत्तमप्रकृतिः श्रीनारायणदैवत्यः कुन्दवर्णोऽयं रसः। सांसारिकवस्तुवैराग्यं परमात्मस्वरूपं वात्रालम्बनम्। पुण्याश्रमतीर्थादिरुद्दीपनम्। रोमाञ्चादयोऽनुभावाः। हर्षादयो व्यभिचारिणश्च। महाभारते चास्य पुष्टिः। प्रवृत्तिर्निवृत्तिश्चेति संसारे द्वे सरणी। तत्र प्रवृत्तिमार्गावलम्बिनां मते शृङ्गारप्राधान्यं निवृत्तमार्गगानां मते च शान्तप्राधान्यम्। शान्तं विनाष्टौ रसा नाट्ये, काव्ये च तत्सहिता नवेति केषांचिन्मते। रसगङ्गाधरे तु—'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्। तदचारु यतः कञ्चिन्न रसं स्वदते नटः'॥ इति सङ्गीतरत्नाकरप्रामाण्यान्नाट्येऽपि नवैव रसा इति प्रतिपादितम्। योऽयं निर्वेदः स्थायी तस्य लक्षणमपि तत्रैव 'नित्यानित्यवस्तुविचारजन्मा विषयविरागाख्यो निर्वेदः स्थायी, गृहकलहादिजस्तु व्यभिचारी' इति शान्तोदाहरणं भर्तृहरिवैराग्यशतके—

'अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिवशिवशिवेति प्रलपतः'॥ इति॥

इस रस का कुन्द के पुष्प के समान रङ्ग है और श्रीनारायण इसके देवता हैं। उत्तम प्रकृति के पुरुषों में इसका उदय होता है। सांसारिक वस्तुओं में वैराग्य और परमात्मा का स्वरूपचिन्तन आदि इसमें आलम्बन, पुण्य तीर्थ-आश्रम आदि उद्दीपन, हर्षादिक व्यभिचारी और रोमाञ्चादिक अनुभाव होते हैं। महाभारत के शान्तिपर्व में इनका प्रचुर वर्णन प्राप्त होता है, संसार में प्रवृत्ति और निवृत्ति ये दो मार्ग हैं। इनमें प्रवृत्ति मार्गवाले शृङ्गार को प्रधान और संसार से निवृत्ति चाहनेवाले शान्त रस को प्रधान कहते हैं। नाटक में शान्त के विना आठ रस और काव्य में नौ रस यह किसी २ विद्वान् का मत है। रसगंगाधर में तो 'अष्टावेव०' इस संगीतरत्नाकर के श्लोक के आधार पर नाटक में भी नौ ही रस माने हैं। और शान्त रस के स्थायी भाव निर्वेद का स्वरूप यह बतलाया है—नित्य व अनित्य के विचार से संसार की वस्तुओं पर वैराग्य होने को निर्वेद कहते हैं। गृह के कलहादि से संसार की विरक्ति से जो निर्वेद हो वह व्यभिचारी भाव माना गया है। 'अहौ वा हारे वा' यह भर्तृहरि के वैराग्यशतक का श्लोक शान्त रस का उदाहरण है। इस श्लोक में सांसारिक उत्तम व अधम वस्तुओं पर समान दृष्टि बतलाकर कविने पवित्र तीर्थ में परमात्मचिन्तन का वर्णन

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रतिर्देवादिविषया सन्ति च व्यभिचारिणः ।

नवानामेतेषां मध्ये वीरशृङ्गारयोः, शृङ्गारहास्ययोः, वीराद्भुतयोः, वीररौद्रयोः, शृङ्गाराद्भुतयोश्च परस्परमविरोधः । शृङ्गारबीभत्सयोः, शृङ्गारकरुणयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोश्च मिथो विरोधः । रसपोषाय विरुद्धयोरेकत्र समावेशो न कार्यः । रसदोषाश्च त्याज्याः । गुणास्तदनुकूला रचना चोपादेयाः । रसशब्दोक्तिः, स्थायिशब्दोक्तिः, व्यभिचारिशब्दोक्तिः, प्रतिकूलविभावादिग्रहः, अनुभावकष्टाक्षेपः, विभावकष्टाक्षेपः, अकाण्डमथनम्, अकाण्डच्छेदः, पुनःपुनर्दीप्तिः, अङ्गयननुसन्धानम्, अनङ्गाभिधानम्, अङ्गातिविस्तृतिः, प्रकृतिविपर्ययः, अर्थानौचित्यं चेति चतुर्दश रसदोषाः । माधुर्यमोजः प्रसादश्चेति त्रयो गुणाः । एतेषु माधुर्यं क्रमशः सम्भोगे करुणे विप्रलम्भे शान्ते चाधिकं तिष्ठति । मधुरा रचना चात्र व्यञ्जिका । ओजो वीरबीभत्सरौद्रेषु क्रमेणाधिकं तिष्ठति । ओजस्विनी रचना च व्यञ्जिका । प्रसादः समस्तरसेषु समस्तासु रचनासु च निवसति । एवं रसाः प्रतिपादिताः ॥ १२ ॥

भावान्निरूपयति—रतिरिति । विभावानुभावाभ्यामभिव्यक्ता देवादिविषया रतिर्नि-

---

किया है । इन नव रसों में वीर और शृङ्गार का, शृङ्गार और हास्य का, वीर तथा अद्भुत का, वीर का रौद्र के साथ और शृङ्गार का अद्भुत के साथ आपस में विरोध नहीं होता । अर्थात् ये रस एक श्लोक में भी बतलाये जा सकते हैं । शृङ्गार का बीभत्स और करुण के साथ, वीर और भयानक का, शान्त और रौद्र का तथा शान्त व शृङ्गार का आपस में विरोध होता है । रसकी पुष्टि के लिये विरुद्ध रसों का एकत्र सामवेश नहीं करना चाहिए । रस में दोष भी नहीं होने चाहिए । गुण तथा रसानुकूल रचना होनी चाहिए । रसशब्दोक्ति, स्थायिशब्दोक्ति, व्यभिचारिशब्द का कथन, प्रतिकूलविभावादिक का कथन, अनुभाव तथा विभाव का कठिनता से आक्षेप, अकाण्डमथन, असमय में विनाश, पुनःपुनर्दीप्ति, अङ्गी का अननुसन्धान, अनङ्ग रसका कथन, अङ्ग रस का अधिक विस्तार, प्रकृतिविपर्यय और अर्थानौचित्य ये चौदह रसदोष हैं । माधुर्य, ओज और प्रसाद ये तीन गुण हैं । इनमें माधुर्यगुण क्रमसे संभोग, करुण, विप्रलम्भ और शान्त में अधिकता से रहता है । मधुर रचना इसके उपयोगी होती है । ओजोगुण में ओजस्विनी रचना होती है । यह गुण क्रमसे वीर बीभत्स व रौद्र रस में अधिक रहता है । प्रसाद गुण सर्व रसों में और सब तरह की वर्णरचनाओं में रहता है यह रसों का निरूपण हुआ ॥ १२ ॥

अब भावों का निरूपण लीजिए—देव-नृप आदि की स्तुति तथा तैंतीस

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेद्यमाना निगद्यन्ते भावाः साहित्यवेदिभिः ॥ १४ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।

---

र्वेदादिश्च भाव उच्यते। देवादिविषया रतिर्व्यज्यमाणा निर्वेदादयश्च ये व्यभिचारिभावाः सन्ति ते वेद्यमाना व्यज्यमानाः सन्तः साहित्यवेदिभिरालङ्कारिकैर्भावा निगद्यन्ते कथ्यन्ते। यद्यपि रसवर्जितो भावो न भवति भावहीनश्च रसो न भवतीति नास्ति विविक्तस्थानं भावस्य तथापि राजानुगतविवाहप्रवृत्तभृत्यवत्प्राधान्येनाभिव्यक्ता देवादिविषया रतिः सञ्चारिणो रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्या भवन्ति। देवराजादिस्तुत्यादिवर्णने देवादिविषया रतिर्ज्ञेया ॥ १४ ॥

त्रयस्त्रिंशन्निर्वेदादीनाह—निर्वेदेति। निर्वेदो ग्लानिः शङ्का चेति निर्वेदग्लानिशंकाः। ता आख्या येषां ते तथोक्ताः। निर्वेदो यथा—

'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।
दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्' ॥ इति ॥

यथा—'मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना।
दक्षिणावर्तशङ्खोऽयं हन्त चूर्णीकृतो मया' ॥

अत्र तत्त्वज्ञानान्निर्वेदः। आधिव्याधिजन्यबलहानिप्रभवो वैवर्ण्यशिथिलाङ्गत्वदृग्भ्रमणादिहेतुर्दुःखविशेषो ग्लानिः। मम किमनिष्टं भविष्यतीत्याकारश्चित्तवृत्तिविशेषः शङ्का। परोत्कर्षासहिष्णुत्वमसूया। मदो मद्यादिजन्यः। श्रमः सुरतादिजनितः

---

व्यभिचारिभावों की प्रतीति व्यञ्जना से होवे तो भावध्वनि के नाम से कही जाती है। जहां रस होता है, वहां भाव भी होता है और जहां भाव है वहां रस है। इसलिये रस की सत्ता में भावध्वनि का प्राधान्य कैसा ?। इसका उत्तर यह है कि विवाह में दूलह बने हुए दीवान वगैरह के पीछे चलते हुए राजा की तरह रस की अपेक्षा भाव की प्रधानता होने के कारण काव्य में भावध्वनि कही जाती है। देवता वा राजा आदि की स्तुति में देव-नृप आदि की रति की प्रतीति करनी चाहिए ॥ १४ ॥

तैंतीस व्यभिचारी भाव ये हैं—सच्चे ज्ञान से पश्चात्ताप करना निर्वेद होता है। मानसिक कष्ट से उत्पन्न हुई निबलता के दुःख को ग्लानि कहते हैं। क्या होगा ? यह विचार शङ्का है। परोत्कर्ष को न सहना असूया होती है। मद्य आदि के नशे को मद कहते हैं। सम्भोग आदि से उत्पन्न हुई थकावट को श्रम कहा है। कार्य करने में प्रवृत्ति न होना आलस्य होता है। दीनता को दैन्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १५ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ १६ ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १७ ॥

खेदः । आलस्यं क्रियानुन्मुखत्वम् । दैन्यं दीनता । चिन्ता ध्यानम् । मोहः अज्ञानम् स्मृतिः संस्कारजन्यं ज्ञानम् । धृतिर्धैर्यम् ॥ १५ ॥

व्यभिचारिभावानेवाह—व्रीडेति । व्रीडा लज्जा । चपलता चाञ्चल्यम् । इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः । अनर्थातिशयजनिता चित्तस्य सम्भ्रमाख्या वृत्तिरावेगः । कार्याविवेको जडता । तथा रूपधनविद्याप्रयुक्ता परावहेलना गर्वः । राजापराधादिजन्योऽनुतापो विषादः । अधुनैवास्य लाभो भवत्विती च्छा औत्सुक्यम् । चेतःसम्मीलनं निद्रा । ग्रहाद्यावेशनादिजन्यो मनोविक्षेपात्मको रोगविशेषोऽपस्मारः ॥

तानेवाह—सुप्तमिति । निद्राविभावोत्थज्ञानं सुप्तम् । निद्रानाशोत्तरं जायमानो बोधः प्रबोधः । परकृतावज्ञादिनानापराधजन्यो मौनवाक्पारुष्यादिकारणीभूतश्चित्तवृत्तिविशेषोऽमर्षः । आकारगोपनाय भावविशेषोऽवहित्थम् । अधिक्षेपादिजन्या किमस्य करोमीत्याकारा चित्तवृत्तिरुग्रता । शास्त्रादिविचारजन्यमर्थनिर्धारणं मतिः । रोग-

---

कहते हैं । किसी प्रकार का विचार करना चिन्ता है । सत्य ज्ञान न होना मोह है । पूर्व अनुभूत पदार्थ के स्मरण को स्मृति कहते हैं । धैर्य रखना धृति नाम से प्रसिद्ध है ॥ १५ ॥

और व्यभिचारी भाव ये हैं—किसी कार्य से नम्र मुख करना व्रीडा ( लज्जा ) होती है । चपलता का अर्थ चञ्चलता है । अभीष्ट पदार्थ की प्राप्ति के आनन्द को हर्ष कहा है । किसी अनर्थ के कारण चित्त की घबराहट को आवेग कहते हैं । कार्य में मूढ़ता को जडता कहा है । रूप, धन और विद्या के कारण दूसरे की अवज्ञा करना गर्व होता है । राजा आदि के अपराध से जो पश्चात्ताप होता है वह विषाद है । इसी समय यह कार्य होवे इस चित्तवृत्ति को औत्सुक्य कहते हैं । निद्रा चित्त की सम्मीलनावस्था है । पिशाच आदि के आवेश से उत्पन्न मन के विक्षेप को अपस्मार कहते हैं, यह मिर्गी रोग के नाम से प्रसिद्ध है ॥ १६ ॥

व्यभिचारी भाव और देखिए—शयनावस्था सुप्तनाम से प्रसिद्ध है । जागरण प्रबोध कहा जाता है । क्रोध को अमर्ष कहते हैं । अपनी आकृति के गोपन को अवहित्था कहते हैं । इसने मेरा तिरस्कार किया अब मैं इससे क्या बदला लूँ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः समाख्यातास्तु नामतः ॥ १८ ॥
सर्वसाधारणप्रेमप्रश्रयादिस्वरूपया ।
अनौचित्या रसाभासा भावाभासाश्च कीर्तिताः ॥ १९ ॥

---

विरहादिप्रभवो मनस्तापो व्याधिः । तथोन्मादो विप्रलम्भादिजन्मान्यस्मिन्नन्यावभासात्मकः । रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम् ॥ १७ ॥

अवशिष्टान् भावानाह—त्रासश्चैवेति । त्रासस्वरूपमुक्तम्—'औत्पातिकैर्मनःक्षेपस्त्रासः कम्पादिकारकः' इति । सन्देहाद्यनन्तरं जायमान ऊहो वितर्कः । नामतः समाख्याताः कथिताः । इमे त्रयस्त्रिंशद् व्यभिचारिणो भावा विज्ञेयाः । एते व्यभिचारिभावा रससहकारिणः । यदा चैतेषां राजानुगतविवाहप्रवृत्तभृत्यवत् प्राधान्येनाभिव्यक्तिस्तदा च साहित्यिकैर्भावध्वनिरुच्यते । त्रयस्त्रिंशदिमे सञ्चारिभावाः स्थायिनः सात्त्विका देवादिविषयिणी रतिश्च प्राधान्येनाभिव्यक्ता भावध्वनितयोच्यन्ते ॥

रसाभासभावाभासान्व्याचष्टे—सर्वेति । प्रेमा च प्रश्रयश्च प्रेमप्रश्रयौ सर्वेषां साधारणौ च प्रेमप्रश्रयौ च सर्वसाधारणप्रेमप्रश्रयौ तावादी स्वरूपं यस्याः सा तया । अनौचित्या रसाभासा भावाभासाश्च कीर्तिताः कथिताः । एकस्या नायिकाया अनेकनायकविषयकस्नेहवर्णने रसोऽपि रसाभासो भवति । एवमेकस्यानेकदेवतादिविषयकरत्यादिवर्णने भावोऽपि भावाभासो भवति । रसवदाभासतेऽसौ रसाभासः, अनुचितवर्णने रसाभास इति भावः ।

---

यह विचार उग्रता है । शास्त्रीय आज्ञा से किसी कार्य के निश्चय को मति कहते हैं । रोग वा वियोग के कारण मनका सन्ताप व्याधि है । विप्रलम्भ ( वियोग ) आदि से अन्य वस्तु में अन्य के ज्ञान ( शुक्ति में रजत के ज्ञान ) को उन्माद कहा है । रोग के कारण मूर्च्छा होना व मरणासन्न होना मरण का स्वरूप है ॥ १७ ॥

अवशिष्ट व्यभिचारी भाव यह है—किसी उत्पात के कारण कम्प व भय को त्रास कहते हैं । सन्देह के अनन्तर उत्पन्न हुई तर्कना को वितर्क कहते हैं । यह तर्क निश्चय का उत्पादक माना गया है । ये सब तैंतीस व्यभिचारी ( संचारी ) भाव, स्थायिभाव, सात्त्विकभाव, और देव-नृप आदि की रति ( प्रेम ) प्रधान रूप से ध्वनित होने पर भावध्वनि होती है ॥ १८ ॥

रसाभास आदि का स्वरूप देखिए—एक नायिका की अनेक पुरुषों के साथ रति होने से अनौचित्य के कारण रसाभास और एक पुरुष की अनेक देवता आदि में भक्ति अनौचित्य के कारण भावाभास होता है । तात्पर्य यह हुआ कि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भावस्य शान्तिरुदयः सन्धिः शबलता तथा ।

यथोक्तम्—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यनिबन्धस्तु रसस्योपनिषत्परा' ॥ इति ॥

साहित्यदर्पणे रसाभासभावाभासनिमित्तानि निगदितानि—

'उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते । शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये । ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ।' इति ॥
'भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्' ॥ इति च ॥

शृङ्गाराभासोदाहरणं यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः' ॥ इति ॥

अत्र तिर्यग्विषयकरतिवर्णनाच्छृङ्गाराभासः। अन्यान्यन्यत्रोदाहरणानि ज्ञेयानि॥

भावशान्त्यादीन्निरूपयति-भावेति । भावस्य व्यभिचारिभावादेः शान्तिर्विनाशः भावशान्तिः । भावस्योदयः उद्गमो भावोदयः । भावद्वयस्य क्रमेण कथनं भावसन्धिः । तथा बहूनां भावानां कथनं भावशबलता । एता अपि भावशान्त्यादयः

---

अनुचित वर्णन में रसाभास भावाभास होते हैं । अनौचित्य के कारण साहित्यदर्पण में ये बतलाये हैं—उपपति का प्रेम, मुनि व गुरुपत्नी के साथ रति, स्त्री का अनेक पुरुषों से प्रेम, स्त्री और पुरुष में आपस में प्रेम का न होना, स्त्री का पतिविरोधी पुरुष से प्रेम; नीच, पशु व पक्षियों की रति का वर्णन करना शृङ्गार रस में अनुचित होता है । गुरु आदि के क्रोध का वर्णन रौद्र रस में अनुचित है । नीच पुरुष में शान्त रस का बताना, गुरु आदि से हास्य करना, अधमपात्र में वीरता और ब्राह्मण के वध में उत्साह, उत्तम पुरुष में भयानक रस बताना आदि अनुचित होते हैं । वेश्यादिक में लज्जा बताना अनुचित होने से भावाभास होता है । 'मधु द्विरेफः कुसुमैकपात्रे' यह श्लोक भ्रमर के सम्भोग वर्णन से शृङ्गाराभास का उदाहरण है और उदाहरण अन्यत्र देखिये ॥ १९ ॥

भावशान्त्यादि का स्वरूप यह देखिए—व्यभिचारि भाव के विनाश को भावशान्ति और उत्पत्ति को भावोदय कहते हैं । दो भावों के वर्णन में भावसन्धि होती है तथा अनेक भावों की ध्वनि में भावशबलता होती है । जिस प्रकार

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काव्यस्य काञ्चनस्येव कुङ्कुमं कान्तिसंपदे ॥ २० ॥

काव्यस्य कविकर्मणः । काञ्चनस्य सुवर्णस्य कुङ्कुममिव केसरमिव कान्तिसम्पदे शोभाप्राप्त्यै । भवन्तीति शेषः । भावशान्तिरुदाह्रियते—

'मुञ्चसि नाद्यापि रुषं भामिनि मुदिरालिरुदियाय ।
इति तन्व्याः पतिवचनैरपायि नयनाब्जकोणशोणरुचिः' ॥ इति ॥

अत्र नेत्ररक्तताविनाशवर्णनेन रोषविनाशभावध्वनिः । भावोदयो यथा—

'वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी ।
अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम्' ॥ इति ॥

अत्र प्रियांसदेशवलयीकृतनिजबाहुलताकर्षणेन रोषाख्यभावस्योदयो व्यङ्ग्यः ।
भावसन्धिमुदाहरति—

'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः ।
सङ्कुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः' ॥ इति ॥

अत्र नयनसङ्कोचविकासाभ्यां व्रीडौत्सुक्ययोः सन्धिर्व्यज्यते ।
भावशबलतामुदाहरति—

'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाभिधत्ते ॥ इति ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यप्रबोधौत्सुक्यानां शबलताध्वनिः । एतेषु भावशान्त्यादिषु भावनामेव प्राधान्यं न तु शान्त्यादीनाम् । भावचर्वणायामेव चमत्का-

---

सुवर्ण में कुङ्कुम से शोभा बढ़ जाती है, वैसे ही इन भावशान्त्यादिक की ध्वनि से काव्य की सुषमा बढ़ती है । 'मुञ्चसि नाद्यापि रुषं' यह भावशान्ति का उदाहरण है । यहां नेत्रों की रक्तता मिट जाने से अमर्षरूपभाव की शान्ति व्यङ्ग्यरूप से जानी जाती है । 'वीक्ष्य वक्षसि विपक्ष' यह भावोदय का उदाहरण है । नायिका ने पति के वक्षःस्थल में सपत्नी के हार को चिह्न देखकर आलिङ्गन करना छोड़ दिया । यहां इस वर्णन से अमर्ष ( रोष ) नामक भाव की उत्पत्ति जानी जाती है । 'यौवनोद्गमनितान्तशङ्किताः' यह भावसन्धि का उदाहरण है । यहां नेत्रों के संकोच और विकास से व्रीडा और औत्सुक्य भाव की प्रतीति होने से भावसंधि होती है । 'पश्येत्कश्चिच्चल चपल रे' यह भावशबलता का उदाहरण है । यहां शङ्का, असूया, धृति, स्मृति, श्रम, दैन्य, प्रबोध और औत्सुक्य भावों की प्रतीति से भावशबलता की ध्वनि होती है । इन भावशान्त्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आतुर्यमासप्तमं च यथेष्टैरष्टमादिभिः ।
समासः स्यात्पदैर्न स्यात्समासः सर्वथापि च ॥ २१ ॥
पाञ्चालिकी च लाटीया गौडीया च यथारसम् ।
वैदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः ॥ २२ ॥

---

रोदयात् । एते रसभावरसादयोऽलक्ष्यक्रमव्यङ्ग्याः । पद-वर्ण-रचना वाक्य प्रबन्ध-पदांशध्वनयश्च व्यञ्जकाः ॥ २० ॥

काव्यलक्षणनिर्दिष्टरीतिनिरूपणं पद्यद्वयेन व्याचष्टे—आतुर्यमिति । वामनो रीति-प्राधान्यं स्वीचक्रे 'रीतिरात्मा काव्यस्य' । 'विशिष्टा पदरचना रीतिः' इति काव्या-लङ्कारसूत्रेऽत्र प्रमाणभूते । वैदर्भी-गौडी-पाञ्चालीति तिस्रो रीतयो वामनमते । रुद्रटमते लाटी रीतिरधिका । महाराजभोजस्य शृङ्गारप्रकाशे—अवन्तीमागधीसहिताः पूर्वोक्ता रीतयः षट्संख्याः । अत्र ग्रन्थे चतस्रः । आतुर्यमाचतुर्थं यथा तथा पदैः समासः स्यात्तदा पाञ्चालिकी रीतिः । अत्राङवधौ । क्रियाविशेषणं चेदम् । आसप्तमं च यथा तथा पदैः समासः स्यात्तदा लाटीया लाटदेशप्रिया रीतिः । अष्टमादिभिर्यथेष्टैः पदैः समासो यदा तदा गौडदेशप्रिया गौडीया रीतिः । सर्वथापि समासो यदा न स्यात्तदा वैदर्भी रीतिर्विदर्भदेशप्रिया । अयमाशयः—द्वित्रिचतुष्पदानां समासे पाञ्चाली पञ्च-षट्सप्तपदानां समासे लाटीया, अष्टमादियथेष्टपदसमासे गौडीया, सर्वथा समासाभावे वैदर्भी रीतिरिति यथासंख्यं चतस्रो रीतयः स्मृताः कथिताः । पाञ्चालदेशे भवा पाञ्चा-लिकी । लाटदेशे भवा लाटीया, गौडदेशे भवा गौडीया, विदर्भदेशे भवा वैदर्भीति रीतयः प्रसिद्धाः । रसमनतिक्रम्येति यथारसं रीतयो भवन्ति । शृङ्गारे वैदर्भी रौद्रवी-रयोर्गौडीया, अन्यत्र पाञ्चालीलाटीये रीती स्तः । रीतिलक्षणं साहित्यदर्पणे—'पदसं-

---

दिक ध्वनियों में शान्त्यादिक की प्रधानता नहीं होती; किन्तु भावों की चर्वणा में ही प्रधानता होती है। ये रस, भाव, रसाभास और भावाभास आदि सब अलक्ष्यक्रमव्यङ्ग्य कहे जाते हैं। पद, वर्ण, रचना, वाक्यप्रबन्ध और पदैकदेश उक्त ध्वनियों के व्यंजक होते हैं ॥ २० ॥

अब काव्यलक्षण में उक्त रीतिका निरूपण दो श्लोकों से किया जाता है—वामन आचार्य ने रीतिको ही काव्य की आत्मा माना है तथा वैदर्भी, गौडी और पांचाली ये तीन रीतियां भी मानी हैं। रुद्रट ने लाटी रीति अधिक मानी है। महाराज भोज ने शृंगारप्रकाश में अवन्ती व मागधी सहित छै रीतियां मानी हैं। इस ग्रन्थ में चार रीतियां मानी गई हैं। दो, तीन, चार पदों तक के समास करने पर पाञ्चाली; पांच छै, सात पदों तक के समास में लाटीया; आठ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

घटना रीतिरङ्गसंस्थाविशेषवत्' इत्युक्तम् । रीयते गुणानां विशेषो ज्ञायतेऽनयेति रीतिः । 'रीङ्गतौ' इति धातोः स्त्रियां क्तिन् । यद्यपि रौद्रवीरयोर्गौडीया रीतिर्भवति तथापि कुत्रापि वक्तुरौचित्याद्वीरेऽपि वैदर्भी रीतिर्भवति । यथा—'भो लंकेश्वर ! दीयतां जनकजा रामः स्वयं याचते' इत्यादौ वीरे रसेऽपि वक्तुः श्रीरामस्यानुद्धत-तया वैदर्भीरीत्यनुकूला सुकुमाररचना । काव्यप्रकाशे तूपनागरिकापरुषाकोमलाख्या वृत्तय एव वैदर्भीगौडीपाञ्चाल्याख्या रीतय इत्युक्तम् । पाञ्चालिकीमुदाहरति—

'मदननृपतियात्राकालविज्ञापनाय स्फुरति जलधिमध्ये ताम्रपात्रीव भानुः ।
अयमपि पुरुहूतप्रेयसीमूर्ध्नि पूर्णः कलश इव सुधांशुः साधुरुल्लालसीति' ॥ इति ॥

अत्र प्रथमपादे चतुष्पदानां समासे पाञ्चाली रीतिः ।

'अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि' ॥ इत्यत्र लाटीया ॥

पञ्चषपदानां समाससद्भावात् । गौडीया यथा वेणीसंहारे—

'चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः' ॥ इति ॥

अत्र समासबाहुल्याद् गौडी रीतिः । वैदर्भी यथा नैषधे—

'निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् ।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः' ॥ इति ॥

---

वा इनसे अधिक पदों के समास में गौडीया और बिल्कुल समास न करने पर वैदर्भी रीति मानी जाति है । भिन्न २ देशों के उच्चारण के कारण रीतियां प्रसिद्ध हुई हैं । पदयोजना को रीति कहते हैं । 'रीयतेऽनयेति रीतिः' जिसमें गुणों की विशेषता जानी जावै यह रीति पद का यौगिक अर्थ है । यद्यपि वीर और रौद्र में गौडीया रीति होती है तथापि वक्ताके स्वभाव के कारण वीर रस में भी वैदर्भी रीति आ जाती है । 'भो लंकेश्वर दीयतां जनकजा' यहां शान्तशील श्रीरामचन्द्र की उक्ति होने से सुकुमाररचना से वीर में भी वैदर्भी रीति है । काव्यप्रकाश में उपनागरिका, परुषा और कोमला इन तीनों वृत्तियों के ही वैदर्भी, गौडी और पाञ्चाली ये नामान्तर बतलाये हैं । 'मदननृपतियात्राकालविज्ञा-पनाय'—यहां प्रथमपाद में चार पदों का पञ्चम पद के साथ समास होने से पाञ्चाली रीति है । 'अयमुदयति मुद्राभञ्जनः' यहां पांच, छः पदों का समास होने से लाटीया रीति है । 'चञ्चद्भुजभ्रमितचण्ड०' इस वेणीसंहार के श्लोक में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मधुरायां समाक्रान्ता वर्गस्थाः पञ्चमैर्निजैः ।
लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ ॥ २३ ॥

---

अत्राल्पसमासाद्वैदर्भी रीतिः । अस्यामल्पसमासः समासाभावो वा भवति॥२१-२२॥

अथ काव्यलक्षणोक्तवृत्तीर्निरूपयिष्यन्नादौ मधुरां वृत्तिं व्याचष्टे—मधुरायामिति । विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः, वेषविन्यासक्रमश्च प्रवृत्तिरिति काव्यमीमांसायां ( प्रथमाधिकरणे तृतीयाध्याये ) लक्षणानि प्रख्यापितानि । तदुक्तं विष्णुपुराणे—

'वेषभाषानुकरणात् तथाचारप्रवर्त्तनात् ।
संक्षेपेण समाख्याता वृत्तिरीतिप्रवृत्तयः' ॥ इति ॥

तेन कैशिकीसात्वत्यारभटीभारतीति नाटकवृत्तीनामेव मधुराप्रौढापरुषाललिताभद्राख्या इति केचित् । मधुरादिवृत्तीनां विलासविन्यासक्रमरूपत्वात् । अत एव काव्यलक्षणविवरणावसरे ( ९ पृष्ठे ) नाटकवृत्तीनामप्युल्लेखो विहितोऽस्माभिः । निजैर्निजवर्गस्थैः पञ्चमैर्वर्णैङकारादिभिः समाक्रान्ता युक्ता वर्गस्थाः कवर्गादिवर्गस्थिताश्चत्वारो वर्णाः कखगघादयो मधुरायां भवन्ति । पुनश्च लसंयुक्तो लकारसहितो लकारः । तथा ह्रस्वव्यवहितौ ह्रस्वाक्षरान्तरितौ रणौ रेफणकारौ च मधुरायां स्तः । साहित्यदर्पणे त्वयं विशेषो यदस्यां वृत्तौ टठडढा वर्णा न भवन्तीति । 'अङ्गभङ्गोल्लसल्लीला तरुणीस्मरतोरणम्' इत्युदाहरणमग्रे वक्ष्यते ॥ २३ ॥

---

लम्बे समास होने से गौडीया रीति है । 'निविशते यदि शूकशिखा' इस नैषध के पद्यमें अल्पसमास होने से वैदर्भी रीति है । वैदर्भी में समासाभाव वा अल्पसमास होता है ॥ २१-२२ ॥

काव्यलक्षणमें वर्णित वृत्तियों के निरूपण में प्रथम मधुरावृत्ति देखिए— विलासविन्यास के क्रम को वृत्ति, वचनविन्यास के क्रम को रीति एवं वेषविन्यास की परिपाटी को प्रवृत्ति विष्णुपुराण व काव्यमीमांसा में लिखा है । वृत्तियों का स्वरूप विलासविन्यासरूप होने से कैशिकी, सात्वती, आरभटी और भारती इन नाटकवृत्तियों ही का नामान्तर मधुरा, प्रौढा, परुषा, ललिता व भद्रा वृत्तियां हैं । इसीलिए काव्यलक्षण के विवेचन ( ९ पृष्ठ ) में कैशिकी आदि नाटकवृत्तियों का भी उल्लेख किया गया है । वर्ग के चार अक्षर ( क, ख, ग, घ आदि ) अपने पांचवें सानुनासिक ( ङ, ञ, ण, न, म ) वर्णों से संयुक्त हो और लकार का लकार के साथ संयोग हो तथा रेफ, णकार और ह्रस्वाक्षरों से युक्त हो तो मधुरा वृत्ति होती है । दर्पण के मतानुसार इस वृत्तिमें ट ठ ड ढ वर्ण नहीं होने चाहिये । 'अङ्गभङ्गोल्लसल्लीला' यह इसका उदाहरण आगे लिखा गया है ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रेफाक्रान्ता वर्ग्ययणाष्टवर्गात्पञ्चमादृते ।
कपाक्रान्तस्तवर्गः स्यात्प्रौढायां च कमूर्धता ॥ २४ ॥
सर्वैरूर्ध्वैः सकारस्य सर्वे रेफस्य सर्वथा ।
रहोर्द्वेधा तु संयोगः परुषायां शषौ स्वतः ॥ २५ ॥

प्रौढां वृत्तिं व्याचष्टे-रेफेति। टवर्गात् पञ्चमात् ङकारादिपञ्चमाक्षरात्, 'ऋते विना टवर्गं पञ्चमाक्षराणि च वर्जयित्वेत्यर्थः। प्रौढायां वृत्तौ वर्गे भवा वर्ग्याश्च कखगघादयो वर्णाश्च यणौ यकारणकारौ चेति तथोक्ता वर्ग्ययणा वर्णाः। रेफाक्रान्ता रकारसंयुक्ता भवन्ति तथा तवर्गश्च कपाभ्यां ककारपकाराभ्यामाक्रान्तो व्याप्तो भवति। तवर्गश्च न रेफाक्रान्तोऽपि तु कपाक्रान्त एवेति भावः। किं च प्रौढा वृत्तिः ककारस्य मूर्धनि तकारो यस्यां सा तादृशी भवति। अयं सारः—टवर्गं वर्ग्यपञ्चमाक्षराणि तवर्गं च त्यक्त्वा वर्ग्या यणौ च रेफयुक्ताः, तवर्गश्च कपाक्रान्तः कमूर्ध्नि च तकारः प्रौढायां स्यादिति। 'तर्ककर्कशपूर्णोक्तिप्राप्तोत्कटधियां वृथा' इत्युदाहरणमग्रे वक्ष्यते ॥२४॥

परुषां वृत्तिं व्याचष्टे—सर्वैरिति। सकारस्योर्ध्वैरुपरि स्थितैः सर्वैर्निखिलवर्णैः संयोगः तथा रेफस्य रकारस्य सर्वैर्वर्णैः सर्वथोपर्यधोभावेन संयोगः। रहो रेफहकारयोर्द्वेधोपर्यधोभावेन संयोगः। शषौ शकारषकारौ स्वतः स्वतन्त्रावसंयुक्तौ परुषायां स्तः। साहित्यदर्पणे परुषारचनास्वरूपमिदम्—

'वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ॥ शकारश्च षकारश्च तस्य व्यञ्जकतां गताः। तथा समासो बहुलो घटनौद्धत्यशालिनी॥इति अस्योदाहरणम्–'वीप्सोत्सर्पन्मुखाप्राद्र्दं बर्हीं जहे कृशस्तृषम्' इत्यग्रे वक्ष्यते ॥२५॥

प्रौढा वृत्ति का स्वरूप यह है—प्रौढावृत्ति में ट ठ ड ढ तथा वर्ग के पञ्चम अक्षर ( ङ, ञ, ण, न, म ) को छोड़ कर वर्ग के क, ख, ग, घ आदि वर्ण तथा यकार णकार रेफ से युक्त होते हैं और तवर्ग ककार व पकार से ही संयुक्त होता है तथा ककार के ऊपर तकार का संयोग होता है। 'तर्ककर्कश-पूर्णोक्ति' यह उदाहरण आगे बताया जायगा ॥ २४ ॥

परुषा वृत्ति का निरूपण यह है—सकार के ऊपर ककारादि सब अक्षरों का संयोग हो, रकार का ऊपर और नीचे दोनों तरह से सब वर्णों के साथ योग हो तथा रेफ और हकार का ऊपर और नीचे दोनो तरहसे सम्बन्ध हो एवं शकार व षकार असंयुक्त हो तो परुषा वृत्ति होती है। साहित्यदर्पण में लिखा है कि वर्ग का प्रथम व तृतीय अक्षर द्वितीय व चतुर्थ से युक्त हो तथा ऊपर नीचे रेफ का योग हो, टठडढ वर्ण हो और शकार षकार हो तो ओजोव्यञ्जक ( परुषा ) रचना होती है 'वीप्सोत्सर्पन्' यह इसका उदाहरण बतलाया जायगा ॥ २६ ॥

 CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

लकारोऽन्यैरसंयुक्तो लघवो घमधा रसौ ।
ललितायां तथा शेषा भद्रायामिति वृत्तयः ॥ २६ ॥
अङ्गभङ्गोल्लसल्लीला तरुणी स्मरतोरणम् ।
तर्ककर्कशपूर्णोक्तिप्राप्तोत्कटधियां वृथा ॥ २७ ॥

ललितां वृत्तिं व्याचष्टे—लकार इति । अन्यैर्लभिन्नैर्वर्णैरसंयुक्तो लकारः । अन्यैरिति कथनाल्लकारस्य लकारे संयोगोऽपेक्षित इति भावः । घमधा घकार-मकार-धकारा रसौ रकारसकारौ च ललितायां लघवोऽसंयुक्ता भवन्तीति भावः । 'ललना रभसं धत्ते घना' इत्युदाहरणमग्रे वक्ष्यते । भद्रां वृत्तिं व्याचष्टे—तथेति । तथा शेषा वर्णा उक्तचतुर्वृत्त्यवशिष्टाः पकारादयोऽन्यैर्वर्णैः संयुक्ता असंयुक्ता वा भद्रायां स्युः। भद्रोदाहरणं 'टोपे महीयसि' इति पादखण्डे वक्ष्यते । इत्येताः पञ्चवृत्तयोऽक्षरविन्यासविशेषव्यङ्गया भवन्तीति भावः ॥ २६ ॥

मधुराप्रौढावृत्त्योरुदाहरणं ब्रूते—अङ्गभङ्गेति । तर्केण नव्यन्यायशास्त्रेण कर्कशाः कठिनाः पूर्णाश्च व्याप्ताश्च या उक्तयस्ताभिः प्राप्ता लब्धा उत्कटा विकटा धीर्मतिर्यैस्ते तेषां तर्ककर्कशबुद्धीनां तार्किकाणां कृत इति भावः । स्मरतोरणं कामतोरणरूपा। अङ्गभङ्गेन भावहावाद्यङ्गविक्षेपेणोल्लसन्ति लीला विलासो यस्याः सा तादृशी तरुणी वृथा न सुखाय । सा हि साहित्यपरिशीलनरसिकानामेव सुखदेति भावः । अत्र ङकाराधःस्थौ गकारौ लकारसंयुक्तौ लकारौ रेफणकारौ च ह्रस्वाक्षरान्तरिताविस्यङ्गभङ्गेति पूर्वार्धे मधुरा वृत्तिः । तर्ककर्कशेत्युत्तरार्धे वकारयकारणकारा रेफाक्रान्ताः । तकारः

ललितावृत्ति का स्वरूप देखिए—लकार का लकार के साथ संयोग हो और अन्य सब अक्षरों के साथ संयोग न हो, घकार, मकार, धकार, रकार और सकार लघुरूप से आये हों तो ललिता वृत्ति होती है । 'ललना रभसं धत्ते घना' यह इसका उदाहरण आगे लिखा जाएगा । अब भद्रा वृत्ति को देखिए—उक्त वृत्तियों के अक्षरों से अवशिष्ट अक्षर संयुक्त वा असंयुक्त रूप से भद्रा वृत्ति में रहते हैं । 'टोपे महीयसि' यह इसका उदाहरण होगा । यह इन वृत्तियों का व्यञ्जक अक्षरविन्यास बतलाया गया है ॥ २६ ॥

अब मधुरा और प्रौढा वृत्ति का उदाहरण देखिए—अङ्गों के विक्षेप से कामचेष्टाओं ( विलास ) को अभिव्यक्त करनेवाली कामदेव की विजयवल्लरीरूप तरुणरमणी नव्यन्याय की कर्कश उक्तिवाले जरन्नैयायिकों के लिये व्यर्थ है । वह तो रसिकपुरुषों के लिये ही सुखदायक है । यहां पूर्वार्द्ध में ङकार के नीचे दो गकारों का संयोग है । दो लकारों का लकार से संयोग है । रेफ और णकार ह्रस्वाक्षरों से युक्त हैं अतः मधुरा वृत्ति है । उत्तरार्ध में ककार, वकार और

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वीप्सोत्सर्पन्मुखाग्रार्द्रं बर्ही जह्रे कृशस्तृषम् ।
ललना रभसं धत्ते घनाटोपे महीयसि ॥ २८ ॥
महादेवः सत्रप्रमुखमखविद्यैकचतुरः

ककारपकाराभ्यां संयुक्तः । त्क इत्यत्र च ककारस्य मूर्धनि तकार इति प्रौढा वृत्तिः । रीतीनां समासव्यङ्ग्यत्वं वृत्तीनां च वर्णानुपूर्वीव्यङ्ग्यत्वमित्यनयोर्भेदः । काव्यप्रकाशे त्वनयोर्न कोऽपि भेद इत्युक्तं रीतिनिरूपणप्रस्तावे २२३ पृष्ठे ॥ २७ ॥

परुषाललिताभद्रावृत्तीनामुदाहरणानि ब्रूते—वीप्सेति । अतिशयेन महानिति महीयाँस्तस्मिन् महीयसि । घनाटोपे मेघविस्तारे सति कृशो बर्ही मयूरः । वीप्सया वारंवारमुत्सर्पन्मुखाग्रं वदनाग्रं तदार्द्रं यस्मिन् कर्मणि यथा तथा तृषं पिपासां जह्रेऽत्यजत् । ललना तु कामिनी तु रभसं मुदं 'रभसो वेगहर्षयोः' इति विश्वः । धत्ते दधाति । वर्षाकाले मयूरा नृत्यन्ति रमण्यश्च रमन्त इति भावः । अत्र वीप्सोत्सर्पदिति पूर्वार्द्धे सकारोर्ध्वस्थौ पकारतकारौ, पकारगकारदकारश्च रेफस्योपर्यधःस्थायिनः, रकारहकारौ च मिथ उपर्यधोभावापन्नौ, शकारषकारौ चासंयुक्ताविति परुषा वृत्तिः । 'ललना रभसं धत्ते घना' इत्यत्रासंयुक्तो लकारः रेफ–भकार–सकार–धकार–घकाराश्च लघवोऽसंयुक्ता इति ललिता वृत्तिः । '···टोपे महीयसि' इत्यत्र सर्वेषां वर्णानामसंयुक्तत्वाद् भद्रा वृत्तिः ॥ २८ ॥

अथ षष्ठमयूखसमाप्तिं व्याचष्टे—महादेव इति । महादेव सत्रेति प्रथममयूखोक्तः

णकार रेफ से व्याप्त हैं । ककार और पकार से तकार युक्त है । 'त्क' यहां ककार के ऊपर तकार का योग है अतः प्रौढा वृत्ति है । रीतियों के व्यञ्जक समास होते हैं और वृत्तियों के व्यञ्जक वर्णरचनायें होती हैं, यह रीति व वृत्ति में भेद है ॥२७॥

परुषा, ललिता और भद्रा वृत्ति के उदाहरण देखिए—मेघों के छा जाने पर दुर्बल मयूरों ने बार-बार अपनी चोंच ऊंची करके वर्षा की बिन्दुओं से पिपासा शान्त की और कामिनियों ने हर्ष मनाया । यहां 'वीप्सोत्सर्पत्' इस पूर्वार्ध में सकार के ऊपर पकार व तकार है और पकार, दकार, गकार ये सब रेफ के ऊपर नीचे स्थित हैं । रकार व हकार का रकार के साथ ऊपर व नीचे दोनों भागों में संयोग है । शकार व षकार असंयुक्त हैं अतः परुषावृत्ति है । 'ललना रभसं धत्ते घना०' यहां लकार असंयुक्त है । रेफ, भकार, सकार, धकार और घकार लघु और असंयुक्त हैं, इसलिये ललितावृत्ति है । '···टोपे महीयसि' यहां असंयुक्त वर्ण होने से भद्रावृत्ति है ॥ २८ ॥

'महादेवः सत्र०' इस प्रथम मयूख के सोलहवें श्लोकके उत्तरार्ध में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति ऋतुसंख्यः सुखयतु ॥ २९ ॥
इति चन्द्रालोकालङ्कारे षष्ठो मयूखः।

—०ः०ः०—

## सप्तमो मयूखः

वृत्तिभेदैस्त्रिभिर्युक्ता स्रोतोभिरिव जाह्नवी।
भारती भाति गम्भीरा कुटिला सरला क्वचित् ॥ १ ॥

---

षोडशश्लोक एवात्रापि समाप्तौ ज्ञेयः। किन्त्वेतस्योत्तरभागः 'मयूखस्तेनासौ सुकविजयदेवेन रचिते, चिरं चन्द्रालोके महति ऋतुसंख्यः सुखयतुः' इति परिवर्त्य पठनीयः। हिमशिशिरवसन्तग्रीष्मवर्षाशरदः षड्ऋतवः। तेनर्तुसंख्यः षट्संख्य इति भावः। महति ऋतुसंख्य इत्यत्र 'ऋत्यकः' इत्यनेन प्रकृति भावः। अन्यत्पूर्ववत् ॥ २९ ॥

इति श्रीजयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन वेदान्तभूषणोपाधिविभूषितेन भूतपूर्वकाशिगवर्नमेण्टसंस्कृतपुस्तकालयीय-प्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्य-निर्धारक-समितिजुषा जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन कथाभट्ट-श्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायाः षष्ठमयूखे पर्यवसानम् ॥ ६ ॥

—०ः०ः०—

काव्यलक्षणनिर्दिष्टमधुरादिवृत्तीर्निरूप्य व्यञ्जनादिवृत्तीर्निरूपयति—वृत्तीति। त्रिभिर्व्यञ्जनालक्षणाशक्तिरूपैः वृत्तीनां भेदैर्वृत्तिविशेषैः। वर्तते शब्दार्थे प्रवर्ततेऽनयेति वृत्तिः। बाहुलकात्करणे क्तिन्प्रत्ययः। दृश्यते ह्यन्यत्रापि करणे क्तिन्। यथा—अन्तःकरणवाचिबुद्धिशब्दे। युक्ता संबद्धा भारती वाणी। त्रिभिः स्रोतोभिः प्रवाहैर्युक्ता

---

'मयूखस्तेनासौ सुकविजयदेवेन रचिते, चिरं चन्द्रालोके महति ऋतुसंख्यः सुखयतु' यह परिवर्त्तन करके षष्ठ मयूखकी समाप्ति की जाती है ॥ २९ ॥

कथाभट्ट श्रीनन्दकिशोरशर्मा साहित्याचार्य की कथाभट्टीया नामक हिन्दी व्याख्या में चन्द्रालोकका षष्ठ मयूख समाप्त हुआ।

—०ः०ः०—

मधुरादि वृत्तिका निरूपण करके अब व्यञ्जनादि वृत्तिका निरूपण किया जाता है—व्यञ्जना, लक्षणा और अभिधा इन वृत्तियों के तीन भेदों से युक्त भारती (वाणी) तीन प्रवाहों से युक्त गंगा की तरह कहीं गम्भीर, कहीं कुटिल

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सांमुख्यं विदधानायाः स्फुटमर्थान्तरे गिरः ।

जाह्नवी गङ्गेव । क्वचिद् गम्भीरा व्यङ्ग्यार्थबोधरूपा । कुटिला लक्ष्यार्थबोधरूपा । सरला वाच्यार्थबोधरूपा । भाति शोभते । गङ्गापक्षे गम्भीराऽगाधा, कुटिला वक्रा, सरला चेति प्रसिद्धम् । तात्पर्याख्या वृत्तिरभिहितान्वयवादिभिरेव स्वीकृता नान्यैरिति तिस्र एव शब्दवृत्तयः । साहित्यदर्पणे वृत्तिस्थाने शक्तिशब्दः प्रयुक्तः । आशाधरभट्टेन गङ्गायमुनासरस्वतीरूपा तिस्रो वृत्तय इत्युक्तम् । यथा—

'शक्तिभक्तिव्यक्तिगङ्गायमुनागूढनिर्झरा ।
निर्वाहवन्त्यः सन्त्यत्र यत्तदेषा त्रिवेणिका' इति ॥ १ ॥

निरूपितरसस्य व्यञ्जनाबोध्यतया व्युत्क्रमेण निर्देशक्रमेण चादौ व्यञ्जनां निरूपयति—सांमुख्यमिति । व्यञ्जनाबोध्योऽर्थो व्यङ्ग्यो ध्वनिश्चेत्यनर्थान्तरम् । ध्वनिशब्दश्च ध्वन्यतेऽनयेति व्युत्पत्त्या व्यञ्जनावाचकः, ध्वन्यतेऽसाविति व्युत्पत्त्या रसादिवाचकः, ध्वनतीति व्युत्पत्त्या शब्दार्थसमुदायवाचकः, ध्वननं ध्वनिरिति व्युत्पत्त्या व्यङ्ग्यार्थप्रतीतिवाचकश्चेति ज्ञेयम् । सोयमालङ्कारिकैरुद्भावितो ध्वनिपदार्थः प्राचीनवैयाकरणैः स्फोटशब्देऽन्तर्भावितः प्रतीयते । वैयाकरणैः घटादिवर्णेषु ध्वनित्व-

---

तो कहीं सरल रूपसे शोभित होती है । अर्थात् वाणी व्यञ्जनावृत्ति से व्यङ्ग्यार्थ बोध में गम्भीर, लक्षणा से लक्ष्यार्थज्ञान में कुटिल तथा अभिधा से वाच्यार्थ के बोध में सरल प्रतीत होती है । गंगाजल भी कहीं गहरा वा कहीं टेढ़ा वा कहीं सीधा प्रवाहित होता है । शब्द की जिस शक्ति द्वारा अर्थ की प्रतीति हो उसे वृत्ति कहते हैं । साहित्यदर्पण में इन तीनों को शक्तिपद से कहा है । अभिहितान्वयवादी मीमांसकों ने एक तात्पर्याख्या वृत्ति और मानी है । किन्तु आलंकारिक इस वृत्ति ( तात्पर्याख्या ) को नहीं मानते अतः तीन ही वृत्तियां प्रधान हैं । आशाधरभट्टने त्रिवेणिकानामक ग्रन्थ में इन तीनों वृत्तियों को गंगा, यमुना और सरस्वती का रूप माना है ॥ १ ॥

रस का निरूपण किया जा चुका । इस रस की प्रतीति व्यञ्जना से होती है अतः पहले व्यञ्जना वृत्ति का निरूपण किया जाता है—व्यञ्जनावृत्ति से बोध्य अर्थ व्यङ्ग्य वा ध्वनि के नाम से कहा जाता है । ध्वनि शब्द 'ध्वन्यतेऽनया' जिस के द्वारा ध्वनि हो इस व्युत्पत्ति से व्यञ्जना का वाचक है, 'ध्वन्यतेऽसौ' जो ध्वनित हो इस व्युत्पत्ति से रस का बोधक, 'ध्वनतीति' जो ध्वनित करे इस व्युत्पत्ति से शब्दार्थ का वाचक, 'ध्वननं ध्वनिः' इस विग्रह से व्यङ्ग्यार्थ के बोध का वाचक और 'ध्वन्यतेऽस्मिन्' जिस में ध्वनि हो इस व्युत्पत्ति से काव्य का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यवहारो विहितः। पटादिवर्णैः स्फोटरूपो नित्यः शब्दोऽभिव्यज्यते तेन घण्टानुरणनन्यायेन नित्यस्य स्फोटशब्दस्यापि ध्वनिसंज्ञेति भर्तृहर्यादयो वैयाकरणाः। तथोक्तं वाक्यपदीये—

'यः संयोगवियोगाभ्यां करणैरुपजन्यते। स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः'॥

इति। (प्रथमकाण्डे १०३ श्लो०)।

इत्येष प्रकारोऽव्यक्तशब्दानामेव। व्यक्तशब्दानां कृते तु नादशब्दवाच्या स्फोटास्फोटाभिव्यञ्जका वर्णा ध्वनिशब्दव्यवहार्याः। यथा वाक्यपदीये—

'प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।

ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते'॥ इति (प्रथमकाण्डे ८४)।

स्फोटवादश्च वैयाकरणानां प्राचीनतमः। अत एव पाणिनिसूत्रे 'अवङ् स्फोटायनस्य' (६।१।१२३) इत्यत्र स्फोटायनमुनेर्मतमुल्लिखितं वर्तते। 'स्फोटोऽयनं परायणं यस्य स स्फोटायनः स्फोटप्रतिपादनपरो वैयाकरणाचार्यः' इति काशिकाव्याख्याता हरदत्ताचार्य आह स्म। महाभाष्यकारः पतञ्जलिर्नवमाह्निके तपरसूत्रव्याख्याने 'एवं तर्हि स्फोटः शब्दः। ध्वनिः शब्दगुणः' इति स्फोटं नामतोऽग्रहीत्। वाक्यपदीये तु स्फोटस्य विस्तरशो वर्णनम्। एवं वर्णा व्यञ्जका व्यङ्ग्यश्च स्फोट इति वाक्यपदीये व्यञ्जनावृत्तिसूचनामात्रम्। अत एव भर्तृहरिणा निपातानां द्योतकत्वं

---

वाचक है। आलंकारिकों से उद्भावित इस ध्वनि पदार्थ को प्राचीन वैयाकरणों ने स्फोट शब्द के अन्तर्गत माना है। घट पट आदि वर्णों में वैयाकरणों ने ध्वनिशब्दका व्यवहार किया है। घट पट आदि वर्णों से स्फोटरूपी नित्यशब्द की अभिव्यक्ति होती है अतः घण्टा के झङ्कार शब्द की तरह नित्य स्फोट शब्द की भी ध्वनि संज्ञा भर्तृहरि आदि वैयाकरणों के मत से होती है। वाक्यपदीय के प्रथमकाण्ड में लिखा है कि कण्ठ और तालु के संयोग और वियोग से जो शब्द निकलता है, वह स्फोट शब्द है। इस स्फोट शब्द से जो शब्द उत्पन्न होते हैं वे ध्वनिशब्द से उदाहृत होते हैं यह प्रकार अव्यक्त शब्दों के लिये है। व्यक्तशब्दों में तो नादशब्द से व्यवहृत व स्फोट के व्यञ्जक वर्ण ध्वनिशब्द से वाक्यपदीय में कहे गये हैं। वैयाकरणों में स्फोटवाद अत्यन्त प्राचीन है। पाणिनिसूत्र में 'अवङ् स्फोटायनस्य' में स्फोटवादी वैयाकरण का निर्देश है। महाभाष्यकार पतञ्जलिने तपरसूत्र के व्याख्यान में स्फोट शब्द का नाम लिया है। वाक्यपदीय में स्फोटका विस्तार से वर्णन किया है। इस प्रकार वर्ण व्यञ्जक और स्फोटशब्द व्यङ्ग्य है यह व्यञ्जनावृत्ति की सूचना प्राप्त होती

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वीकृतम् । यथा—

'निपाता द्योतकाः केचित्पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः' ॥ इति ।
( वाक्यप० २ काण्डे १९४ )

एवं व्याकरणशास्त्रसूचनामधिगम्यानन्दवर्धनाचार्येण ध्वन्यालोकग्रन्थं निर्माय ध्वनिः स्थापितः । उक्तं च—'प्रथमे हि विद्वांसो वैयाकरणाः । व्याकरणमूलत्वात्सर्वविद्यानाम् । ते च श्रूयमाणेषु ध्वनिरिति व्यवहरन्ति । तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः । काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेशो व्यञ्जकत्वसाम्यात् ध्वनिरित्युक्तः' इति ( ध्वन्या० १-१६ ) । अयमाशयः—ध्वनिकारमतेन वाच्यविशेषवपुः प्रत्यायनात्प्रतीयमान इति, वस्त्वलङ्काररसादिव्यञ्जकाद् व्यङ्ग्य इति, स्फोटात्मकव्यङ्ग्यध्वननाद् ध्वनिरिति व्यवहारः । अभिनवगुप्तपादेन च लोचननाम्नी ध्वन्यालोकटीका निर्मिता । इत्थं ध्वनिस्थापने सति महिमभट्टेन व्यक्तिविवेके ध्वनेरनुमानेऽन्तर्भावो विहितः । ततो मम्मटभट्टेन काव्यप्रकाशे । ध्वनेरनुमानान्तर्भावं निराकृत्य व्यञ्जना वृत्तिः दृढीकृता । एवं साहित्यदर्पणेऽपि एतस्मिन्समये व्याकरणे शाब्दबोधकप्रकारदर्शका ग्रन्था वाक्यपदीयं विहाय नासन् । ततो भट्टोजिदीक्षितेन तादृशो ग्रन्थो व्याकरणे शब्दकौस्तुभः कारिकावली च निर्मिता । ततः कौण्डभट्टेन कारिकावलीसमाश्रयेण शाब्दबोधप्रदर्शको भूषणाख्यो ग्रन्थो निर्मितः । पुनश्च महावैयाकरणनागेशभट्टेन शाब्दबोधप्रकाशिका बृहन्मञ्जूषा-

---

है । इसीलिये भर्तृहरि ने निपातों को द्योतक माना है । इस व्याकरणशास्त्र से सूचित ध्वनि का आनन्दवर्धनाचार्य ने ध्वन्यालोकनामक ग्रन्थ में स्थापन किया है । अभिनवगुप्तपाद ने इस ग्रन्थ ( ध्वन्यालोक ) की लोचन नामक टीका बनाई और ध्वनि का स्थापन किया । इस प्रकार ध्वनि के स्थापन होने पर महिमा भट्ट ने व्यक्तिविवेक नामक ग्रन्थ में ध्वनि का अनुमान में अन्तर्भाव किया । पीछे काव्यप्रकाश में मम्मटाचार्य ने व्यक्तिविवेक के मत का निवारण करके ध्वनि-मत को पुनः दृढ़ बनाया । इस प्रकार साहित्यदर्पण में भी ध्वनि का स्थापन हुआ है । इस ध्वनि के स्थापन के समय में व्याकरणशास्त्र में वाक्यपीदय को छोड़कर शब्दबोधप्रकार के प्रदर्शक अन्य ग्रन्थ नहीं थे । इसलिये भट्टोजिदीक्षित ने अष्टाध्यायी के व्याख्यारूप शब्दकौस्तुभग्रन्थ में किसी प्रसङ्ग से तथा कारिकावली में शब्दबोध का प्रकार बतलाया और कौण्डभट्ट ने कारिकावली के आश्रय से भूषण-नामक ग्रन्थ निर्मित किया । ततः नागेशभट्ट ने वैयाकरणमञ्जूषा में शाब्दबोध वा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कटाक्ष इव लोलाक्ष्या व्यापारो व्यञ्जनात्मकः ॥ २ ॥

लघुमञ्जूषा परमलघुमञ्जूषा च रचिता। तत्र व्यञ्जनावृत्तिर्नामतोऽपि स्वीकृता। तल्लक्षणादि निरूपितम्। प्राचीनवैयाकरणभर्तृहर्यादीनामपि व्यञ्जनावृत्तिस्वीकारे संमतिरुक्ता। यथा 'अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। वैयाकरणानामप्येतत्स्वीकार आवश्यकः' इति लघुमञ्जूषायां कथितम्। अयं व्यञ्जनावृत्तेराविर्भावः। अत्रेदं विज्ञेयम्—नैयायिका व्यङ्ग्यार्थबोधमनुमानेन कुर्वन्ति। तेषां शाब्दबोधग्रन्थाः शब्दशक्तिप्रकाशिकाव्युत्पत्तिवादशक्तिवादादयः। भट्टमतानुयायिनो मीमांसका दीर्घदीर्घव्यापाररूपयाभिधयैव व्यङ्ग्यार्थं जानन्ति। अभिहितान्वयवादिनो मीमांसका दशरूपकटीकाकार आचार्यधनिकश्च संसर्गबोधिकया तात्पर्याख्यवृत्त्यैव व्यङ्ग्यबोधमुररीकुर्वते। भट्टनायकादयः सांख्या निरन्तरार्थबोधनसान्तरार्थबोधनरूपतयाभिधयैव वृत्त्या व्यञ्जनाकार्यं प्रचालयन्ति। एतानि मतानि निराकृत्य वैयाकरणैरालङ्कारिकैश्च व्यङ्ग्यार्थबोधाय व्यञ्जनावृत्तिरादृता। व्यञ्जनास्वरूपमाह ग्रन्थकारः—स्फुटं स्पष्टमर्थान्तरे वाच्यलक्ष्यार्थभिन्ने सांमुख्यं प्रतीतिम्। वाच्यलक्ष्यार्थभिन्नार्थप्रतीतिविषयतामिति यावत्। विषयत्वं सप्तम्यर्थः। विदधानाया गिरः कुर्वतो शब्दस्य। पुंसि सांमुख्यमभिलाषं कुर्वन्त्या लोलाक्ष्याश्चञ्चलाक्ष्याः कटाक्ष इव नेत्रविक्षेप इति। व्यञ्जनैवात्मा स्वरूपं यस्य तादृशो व्यापारो भवति। यथा कामिनी कटाक्षेण पुंसे-

---

शब्द की शक्तियां अभिधा, लक्षणा, व्यञ्जना व स्फोट का विस्तार से निरूपण किया और व्यञ्जनावृत्ति का स्पष्टरूप से निर्देश किया। यह व्यञ्जनावृत्ति की उत्पत्ति का क्रम है। यहां यह सारांश है कि नैयायिक ध्वनि का अनुमान में अन्तर्भाव करते हैं। इनके शाब्दबोध के ग्रन्थ शब्दशक्तिप्रकाशिका, व्युत्पत्तिवाद, शक्तिवाद आदि प्रधान हैं। भट्टमत के अनुगामी मीमांसक अत्यन्त दीर्घव्यापार वाली अभिधा से ही व्यङ्ग्य अर्थ का बोध कर लेते हैं। अभिहितान्वयवादी मीमांसक और दशरूपक ग्रन्थ के टीकाकार आचार्य धनिक संसर्ग ( आपस में पदों का सम्बन्ध ) की बोधिका तात्पर्याख्या वृत्ति से ही व्यङ्ग्यबोध को मानते हैं। भट्टनायक आदि सांख्यशास्त्र के विद्वान् अभिधा के अव्यवहित और व्यवहित ये दो भेद करके व्यञ्जना के कार्य को चलाते हैं। इन सब मतों का निराकरण करके वैयाकरण व आलंकारिकों ने व्यङ्ग्य बोध के लिये व्यञ्जनावृत्ति को स्वीकार किया है। ग्रन्थकार ने व्यञ्जना का यह स्वरूप बतलाया है—पुरुष की अभिलाषा करने वाली, चञ्चलाक्षी के कटाक्ष की तरह वाच्य और लक्ष्य अर्थ से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

र्थान्तरं प्रकाशयति तथैवार्थान्तरप्रकाशिका वृत्तिर्व्यञ्जना नाम। यथोक्तं त्रिवेणिकायामाशाधरभट्टेन—'शक्यलक्ष्यातिरिक्तार्थबोधिकावृत्तिर्व्यञ्जना' इति। 'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबद्धासंबद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना' इति व्यञ्जनास्वरूपं वैयाकरणलघुमञ्जूषायामुक्तम्—'गंगायां घोषः' इति वाक्ये शैत्यपावनत्वप्रतीतिरनपलापार्हा। सा च प्रतीतिर्व्यञ्जनयैव। तत्र संकेताभावान्नाभिधा। अभिधा हि 'गङ्गाप्रवाहे घोषः' इतीममर्थं प्रबोध्य विरता भवति। 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति न्यायात्। संसर्गबोधमात्रे क्षीणा च तात्पर्याख्या वृत्तिरपि नात्रोपयोगिनी। न चात्र लक्षणा। मुख्यार्थबाधाभावात्। लक्ष्यार्थबोधानन्तरं व्यङ्ग्यार्थबाधनेऽसामर्थ्यात्। शैत्यादिप्रतीतेर्लक्ष्यत्वे प्रयोजनान्तरकल्पनानवस्थापातात्। तस्मादत्र शैत्यपावनत्वप्रतीतिर्व्यञ्जनस्यैव। सा च व्यञ्जना अभिधामूला

भिन्न अर्थ की प्रतीति को करानेवाले वाणी के व्यापार को व्यञ्जना कहते हैं। जैसे कामिनी के कटाक्ष से एक मनोगत भाव की भी प्रतीति होती है। वैसे ही अर्थान्तर की प्रकाशिका व्यञ्जना वृत्ति होती है। आशाधर भट्ट ने त्रिवेणिका में लिखा है कि वाच्य व लक्ष्य अर्थ से भिन्न अर्थ की प्रतीति करावे वह व्यञ्जना है। लक्षणा के समान मुख्यार्थ बाधकी अपेक्षा न रखनेवाले, मुख्यार्थ से सम्बन्ध वा असम्बन्ध में समान, प्रसिद्ध वा अप्रसिद्ध अर्थ का बोधक, वक्ता आदि की विशेषता से उत्पन्न संस्कारविशेष को वैयाकरणमञ्जूषा में व्यञ्जना कहा है। 'गंगायां घोषः' गंगा के जल में गांव है इस वाक्य से गंगा के निकट होने से इस ग्राम में शैत्य वा पावनत्व की प्रतीति होती है। यह प्रतीति व्यञ्जना के विना नहीं हो सकती। अभिधा वृत्ति 'गंगा के प्रवाह में जल है' इस अर्थका बोध कराके विराम को प्राप्त करती है। पुनः यह वृत्ति अन्य अर्थ का बोध नहीं करा सकती। एक बार में एक ही कार्य हो सकता है इस न्याय से पदों का आपस में सम्बन्ध बतलाने वाली तात्पर्याख्या वृत्ति भी संसर्ग के बोधमात्र से विराम को प्राप्त होती है। शीतलता व पवित्रता के बोध में लक्षण भी कुण्ठित ही है। क्यों कि 'गंगा के तीर पर ग्राम है' इस लक्ष्यार्थ का ज्ञान कराके वह व्यङ्ग्यार्थ के बोध में असमर्थ हो जाती है। यहां मुख्यार्थ का बाध भी नहीं है। शैत्य व पावनत्वरूप अर्थ को ही यदि लक्ष्यार्थ मान लें तो पुनः लक्षणा का प्रयोजन दूसरा मानना पड़ेगा अतः यहां उक्त वाक्य में शैत्य व पावनत्व की प्रतीति व्यञ्जना से ही होती है। अभिधामूला, लक्षणामूला और व्यंजनामूला

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्षणामूला, व्यञ्जनामूलेति त्रिविधा। तत्राभिधामूलालक्षणमुक्तं काव्यप्रकाशे—

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्' इति। ( २।१९ )

अनेकार्थकशब्दस्य संयोगप्रकरणादिभिरेकार्थे नियमिते सति ययान्यार्थप्रतीतिः साभिधामूला व्यञ्जना। यथा—

'मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तद्भण किं करणीयमेवमेव न वासरः स्थायी'॥ इति।

अत्र यथाश्रुतेनाभिधेयार्थेनैव कामिनीरूपवक्तृवैशिष्ट्यात् स्वैरविहारार्थिनी नायिकैषेति सामाजिकैर्व्यञ्जनया बुद्ध्यते। लक्षणामूलव्यञ्जनालक्षणं यथा साहित्यदर्पणे-

'लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया'। इति॥

यथा वृत्त्या लक्षणाप्रयोजनं प्रत्याय्यते सा वृत्तिर्व्यञ्जना लक्षणामूला। यथा-

'साधयन्ती सखि सुभगं क्षणे दूनासि मत्कृते।
सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया' इति।

अत्रापकारिण्यामुपकारप्रतिपादनाद् बाधावतारान्मुख्यार्थः श्रोत्रा प्रत्येतुं न शक्यते इति मत्प्रियरमणेन शत्रुत्वाचरणं त्वया विरचितमिति लक्ष्यते। तेन कामुकविषयसापराधत्वप्रकाशनं व्यङ्ग्यं प्रतीयते। व्यङ्ग्येन व्यङ्ग्यार्थप्रतीतौ तृतीया व्यञ्जना। यथा—

'पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥' इति।

ये तीन व्यंजना के भेद, माने गये हैं। अनेक अर्थवाले शब्दका एक अर्थ प्रकरण वा साहचर्य आदि कारणों से नियमित हो जावे और फिर अन्य अर्थ की प्रतीति जिसके द्वारा हो वह अभिधामूला व्यंजना होती है। 'मातर्गृहोपकरणम्०' यह इसका उदाहरण है। यहां कामिनीरूप वक्ता की विशेषता से 'यह कामिनी स्वेच्छाविहार में उत्सुक है' इस व्यङ्ग अर्थ की प्रतीति होती है। लक्षणा के प्रयोजन का जिस वृत्ति द्वारा ज्ञान होता है वह वृत्ति लक्षणामूला व्यञ्जना है। 'साधयन्ती सखि सुभगम्' यह इसका उदाहरण है। यहां अपकार करनेवाली को उपकार करनेवाली बतलाया अतः यह मुख्य अर्थ बाधित होता है। ततः 'मेरे पति के साथ रमण करके तैंने मेरे साथ शत्रुता का व्यवहार किया' यह लक्ष्यार्थ प्रतीत होता है। इस लक्ष्यार्थ में 'अमुक अपराधी है' यह प्रयोजन व्यञ्जना से जाना जाता है। व्यङ्ग्य से व्यङ्ग्य अर्थ की प्रतीति में व्यञ्जनामूला व्यञ्जना होती है। 'पश्य निश्चलनिष्पन्दा' यह इसका उदाहरण है। यहां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अविवक्षितवाच्यस्य द्वौ भेदौ वाच्यमेव चेत् ।

अत्र बलाकानिष्पन्दत्वेनाश्वस्तत्वं प्रतीयते । तेन जनरहितत्वं व्यङ्ग्यम् । ततश्च संकेतस्थानमेतदिति व्यङ्ग्येन व्यङ्ग्यप्रतीतिर्जायते । मध्यमाया लक्षणामूलाया व्यञ्जनाया व्यङ्ग्यस्य गूढत्वागूढत्वभेदेन द्वौ भेदौ । तत्र गूढव्यङ्ग्यत्वं 'साधयन्ती सखि सुभगम्' ( २६८ पृ० ) इत्यत्र ज्ञेयम् । अपकारिणीं प्रत्युपकारप्रतिपादनाशयस्य काव्यार्थभावनापरिपक्वबुद्धिवेद्यत्वात् । अगूढव्यङ्ग्यत्वं यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥' इति ।

अत्र 'उपदिशति' इत्यस्य 'आविष्करोति' इति लक्ष्यार्थः । आविष्कारातिशयश्च व्यङ्ग्योऽभिधेयवत्स्फुटं प्रतीयते । एतद् व्यञ्जनानिरूपणम् ॥ २ ॥

व्यञ्जनां निरूप्य ध्वनिभेदकथनव्याजेन लक्षणामूलव्यञ्जनाभेदौ व्याचष्टे—अविवक्षितेति । ध्वनिमत्काव्यमुत्तमम्, गुणीभूतव्यङ्ग्यकाव्यं मध्यमम्, शब्दार्थालङ्कारवत्काव्यमधममिति काव्यस्य त्रयो भेदाः । तत्र ध्वनेरभिधामूललक्षणामूलत्वेन द्वौ भेदौ । लक्षणामूलोऽविवक्षितवाच्यध्वनिरभिधामूलश्च विवक्षितवाच्यध्वनिः । अविवक्षितमनुपयुक्तमन्वयायोग्यं वा वाच्यं वाच्यार्थो यस्मिन्सः । लक्षणामूलत्वादत्र

---

बकपक्षी के निर्भय बैठने से 'यह स्थान निर्जन है' इस व्यङ्ग्य की प्रतीति होती है। पुनः उक्त व्यङ्ग्य से निर्जन होने के कारण 'यह संकेतस्थान है' इस व्यङ्ग्य की प्रतीति होती है। लक्षणामूला व्यञ्जना के गूढव्यङ्ग्य और अगूढव्यङ्ग्य के कारण दो भेद हैं। 'साधयन्ती सखि सुभगम्' यह गूढव्यंग्य का उदाहरण है। क्योंकि अपकार करने वाली को उपकारिणी बताने का आशय सर्वसाधारण से ज्ञेय नहीं होता। 'श्रीपरिचयाज्जडा अपि' यह अगूढव्यङ्ग्य का उदाहरण है। यौवनावस्था कामिनी को अनेक प्रकार की चेष्टाओं का उपदेश देती है। यहां उपदेश पद का अर्थ आविष्कार है। और आविष्कार की अधिकता व्यङ्ग्य है। यह व्यङ्ग्य स्फुटरूप से मालूम हो जाता है, अतः यहां अगूढव्यङ्ग्य है। यह व्यञ्जना का निरूपण है ॥ २ ॥

व्यञ्जना का निरूपण करके लक्षणामूलध्वनि ( लक्षणामूलाव्यञ्जना ) के भेद बतलाये जाते हैं—ध्वनि को उत्तम काव्य, गुणीभूतव्यङ्ग्य को मध्यम काव्य और अलंकारप्रधान काव्य को अधम काव्य कहते हैं। अभिधामूलक वा लक्षणामूलक के भेद से ध्वनि के दो भेद होते हैं। लक्षणामूलक ध्वनि अविवक्षितवाच्यध्वनि होती है और अभिधामूलक ध्वनि विवक्षितवाच्यध्वनि है। वाच्य अर्थ का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ ३ ॥

वाच्यार्थोऽविवक्षितो बाधितस्वरूपो भवति । चेद् यदि वाच्यमभिधेयार्थ एवार्थान्तरे लक्ष्यरूपेऽर्थान्तरे संक्रमितं परिणतं अथवात्यन्तं तिरस्कृतं निराकृतं तदार्थान्तरसंक्रमितवाच्यध्वनिरत्यन्ततिरस्कृतवाच्यध्वनिश्चेत्यविवक्षितवाच्यस्य ध्वनेर्द्वौ भेदौ भवतः । एतावेव भेदावजहल्लक्षणाजहल्लक्षणमूलावुच्येते । यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम् । यथा—

'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि' ॥ इति ।

अत्र द्वितीयः कमलशब्दः पौनरुक्त्यभिया सामान्यकमलरूपे मुख्यार्थे बाधितः सन् सुगन्धत्वादि विशिष्टकमलरूपमर्थं बोधयति । सुगन्धत्वातिशयश्च व्यङ्ग्यः । यत्र पुनर्वाच्यार्थः स्वार्थे सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् । यथावाल्मीकीयरामायणे—

'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः । निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इति

अत्र दर्पणस्याचेतनतयान्धत्वासंभवादन्धशब्दो मुख्यार्थे बाधिते सत्यप्रकाशरूपं लक्ष्यार्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः । अन्धत्वाप्रकाशत्वयोः सामा·

अन्वय में उपयोग न होना अविवक्षितवाच्य का यौगिक अर्थ है । इस भेद में लक्षणा की प्रधानता के कारण मुख्य अर्थ बाधित हो जाता है । अविवक्षितवाच्यके अर्थान्तरसंक्रमितवाच्य व अत्यन्ततिरस्कृतवाच्य ये दो भेद होते हैं । ये दोनों भेद अजहल्लक्षणा वा जहल्लक्षणामूलक माने जाते हैं । जहां वाच्य अर्थ अपने सामान्य अर्थ को छोड़कर लक्ष्यरूप अपने विशेष अर्थ में संक्रमित होवै वह अर्थान्तरसंक्रमितवाच्यध्वनि है । 'तदा जायन्ते गुणा' यह इसका उदाहरण है । यहां दूसरा कमल शब्द पुनरुक्ति के कारण सामान्य कमलरूप मुख्यार्थ में बाधित होकर सुगन्धादि सहित कमलरूप अर्थ का बोधक होता है । सुगन्धि की अधिक प्रतीति व्यङ्ग्य है । जहां वाच्य अर्थ अपने अर्थ को छोड़कर अर्थान्तर ( लक्ष्यरूप ) में परिणत हो वहां मुख्य अर्थ का अत्यन्त अभाव होने से अत्यन्ततिरस्कृतवाच्य ध्वनि होती है । 'रविसंक्रातसौभाग्य॰' यह श्लोक इसका उदाहरण है । यहां 'दर्पण अन्धा है' इस वाक्य में अन्ध शब्द नेत्रहीन प्राणी का बोधक होता है । इसलिये वह दर्पण के साथ असंबद्ध होकर मुख्यार्थ में बाधा डालता है और अपने खास अर्थ ( नेत्रहीन ) का त्याग करके अप्रकाश ( मलिनता ) रूप

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वौ विवक्षितवाच्यस्य लक्ष्यालक्ष्यक्रमात्मकौ ।
चत्वारिंशद्युतैकेन भेदाः षट् चानयोः क्रमात् ॥ ४ ॥

न्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम् ॥ ३ ॥

विवक्षितवाच्यस्य ध्वनेर्भेदकथनेनाभिधामूलां व्यञ्जनां कथयति—द्वाविति । विवक्षितं वाच्यतावच्छेदकरूपेणान्वयबोधविषये वाच्यं वाच्योऽर्थो यस्मिन्स तादृशः । ग्रन्थान्तरे विवक्षितान्यपरवाच्य इति नामोक्तम् । विवक्षितमन्यपरं व्यङ्ग्योपसर्जनीभूतं च वाच्यं यत्र सः । हि अत्र वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा प्रदीपो घटस्य । विवक्षितवाच्यस्य लक्ष्यं ज्ञायमानमलक्ष्यमज्ञायमान चेति लक्ष्यालक्ष्यौ, लक्ष्यालक्ष्यौ क्रमौ ययोस्तौ, तादृशावात्मानौ ययोस्तौ । विवक्षितवाच्यस्य लक्ष्यक्रमव्यङ्ग्योऽलक्ष्यक्रमव्यङ्ग्यश्चेति द्वौ भेदौ स्तः । अनयोश्च संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्ययोश्च । क्रमात्क्रमशः । चत्वारिंशता युतश्चासावेकश्चेति चत्वारिंश्युतैकस्तेन भेदेनोपलक्षिताः षड् भेदा भवन्ति । अत्रोपलक्षणे तृतीया । लक्ष्यक्रमव्यङ्ग्यस्यैकचत्वारिंशदलक्ष्यक्रमव्यङ्ग्यस्य च षडिति भावः । यथा शब्दशक्तेर्द्वौ भेदौ, अर्थशक्तेर्द्वादश भेदाः, संकलनेन च चतुर्दश । तेषां पदवाक्यगतत्वेन द्वैगुण्येनाष्टाविंशतिः । अर्थशक्तिमूलस्य ध्वनेः प्रबन्धगता द्वादश भेदाः । शब्दार्थोभयशक्तेरेकः । एवमेकचत्वारिंशद्भेदा लक्ष्यक्रमव्यङ्ग्यस्य । अलक्ष्यक्रमव्यङ्ग्यस्य तु पदादिभेदेन षड्

लक्ष्य अर्थ का बोध कराता है । मालिन्य के आधिक्य का ज्ञान यहां व्यङ्ग्य है । यहां अन्ध शब्द अपने मुख्यार्थ को छोड़ देता है । अतः अत्यन्ततिरस्कृतवाच्यध्वनि है । अन्धत्व व अप्रकाशत्व ( मलिनता ) का सामान्य विशेषभाव न होने से यहां अर्थान्तरसंक्रमितवाच्य को अवकाश नहीं मिलता ॥ ३ ॥

विवक्षितवाच्यध्वनि ( अभिधामूलध्वनि ) के भेदों का विवरण यह है—वाच्य अर्थ व्यङ्ग्यबोध के समय अपने स्वरूप का भी प्रकाशक हो तो वह विवक्षितवाच्यध्वनि है । अन्य ग्रन्थों में इसका नाम विवक्षितान्यपरवाच्य है । जैसे दीपक अपना स्वरूप प्रकाशित करता हुआ अन्य पदार्थ का बोधक होता है, वैसे ही वाच्यार्थ अपने स्वरूप का परिचय कराके व्यङ्ग्यार्थ का बोधक हो जाता है । इसके संलक्ष्यक्रमव्यङ्ग्य व असंलक्ष्यक्रमव्यङ्ग्य ये दो भेद हैं । संलक्ष्यक्रमव्यङ्ग्य के इकतालीस भेद होते हैं । शब्दशक्ति के दो, अर्थशक्ति के बारह, इन दोनों के पदनिष्ठ व वाक्यनिष्ठता से अट्ठाईस भेद होते हैं । इनमें अर्थशक्ति के प्रबन्धगत बारह भेद और शब्दार्थोभयशक्ति का एक भेद मिलाने से कुल इकतालीस भेद हुए । असंलक्ष्यक्रमव्यङ्ग्य के पद, पदांश, वर्ण, रचना, वाक्य और

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रिधा शब्दार्थतद्युग्मशक्तिजन्मा स्फुटक्रमात् ।
रसभावतदाभासप्रमुखस्त्वस्फुटक्रमात् ॥ ५ ॥

---

भेदा जायन्ते । एते सर्वे वक्ष्यन्ते ॥ ४ ॥

उक्तसप्तचत्वारिंशद्भेदान् प्रपञ्चयति—त्रिधेति । स्फुटक्रमाल्लक्ष्यक्रमव्यङ्ग्यात् । अत्र हेतौ पञ्चमी । शब्दश्चार्थश्च तयोर्युग्मं चेति शब्दार्थतद्युग्मानि तेषां शक्तिभ्यो जन्म यस्य स तादृशो ध्वनिस्त्रिधा भवति । शब्दशक्तिजन्मा, अर्थशक्तिजन्मा, शब्दार्थोभय शक्तिजन्मेति त्रयो भेदाः । यत्र शब्दः परिवृत्यक्षमः स प्रथमः । शब्दपरिवृत्तिक्षमत्वे द्वितीयः । शब्दपरिवृत्तिक्षमाक्षमत्वे च तृतीयो भेद इति तात्पर्यम् । अस्फुटक्रमादलक्ष्यक्रमव्यङ्ग्यात् । अत्रापि हेतौ पञ्चमी । रसश्च भावश्च तयोराभासश्चेति तथोक्ताः रसभावातदाभासाः प्रमुखाः यत्र स तादृशो ध्वनिर्भवति । रसादिध्वनिरस्फुटक्रम इति भावः । प्रमुखशब्देन भावशान्त्यादयो गृह्यन्ते । स्फुटे प्रकरणे झटिति प्रतीतेषु विभावादिषु सहृदयप्रमात्रोत्पलपत्रशतच्छेदन्यायेन सूक्ष्मेणैव कालेन रसादिर्व्यङ्ग्यः प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यक्रमस्यासंलक्षणादलक्ष्यक्रमव्यङ्ग्यत्वेन व्यपदिश्यते । यत्र तु विचारवेद्यं प्रकरणम्, ऊह्नेया वा विभावादयस्तत्र सामग्रीविलम्बाधीनं चमत्कृतेर्मान्थर्यमिति संलक्ष्यक्रमव्यङ्ग्योऽप्येष भवति । रसादिषु चैकस्यापि भेदस्यानन्तत्वात्संख्यातुमशक्यत्वादेष एकभेद एवोक्तः । एकस्यैव शृङ्गारस्य बहवो भेदाः का गणना सर्वेषाम् ॥ ५ ॥

---

प्रबन्ध में छे भेद होते हैं । इस प्रकार विवक्षितवाच्य के सैंतालीस भेद हुए ॥४॥

उक्त सैंतालीस भेदों का निरूपण यह है—लक्ष्यक्रमव्यङ्ग्य के शब्दशक्तिजन्मा, अर्थशक्तिजन्मा और शब्दार्थोभयशक्तिजन्मा ये तीन भेद होते हैं । रस, भाव, रसाभास और भावाभास, भावशान्ति आदि अलक्ष्यक्रमव्यङ्ग्य के स्वरूप हैं । विभावादिज्ञान के अनन्तर रसज्ञान होने से रसादिक ध्वनिमें क्रम अवश्य रहता है तो भी यह क्रम अत्यन्त सूक्ष्मकालिक होने के कारण मालूम नहीं होता । जैसे कमल के सौ पत्तों में एक बार सूची ( सूई ) द्वारा छिद्र करने पर क्रम अवश्य रहता है, परन्तु मालूम नहीं पड़ता उसी तरह रसादि ध्वनि में भी क्रमकी प्रतीति नहीं होती है । हां, इतना अवश्य है कि जहां विचार करने पर प्रकरण की प्रतीति हो और विभावादिक का आक्षेप करना पड़े, वहां रसबोधक सामग्री के विलम्ब से रस के बोध में हो जाने के कारण यह रसादिध्वनि संलक्ष्यक्रमव्यङ्ग्य भी होती है । जब रसादिध्वनि में एक शृंगार के भेद ही बहुत हो जाते हैं तो सब भेदों की गणना तो असम्भव है । अतः इस ध्वनि का एक ही भेद माना गया है ॥ ५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्त्वलङ्कारयोर्व्यक्तेर्भेदौ द्वौ शब्दशक्तिजौ।

शब्दार्थशक्त्युद्भवस्य भेदानाह—वस्त्विति। वस्तु चालङ्कारश्चेति वस्त्वलङ्कारौ तयोः। व्यक्तेर्व्यञ्जनात्। शब्दशक्तिजौ शब्दशक्त्युद्भवौ द्वौ भेदौ भवतः। वस्तुध्वनिरलङ्कारध्वनिश्चेति द्वौ भेदौ शब्दशक्त्युद्भवाविति भावः। वस्तुध्वनिरुदाहियते—

'पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस' ॥ इति।

इयं निवासार्थिनं पान्थं प्रति स्वयंदूत्या उक्तिः। अत्र स्रस्तरपयोधरादिशब्दशक्त्या 'यद्युपभोगक्षमोऽसि तदात्र तिष्ठ, इति वस्तु व्यज्यते। अलङ्कारध्वनिर्यथा— 'गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः' इति। अत्रोमानाममहादेवीवल्लभस्य राज्ञः स्तुतिवर्णने प्राकरणिकोऽर्थो नियन्त्रितः। उमावल्लभस्य पार्वतीपतेः प्रतीतं वर्णनं चासम्बद्धं मा प्रसाङ्क्षीदिति राजशंकरयोरुपमानोपमेयभावः कल्प्यते। तत उमावल्लभ इवोमावल्लभ इत्युपमालङ्कारो व्यङ्ग्यः। ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्। अत्रोच्यते—यत्र शब्दशक्त्या साक्षादलङ्कारो वाच्यः सन् प्रतिभासते स सर्वः श्लेषस्य विषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः। यथोक्तं ध्वनिकारेण—

'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।

---

शब्द और अर्थशक्ति से उत्पन्न व्यङ्ग्य के भेद ये हैं—शब्दशक्त्युद्भवध्वनि के वस्तुध्वनि और अलङ्कारध्वनि ये दो भेद होते हैं। अर्थशक्त्युद्भवध्वनि के बारह भेद आगे बतलाये जायँगे। 'पथिक ! नात्र स्रस्तरमस्ति' यह श्लोक वस्तुध्वनि का उदाहरण है। यह श्लोक निवास चाहने वाले पान्थ के प्रति स्वयं दूती कामिनी ने कहा है। इस उक्ति के पयोधर ( स्तन व मेघ ) आदि श्लिष्ट शब्दों से 'हे-पान्थ ! यदि तुम उपभोगप्रेमी हो तो यहां रहो' इस वस्तु की ध्वनि होती है। 'गामाक्रम्य०' यह श्लोक अलंकारध्वनिका उदाहरण है। इस श्लोक से दो अर्थ निकलते हैं, उनमें एक अर्थ प्रकरण से उमा नामकी महारानी के स्वामी राजा की स्तुति में हो जाता है। पुनः उमापति शंकर का बोधक दूसरा अर्थ व्यञ्जना से जाना जाता है। इन अर्थों का सम्बन्ध जरूर चाहिये अतः उपमानोपमेयभाव ( शंकर के सदृश राजा ) की कल्पना की जाती है, इससे 'राजा शङ्कर के समान है' इस उपमा अलङ्कारकी ध्वनि होती है। अब यहां यह शङ्का होती है कि जब अनेक अर्थ के बोधक शब्दों में अलङ्कार ध्वनि मान ली जाय

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अर्थशक्तिसमुत्थस्य भेदा द्वादश तद्यथा ॥ ६ ॥
चत्वारो वस्त्वलङ्कारमलङ्कारस्तु वस्तु यत् ।
अलङ्कारमलङ्कारो वस्तु वस्तु व्यनक्ति तत् ॥ ७ ॥

यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि स' इति । ( २।२२ )।

यथा च ध्वनेरुदाहरणं हर्षचरिते—'अत्रान्तरे कुसुमसमययुगमुपसंहरज्जृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः' इति । अत्र महाकालादि-शब्दशक्त्या प्रकाश्यमाने सत्यप्राकरणिके महाकालाख्यशिव रूपेऽर्थान्तरे वाक्यस्या-सम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरर्थयोरुपमानोपमेय-भावः कल्पयितव्यः। सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः । अन्येऽपि चालङ्कारा ध्वनौ सम्भव-न्त्येव । अर्थशक्त्युद्भवस्य ध्वनेर्द्वादश भेदा भवन्ति । तद् यथा—तदेवाग्र उच्यत इत्यर्थः ॥ ६ ॥

अर्थशक्त्युद्भवस्य ध्वनेर्भेदानाह—चत्वार इति।यद् यस्मात्कारणात्। वस्तु निर-लङ्कारोऽर्थः। अलङ्कारमुपमादिः । अलङ्कार उपमादिः । वस्तु किमपि वृत्तम् । वस्तु कर्तृ वस्तुकर्म च व्यनक्ति व्यञ्जनया बोधयति तत्तस्मात्कारणात् । वस्तुनालङ्कार-ध्वनिः, अलङ्कारेण वस्तुध्वनिः, अलङ्कारेणालङ्कारध्वनिः, वस्तुना वस्तुध्वनिश्चेति चत्वारो भेदा भवन्ति ॥ ७ ॥

---

तो फिर श्लेष की प्रधानता कहां पर मानी जायगी ?। इसका उत्तर यह है कि जहां शब्द शक्ति से साक्षात् अलङ्कार वाच्य होकर प्रतीत होता है वहां श्लेष मानना चाहिए और जहां शब्दशक्ति के सामर्थ्य से किसी अलङ्कार का आक्षेप किया जावे वहां अलङ्कारध्वनि होती है । 'अत्रान्तरे कुसुमसमययुगम्°' इस हर्षचरित के गद्य में उपमालङ्कारकी ध्वनि है । यहां महाकाल आदि शब्दों से अप्रस्तुत शिव का वर्णन प्रतीत होता है । यह शिव का वर्णन असम्बद्ध प्रलाप न मालुम पड़े अतः ग्रीष्म व शिव के वर्णन का उपमानोपमेयभाव मान लिया जाता है । यहां उपमालङ्कार आक्षेप से सिद्ध होता है अतः श्लेष नहीं हो सकता। उपमाध्वनि का ही प्राधान्य माना गया है । इसी प्रकार अन्य अलङ्कारों की ध्वनि का उदाहरण ध्वन्यालोक में देखना चाहिये ॥ ६ ॥

अर्थशक्त्युद्भवध्वनि के भेद बतलाये जाते हैं—वस्तु से अलङ्कार की ध्वनि, अलङ्कार से वस्तु की ध्वनि, अलङ्कार से अलङ्कार की ध्वनि और वस्तु से वस्तु की ध्वनि होने पर चार भेद होते हैं ॥ ७ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वक्तुः कविनिबद्धस्य कवेर्वा प्रौढिनिर्मितः।
स्वसिद्धो वा व्यञ्जकोऽर्थश्चत्वारस्त्रिगुणास्ततः ॥ ८॥

एषां चतुर्णां भेदानां त्रैविध्यं ब्रूते—वक्तुरिति। यतो कविनिबद्धस्य कविकल्पितस्य वक्तुः प्रौढ्या निर्मितो रचितोऽर्थः। वाथवा कवेः प्रौढिनिर्मितः प्रतिभोत्पन्नोऽर्थः। वा स्वसिद्धोऽर्थः स्वतःसम्भवी, अर्थो व्यञ्जको भवति। तत एते पूर्वोक्ताश्चत्वारो भेदास्त्रिगुणा द्वादश भवन्ति। कविनिबद्धवक्तृप्रौढोक्तिसिद्धाश्चत्वारः, कविप्रौढोक्तिसिद्धाश्चत्वारः, स्वसिद्धाश्चत्वारश्चेति सङ्कलनेन द्वादश भेदाः। कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुनाऽलङ्कारध्वनिर्यथा—

'सुभगे! कोटिसंख्यत्वमुपेत्य मदनाशुगैः। वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम्'॥

इत्यत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कुसुमानां वसन्तेऽनन्तलाभेन निखिलवियोगिमारणेन वस्तुना शराणां पञ्चता शरान्विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षालङ्कारो व्यज्यते। कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिर्यथा—

'मल्लिकामुकुले चण्डि! भाति गुञ्जन्मधुव्रतः।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव' ॥ इति।

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षालङ्कारेण 'कामस्यायमुन्मादकालस्तत्कथं मानिनि मानं न मुञ्चसी'ति वस्तु व्यज्यते। कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिर्यथा—

'महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।

इन चारों भेदों में से प्रत्येक के तीन २ भेद होते हैं। कविकल्पित वक्ता की प्रतिभा से उत्पन्न, कवि की प्रतिभा से निर्मित तथा स्वतःसिद्ध अर्थ व्यङ्ग्यार्थ का व्यञ्जक होता है, अतः पूर्वोक्त चारों भेद त्रिगुणित होकर १२ हो जाते हैं। क्रमसे इनके उदाहरण देखिये—'सुभगे! कोटिसंख्यत्वम्०' यहां कविकल्पित वक्ता की प्रतिभा से वर्णित 'कामदेव के पांच बाणभूत पुष्प वसन्त में अनेक होकर के सभी वियोगियों का वध करते हैं' इस वस्तु द्वारा बाणों की पञ्चता (पांचपन अथवा मृत्यु) ने बाणों को छोड़कर वियोगियों का ही मानो आश्रय ले लिया है। इस उत्प्रेक्षा अलंकार की ध्वनि होने से कविनिबद्धवक्तृप्रौढोक्तिसिद्धि वस्तु से अलंकार की ध्वनि है। 'मल्लिकामुकुले चण्डि!' यहां कविकल्पित वक्ता की प्रौढि से वर्णित शंखध्वनि की उत्प्रेक्षा-अलंकृति द्वारा 'यह कामोत्तेजक समय है अतः हे मानिनि! तुम्हें भी अब कामोन्मुख होना चाहिये' इस वस्तुकी ध्वनि होती है। अतः कविनिबद्धवक्तृप्रौढोक्तिसिद्ध अलंकार से वस्तु की ध्वनि है। 'महिलासहस्रभरिते तव हृदये' इस श्लोक में 'अनेक स्त्रियों से पूर्ण तेरे


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥'

इत्यत्र 'अमान्ती' इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये सा न वर्तत इति विशेषोक्त्यलङ्कारः प्रतीयते। कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिर्यथा—

'शिखरिणि ! क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥' इति।

अत्रानेन कविनिबद्धस्य कस्यचित्कामिनः प्रौढोक्तिसिद्धेन वस्तुना 'तवाधरः पुण्यातिशयलभ्य' इति वस्तु प्रतीयते। एते चत्वारो भेदाः कविनिबद्धवक्तृप्रौढोक्तिसिद्धाः। अथ कविप्रौढोक्तिसिद्धाश्चत्वारो भेदाः क्रमेणोदाह्रियन्ते—वस्तुनालङ्कारध्वनिर्यथा—

'रजनीषु विमलभानोः करजालेन प्रकाशितं वीर।
धवलयति भुवनमण्डलमखिलं तव कीर्तिसन्ततिः सततम्'॥

अत्र यशसा निखिलभुवनधवलीकरणेन कविप्रौढोक्तिसिद्धेन वस्तुना कीर्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यज्यते। अलङ्कारेण वस्तुध्वनिर्यथा—

'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।

---

हृदय में स्थान नहीं प्राप्त करती हुई नायिका अपने शरीर को दुर्बल बनाती है।' इस कविकल्पित वक्ता की प्रतिभा द्वारा वर्णित काव्यलिङ्ग अलंकार से 'शरीर को कृश करने पर भी वह तेरे हृदय में स्थान नहीं प्राप्त करती' इस विशेषोक्ति अलंकार की ध्वनि होती है। अतः यहां कविनिबद्धवक्तृप्रौढोक्तिसिद्ध अलंकार से अलंकार की ध्वनि होती है। 'शिखरिणि ! क्व नु नाम कियच्चिरम्' इस श्लोक में 'पुण्यवान् शुकशावक तेरे अधर के समान रक्तवर्ण के बिम्बफल को खाता है' इस कविकल्पित कामी की प्रतिभा से वर्णित वस्तु द्वारा 'तेरा अधर अत्यन्त पुण्य से प्राप्त हो सकता है' इस वस्तु की ध्वनि होती है। अतः यहां कविनिबद्धवक्तृप्रौढोक्तिसिद्धि वस्तु से वस्तु की ध्वनि है। ये चारों भेद कविनिबद्धवक्तृप्रौढोक्तिव्यञ्जकता से होते हैं। अब कविप्रौढोक्तिसिद्ध के चारों उदाहरण क्रम से देखिए—'रजनीषु विमलभानोः' इस श्लोक में 'हे वीर ! तुम्हारे यश से सम्पूर्ण भुवनमण्डल धवल हो रहा है' इस कविकल्पित वस्तु द्वारा 'चन्द्रमा से भी तुम्हारी कीर्ति अधिक प्रकाशक है' इस व्यतिरेकालंकार की ध्वनि होती है। अतः कविप्रौढोक्तिसिद्ध वस्तु से अलंकार की ध्वनि का यह उदाहरण है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः' ॥

अत्र प्रकृतानां मणीनां प्रतिषेधेनाप्रकृतानामश्रुबिन्दूनां स्थापनमपह्नुतिः। राक्षसश्रियोऽश्रुबिन्दूनामलीकत्वेन कविप्रौढोक्तिमात्रसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते । अलङ्कारेणालङ्कारध्वनिर्यथा—

'या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी' ॥

अत्र कविप्रौढोक्तिसिद्धाभ्यां हसन्तीवान्यदिवेत्युत्प्रेक्षाभ्यां भारतीतन्निर्माणयोर्ब्रह्मतन्निर्मिताभ्यां व्यतिरेकालङ्कारस्य व्यक्तिः । वस्तुना वस्तुध्वनिर्यथा—

'तदवधि कुशली पुराणशास्त्रस्मृतिसुचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते हरिणकिशोरदृशो दृशोर्विलासः' ॥

अत्र दृग्विलासकर्तृकपदार्पणस्य लोकसिद्धत्वाभावात्कविप्रौढोक्तिसिद्धेन वस्तुना दृग्विलासे सुनिपण्णे का कुशलचर्चा विवेकस्येति वस्तु व्यज्यते । अथ स्वसिद्धानां चतुर्णां भेदानां क्रमेणोदाहरणानि । वस्तुनालङ्कारध्वनिर्यथा—

'दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे' ॥ इति ।

अत्र स्वतः सिद्धेन वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालंकारो

---

'दशाननकिरीटेभ्यः' यह श्लोक अलंकार से वस्तु ध्वनिका उदाहरण है । यहां मणियों का निषेध करके उनको अश्रुबिन्दु बतलाया इसलिये अपह्नुति अलंकार है । इस कविप्रौढोक्तिसिद्ध अपह्नुत्यलंकार से 'राक्षसों का विनाश होने वाला है' इस वस्तु की ध्वनि होती है अतः यह कविप्रौढोक्तिसिद्ध अलङ्कार से वस्तुध्वनि का उदाहरण है । 'या स्थविरमिव हसन्ती' इस श्लोक में दो उत्प्रेक्षा अलङ्कारों द्वारा ब्रह्मा और इस की सृष्टि से वाणी और वाणी के विस्तार की अधिकता की प्रतीति होने के कारण व्यतिरेक अलंकार की ध्वनि का यह उदाहरण है । 'तदवधि कुशली पुराण०' यह कविप्रौढोक्तिसिद्ध वस्तु से वस्तुध्वनि का उदाहरण है । इस श्लोक में 'जब तक कामिनी का कटाक्ष नायक के हृदय में पदार्पण नहीं करता' यह कटाक्ष का पदार्पण कविकल्पित वस्तु है । इससे 'कटाक्षपात होने पर विवेक नहीं रहता" इस वस्तु की ध्वनि होती है । अब स्वतःसिद्ध ( स्वाभाविक ) अर्थ की व्यञ्जकता से चारों भेदों के उदाहरण देखिये—"दिशि मन्दायते तेजो' यह स्वतःसिद्ध वस्तु से अलंकारध्वनि का उदाहरण है । यहाँ स्वतःसिद्ध वस्तु से 'रघु का प्रताप सूर्य से भी अधिक है' इस

CC0. Vasishtha Tripathi Collection, Digitized by eGangotri

**शब्दार्थोभयभूरेकः स च वाक्यैकसंश्रयः ।**

व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा—

'आपतन्तममुं दूरादूरीकृतपराक्रमः । बलोऽवलोकयामास मातङ्गमिव केसरी' ॥ इति।

अत्र स्वतः सिद्धेनोपमालङ्कारेण बलदेवः क्षणेनैव बाणासुरतनयस्य वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते । स्वतः सिद्धेनालङ्कारेणालङ्कारध्वनिर्यथा—

'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन' ॥ इति ।

अत्र स्वतः सिद्धेन क्रियायौगपद्यात्मना समुच्चयेन कार्यकारणपौर्वापर्यविपर्ययात्मिकातिशयोक्तिर्व्यज्यते । स्वतः सिद्धेन वस्तुध्वनिर्यथा—

'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति सम्मुखम् ।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः' ॥ इति ।

अत्र स्वतः सिद्धेन मधुव्रतकर्तृकमञ्जुगुञ्जनादिवस्तुनाऽऽसन्नसरसिजोत्पत्तिध्वननद्वारा शरदागमनैकव्यरूपं वस्तु व्यज्यते । एतेऽर्थशक्त्युद्भवस्य द्वादश भेदाः ॥ ८ ॥

शब्दार्थोभयशक्तिजध्वनिं व्याचष्टे—शब्देति । चकारो ह्यर्थे । हि यतः स वाक्यमेवैकः संश्रयो यस्य स वाक्यैकसंश्रयो वाक्यनिष्ठः । अत एव शब्दश्चार्थश्च शब्दार्थौ

---

व्यतिरेक अलंकार की ध्वनि होती है । 'आपतन्तममुं दूरात्' यह स्वतः सिद्ध अलंकार से वस्तु ध्वनि का उदाहरण है । यहां स्वतः सम्भवी उपमा अलंकार से 'बलराम बाणासुर के पुत्र वेणुदारी का क्षणमात्र में ही विनाश करेंगे' इस वस्तु की ध्वनि होती है । 'उदितं मण्डलमिन्दोः' यह स्वतः सिद्ध अलंकार से अलंकार ध्वनि का उदाहरण है । इस श्लोक में चन्द्रोदय होते ही वियोगी मनुष्य रुदन करने लगे और कामदेव मुदित हुआ । इन तीनों क्रियाओं की एक ही काल में उत्पत्ति होने से समुच्चय अलङ्कार स्वतः सिद्ध है । इस अलंकार से कार्यकारण के पौर्वापर्यविपर्ययरूप अतिशयोक्ति की ध्वनि होती है । क्योंकि चन्द्रोदय कामदेव के हर्ष में कारण होता है । इस कार्य-कारण के पूर्वापरभाव का व्यतिक्रम होने से उक्त अतिशयोक्ति है । 'गुञ्जन्ति मञ्जु परितो गत्वा' यह श्लोक स्वतःसिद्ध वस्तु से वस्तुध्वनि का उदाहरण है । यहां भ्रमरों की मञ्जु ध्वनि का वर्णन स्वतःसिद्ध वस्तु है । इससे कमलोत्पत्ति की प्रतीति द्वारा शरद ऋतुका आगमन ध्वनित होता है । ये सब अर्थशक्त्युद्भव ध्वनि के द्वादश भेद हैं ॥८॥

शब्दार्थोभयशक्ति से होने वाली ध्वनि का स्पष्टीकरण यह है—शब्दशक्ति वा अर्थशक्ति से उत्पन्न होने वाली ध्वनि वाक्य में ही होती है । अतः इस का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदैकदेशे रचनावर्णवाक्यपदेष्वपि ॥ १ ॥

तयोरुभयं तेन भवतीति शब्दार्थोभयभूः शब्दार्थोभयजन्मा ध्वनिरेक एव भवति। केषाञ्चित्परिवृत्तिसहत्वात्केषाञ्चिच्च पदानां परिवृत्त्यसहत्वादुभयस्यापि प्राधान्येन व्यञ्जकतयोभयशक्तिमूलकोऽयं ध्वनिः। यथोदाहरणम्—

'रम्यहासा रसोल्लासा रसिकालिनिषेविता।
सर्वाङ्गशोभासम्भारा पद्मिनी कस्य न प्रिया' ॥ इति।

अत्र हासरसालिपद्मिनीशब्दाः परिवृत्त्यसहाः, अन्ये च शब्दाः परिवृत्तिसहा इति द्व्युत्थो ध्वनिः। अत्र पद्मिनीव पद्मिनीनायिकेत्युपमालङ्कारो ध्वन्यते। अस्फुटक्रमस्याश्रयभेदेन षड्भेदानाह—पदैकेति। पदस्यैकदेशस्तत्र प्रकृतिप्रत्ययादिरूपे पदांशे। रचना पदसंघटना, वर्णा अक्षराणि, वाक्यं पदसमूहरूपं पदं चेति तेषु तथोक्तेषु। अपि अस्फुटक्रमो रसादिर्भवति। पदांशः प्रकृतिप्रत्ययोपसर्गनिपातसुप्तिङ्रूपविभक्तिप्रभृतिभेदादनेकविधः। तत्र सम्बन्धकारकस्य व्यञ्जकत्वं यथा—

'ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि' ॥ इति।

एक ही भेद माना गया है। इस में कितने ही पदों का परिवर्तन हो सकता है और कतिपय पदों का परिवर्तन नहीं हो सकता अतः शब्द व अर्थ इन दोनों की प्रधानता के कारण यह ध्वनि शब्दार्थोभयशक्तिजन्मा कही जाती है। 'रम्यहासा रसोल्लासा' यह इसका उदाहरण है। यहां हास, रस, अलि तथा पद्मिनी शब्दों का परिवर्तन नहीं हो सकता। उक्त शब्दों से भिन्न शब्दों का पर्यायवाची शब्दों द्वारा परिवर्तन किया जा सकता है। अतः शब्दार्थोभयशक्तिजन्मा ध्वनि है। यहां पद्मिनी ( कमलिनी ) के समान पद्मिनी नायिका है इस उपमा अलङ्कार की ध्वनि होती है। अस्फुटक्रमव्यङ्ग्य के आश्रयभेद से छै भेद बतलाये जाते हैं—पद के अंश में, पदरचना में, वर्णों में, वाक्य और पद में अस्फुटक्रम ( रसादि )—ध्वनि होती है। प्रकृति, प्रत्यय, उपसर्ग, निपात तथा सुप्तिङ्रूप विभक्ति के भेद से पदांशगत रसादि ध्वनि के अनेक भेद हैं। इन में षष्ठी विभक्ति के द्वारा रसादि ध्वनि का 'ग्रामरुहास्मि', यह श्लोक उदाहरण है। नागरिक स्त्रियोंने वृषभ ( बैल ) पर बैठी हुई स्त्री को देख कर यह ग्रामीण स्त्री है ऐसा उपहास किया। ग्रामीण स्त्री ने इसका उत्तर दिया कि 'मैं ग्रामीण हूँ, ग्राम में निवास करती हूं, नागरिक चातुर्य मैं नहीं जानती; तथापि मैं नागरिक कामिनियों के पतियों को अपने आधीन रखती हूँ,। यहां 'नागरिकाणां पतीन्' इस षष्ठी

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र वृषभारूढा ग्रामीणेति नागरीभिरुपहसिता काचित्कुलटा ताः प्रत्याह—नागरिकानित्यपहाय नागरिकाणां पतीनित्युक्तम् । नगरस्त्रियो हि चतुरा भवन्ति ताभ्योऽप्यतिचतुरास्तासां पतयो भवन्ति तानहं ग्रामीणा हरामीति ग्राम्यनायिकाया नागरिकाणामिति सम्बन्धेन पदांशरूपेण चातुर्यातिशयो व्यज्यते । रचना वैदर्भीपाञ्चालिक्यादिरीतिरूपा रसव्यञ्जिकेति रीतिनिरूपणावसरे षष्ठमयूखे (२२२-२२३ पृ०) प्रतिपादितम् । वर्णा मधुराप्रौढादिवृत्तिरूपाः षष्ठमयूखे ( २२६–२२७ पृ० ) अभिहिताः । मधुरा वर्णाः शृङ्गारादिरसव्यञ्जकाः । एवमन्येऽपि । वाक्यव्यञ्जकतोदाहरणानि शृङ्गारादिरसोदाहरणेषु द्रष्टव्यानि । पदव्यञ्जकतोदाहरणं यथा—

'लावण्यं तदसौ कान्तिस्तद्रूपं स वचः क्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्' ॥ इति ।

अत्र पूर्वानुभूतताद्दगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम् । अन्येषां पदानां तु तदुपकारित्वमेवेति पदमूलकत्वेन ध्वनिव्यपदेशः काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकता भवितुमर्हति । अत एवोक्तं ध्वन्यालोके तृतीयोद्योते—

'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती' ॥ इति ॥ ९ ॥

---

विभक्ति से 'ग्राम्य स्त्री में अत्यन्त चातुर्य है' यह ध्वनित होता है। क्योंकि नगर की स्त्रियां चतुर होती हैं और उन से भी अधिक चतुर उनके पति होते हैं। उन अतिचतुर नागरिकस्त्रियों के पतियों को ग्राम्यस्त्री अपने वश में रखती है तो मालूम होता है यह ग्राम्यस्त्री अत्यन्त चतुरा है। वैदर्भी आदि रीतिरूपी रचना रस की व्यञ्जक होती है। यह रीति निरूपण के समय षष्ठ मयूख के २२२–२२३ पृष्ठों में प्रतिपादित किया जा चुका है। मधुरा प्रौढा आदि वृत्तियों के निरूपण में षष्ठमयूख के २२६–२२७ पृष्ठों में ककारादि वर्ण रसादिक व्यञ्जक होते हैं, यह लिखा जा चुका है। वाक्यद्वारा रसव्यञ्जकता शृङ्गारादि के उदाहरणों से देखिए। "लावण्यं तदसौ कान्तिः' यहां पद द्वारा शृङ्गार की ध्वनि है। 'वह लावण्य, वह कान्ति, वह रूप, वह वचन' इस कथन में पूर्व अनुभूत लावण्य आदि के स्मरण से 'तत्' शब्द ( वह शब्द ) का ही प्राधान्य है अन्य शब्द इस स्मृति के उपकारक हैं अतः पदध्वनि यहां मानी गई है। जैसे सम्पूर्ण शरीर के सुन्दर होने पर भी उस के अवयव सुन्दर बतलाये जाते हैं वैसे ही सम्पूर्ण काव्य की सुन्दरता उस के अवयवों ( पदादि ) में भी बतलाई जा सकती है। ध्वन्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रबन्धे चेति षोढाऽसौ रसाद्याख्योऽस्फुटक्रमः।
एषु सप्तदशस्वेकं परित्यज्यास्फुटक्रमम् ॥ १० ॥
ये षोडशाद्या द्विगुणास्ते स्युर्वाक्यपदाश्रयात्।
प्रबन्धेऽपि द्वादश स्युरर्थशक्तिभुवो भिदः ॥ ११ ॥
द्वात्रिंशद् द्वादशैकः षट् सर्वसङ्कलितध्वनेः।

अस्फुटक्रमस्य षष्ठं भेदं ब्रूते—प्रबन्ध इति। रसादिराख्या यस्य सः। असावस्फुटक्रमे ध्वनिः प्रबन्धे चेति षोढा। प्रबन्धे यथा महाभारते शान्तः, रामायणे करुणः, मालतीमाधव-रत्नावल्यादौ च श्रृङ्गारः। पद-पदांश-वर्ण रचना-वाक्य-प्रबन्धगतत्वेन रसादिध्वनिःषड्विध इत्यर्थः। अन्यभेदानाह—एष्विति। एषु पूर्वोक्तेषु सप्तदशसु भेदेषु। एकमस्फुटक्रमं परित्यज्य विहायान्ये षोडश भेदाः पदवाक्यगतत्वेन द्वात्रिंशत्संख्यामिता भवन्ति। द्वौ लक्षणामूलौ, वस्त्वलङ्काररूपौ द्वौ शब्दशक्तिजौ, द्वादशार्थशक्तिजा भेदा इति सर्वसङ्कलने षोडश भेदाः। शब्दार्थोभयशक्तिजस्य केवलवाक्यनिष्ठत्वादत्राग्रहणम्। य एते आद्याः षोडश भेदास्ते वाक्यं च पदं चेति वाक्यपदे तयोराश्रयस्तस्मात्। पदवाक्यगतत्वेनेति भावः। द्विगुणा द्वात्रिंशत्संख्याः स्युः। अर्थशक्तिभुवोऽर्थशक्त्युद्भवस्य द्वादश भेदाः प्रबन्धे वाक्यसमूहेऽपि द्वादश भिदो भेदाः स्युः ॥१०-११॥

ध्वनेरेकपञ्चाशद् भेदान् सङ्कलयति—द्वात्रिंशदिति। पूर्वोक्ताः षोडश भेदाः पदवा-

लोक के तृतीय उद्योत से उक्त विषय की पुष्टि भी होती है ॥ ९ ॥

अस्फुटक्रमव्यङ्ग्य का षष्ठ भेद यह है—रसादिध्वनि अस्फुटक्रमव्यङ्ग्य कही जाती है। यह ध्वनि प्रबन्ध में भी होती है, अतः इसके छै भेद होते हैं। महाभारत में शान्तरस, रामायण में करुणरस, मालतीमाधव व रत्नावली में श्रृङ्गाररस, प्रबन्धगत रसध्वनि के उदाहरण हैं। इस प्रकार पद-पदांश-रचना-वर्ण-वाक्य और प्रबन्ध-निष्ठ होने से रसादि ध्वनि के छै भेद होते हैं। ध्वनि के अन्य भेद बतलाये जाते हैं—इन पूर्वोक्त सत्रह भेदों में से एक अस्फुटक्रमव्यङ्ग्य को छोड़ कर जो सोलह भेद बचे, वे पदगत और वाक्यगत होने से बत्तीस होते हैं। अर्थान्तरसंक्रमितवाच्य और अत्यन्ततिरस्कृतवाच्य ये दो लक्षणामूलेध्वनि के भेद, वस्तुध्वनि और अलंकार ध्वनि ये दो शब्दशक्ति के भेद और द्वादश अर्थशक्ति के भेद मिल कर सोलह भेद होते हैं। शब्दार्थोभयशक्तिजन्मा ध्वनि केवल वाक्य में ही होती है, अतः उसका यहां ग्रहण नहीं किया गया है। अर्थशक्तिजन्य-ध्वनि के द्वादश भेद प्रबन्ध में भी होते हैं ॥ १०-११ ॥

ध्वनि के एकपञ्चाशत (इक्यावन) भेदों की गणना की जाती है—उक्त

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र वृषभारूढा ग्रामीणेति नागरीभिरुपहसिता काचित्कुलटा ताः प्रत्याह—नागरिकानित्यपहाय नागरिकाणां पतीनित्युक्तम् । नगरस्त्रियो हि चतुरा भवन्ति ताभ्योऽप्यतिचतुरास्तासां पतयो भवन्ति तानहं ग्रामीणा हरामीति ग्राम्यनायिकाया नागरिकाणामिति सम्बन्धेन पदांशरूपेण चातुर्यातिशयो व्यज्यते । रचना वैदर्भीपाञ्चालिक्यादिरीतिरूपा रसव्यञ्जिकेति रीतिनिरूपणावसरे षष्ठमयूखे (२२२-२२३ पृ०) प्रतिपादितम् । वर्णा मधुराप्रौढादिवृत्तिरूपाः षष्ठमयूखे ( २२६-२२७ पृ० ) अभिहिताः । मधुरा वर्णाः श्रृङ्गारादिरसव्यञ्जकाः । एवमन्येऽपि । वाक्यव्यञ्जकतोदाहरणानि श्रृङ्गारादिरसोदाहरणेषु द्रश्यानि । पदव्यञ्जकतोदाहरणं यथा—

'लावण्यं तदसौ कान्तिस्तद्रूपं स वचः क्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्' ॥ इति ।

अत्र पूर्वानुभूततादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम् । अन्येषां पदानां तु तदुपकारित्वमेवेति पदमूलकत्वेन ध्वनिव्यपदेशः काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकता भवितुमर्हति । अत एवोक्तं ध्वन्यालोके तृतीयोद्योते—

'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती' ॥ इति ॥ ९ ॥

---

विभक्ति से 'ग्राम्य स्त्री में अत्यन्त चातुर्य है' यह ध्वनित होता है। क्योंकि नगर की स्त्रियां चतुर होती हैं और उन से भी अधिक चतुर उनके पति होते हैं। उन अतिचतुर नागरिकस्त्रियों के पतियों को ग्राम्यस्त्री अपने वश में रखती है तो मालूम होता है यह ग्राम्यस्त्री अत्यन्त चतुरा है। वैदर्भी आदि रीतिरूपी रचना रस की व्यञ्जक होती है। यह रीति निरूपण के समय षष्ठ मयूख के २२२-२२३ पृष्ठों में प्रतिपादित किया जा चुका है। मधुरा प्रौढा आदि वृत्तियों के निरूपण में षष्ठमयूख के २२६-२२७ पृष्ठों में ककारादि वर्ण रसादिक व्यञ्जक होते हैं, यह लिखा जा चुका है। वाक्यद्वारा रसव्यञ्जकता श्रृङ्गारादि के उदाहरणों से देखिए। 'लावण्यं तदसौ कान्तिः' यहां पद द्वारा श्रृङ्गार की ध्वनि है। 'वह लावण्य, वह कान्ति, वह रूप, वह वचन' इस कथन में पूर्व अनुभूत लावण्य आदि के स्मरण से 'तत्' शब्द ( वह शब्द ) का ही प्राधान्य है अन्य शब्द इस स्मृति के उपकारक हैं अतः पदध्वनि यहां मानी गई है। जैसे सम्पूर्ण शरीर के सुन्दर होने पर भी उस के अवयव सुन्दर बतलाये जाते हैं वैसे ही सम्पूर्ण काव्य की सुन्दरता उस के अवयवों ( पदादि ) में भी बतलाई जा सकती है। ध्वन्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रबन्धे चेति षोढाऽसौ रसाद्याख्योऽस्फुटक्रमः ।
एषु सप्तदशस्वेकं परित्यज्यास्फुटक्रमम् ॥ १० ॥
ये षोडशाद्या द्विगुणास्ते स्युर्वाक्यपदाश्रयात् ।
प्रबन्धेऽपि द्वादश स्युरर्थशक्तिभुवो भिदः ॥ ११ ॥
द्वात्रिंशद् द्वादशैकः षट् सर्वसङ्कलितध्वनेः ।

---

अस्फुटक्रमस्य षष्ठं भेदं ब्रूते—प्रबन्ध इति । रसादिराख्या यस्य सः । असावस्फुटक्रमे ध्वनिः प्रबन्धे चेति षोढा । प्रबन्धे यथा महाभारते शान्तः, रामायणे करुणः, मालतीमाधव-रत्नावल्यादौ च शृङ्गारः । पद-पदांश-वर्ण रचना-वाक्य-प्रबन्धगतत्वेन रसादिध्वनिःषड्विध इत्यर्थः । अन्यभेदानाह—एष्विति । एषु पूर्वोक्तेषु सप्तदशसु भेदेषु । एकमस्फुटक्रमं परित्यज्य विहायान्ये षोडश भेदाः पदवाक्यगतत्वेन द्वात्रिंशत्संख्यामिता भवन्ति । द्वौ लक्षणामूलौ, वस्त्वलङ्काररूपौ द्वौ शब्दशक्तिजौ, द्वादशार्थशक्तिजा भेदा इति सर्वसङ्कलने षोडश भेदाः । शब्दार्थोभयशक्तिजस्य केवलवाक्यनिष्ठत्वादत्राग्रहणम् । य एते आद्याः षोडश भेदास्ते वाक्यं च पदं चेति वाक्यपदे तयोराश्रयस्तस्मात् । पदवाक्यगतत्वेनेति भावः । द्विगुणा द्वात्रिंशत्संख्याः स्युः । अर्थशक्तिभुवोऽर्थशक्त्युद्भवस्य द्वादश भेदाः प्रबन्धे वाक्यसमूहेऽपि द्वादश भिदो भेदाः स्युः ॥१०-११॥

ध्वनेरेकपञ्चाशद् भेदान् सङ्कलयति—द्वात्रिंशदिति । पूर्वोक्ताः षोडश भेदाः पदवा-

---

लोक के तृतीय उद्योत से उक्त विषय की पुष्टि भी होती है ॥ ९ ॥

अस्फुटक्रमव्यङ्ग्य का षष्ठ भेद यह है—रसादिध्वनि अस्फुटक्रमव्यङ्ग्य कही जाती है । यह ध्वनि प्रबन्ध में भी होती है, अतः इसके छै भेद होते हैं । महाभारत में शान्तरस, रामायण में करुणरस, मालतीमाधव व रत्नावली में शृङ्गाररस, प्रबन्धगत रसध्वनि के उदाहरण हैं । इस प्रकार पद-पदांश-रचना-वर्ण-वाक्य और प्रबन्ध-निष्ठ होने से रसादि ध्वनि के छै भेद होते हैं । ध्वनि के अन्य भेद बतलाये जाते हैं—इन पूर्वोक्त सत्रह भेदों में से एक अस्फुटक्रमव्यङ्ग्य को छोड़ कर जो सोलह भेद बचे, वे पदगत और वाक्यगत होने से बत्तीस होते हैं । अर्थान्तरसंक्रमितवाच्य और अत्यन्ततिरस्कृतवाच्य ये दो लक्षणामूले-ध्वनि के भेद, वस्तुध्वनि और अलंकार ध्वनि ये दो शब्दशक्ति के भेद और द्वादश अर्थशक्ति के भेद मिल कर सोलह भेद होते हैं । शब्दार्थोभयशक्तिजन्मा ध्वनि केवल वाक्य में ही होती है, अतः उसका यहां ग्रहण नहीं किया गया है अर्थशक्तिजन्य-ध्वनि के द्वादश भेद प्रबन्ध में भी होते हैं ॥ १०-११ ॥

ध्वनि के एकपञ्चाशत् ( एक्यावन ) भेदों की गणना की जाती है—उक्त

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भेदाः स्युरेकपञ्चाशत् संभिन्नास्तु सहस्रशः ॥ १२ ॥

क्यगतत्वेन द्वात्रिंशत्, द्वादश प्रबन्धगतार्थशक्तिजाः, एकः शब्दार्थोभयशक्तिजन्यः, असंलक्ष्यक्रमस्य षड् भेदाश्चेति सङ्कलितश्चासौ ध्वनिश्चेति सङ्कलितध्वनिः, सर्वश्चासौ सङ्कलितध्वनिश्चेति सर्वसङ्कलितध्वनिस्तस्य। सर्वसङ्कलन इति भावः। एकपञ्चाशद्भेदाः स्युः। तथाहि—(१) पदगतार्थान्तरसंक्रमितवाच्यध्वनिः, (२) वाक्यगतार्थान्तरसंक्रमितवाच्यध्वनिः, (३) पदगतात्यन्ततिरस्कृतवाच्यध्वनिः, (४) वाक्यगतात्यन्ततिरस्कृतवाच्यध्वनिः, (५) पदगतरसाद्यलक्ष्यक्रमध्वनिः, (६) वाक्यनिष्ठरसाद्यलक्ष्यक्रमध्वनिः, (७) पदांशनिष्ठरसाद्यलक्ष्यक्रमध्वनिः, (८) वर्णनिष्ठरसाद्यलक्ष्यक्रमध्वनिः, (९) रचनानिष्ठरसाद्यलक्ष्यक्रमध्वनिः, (१०) प्रबन्धगतरसाद्यलक्ष्यक्रमध्वनिः, (११) पदगतशब्दशक्त्युद्भववस्तुध्वनिः, (१२) वाक्यगतशब्दशक्त्युद्भववस्तुध्वनिः, (१३) पदगतशब्दशक्त्युद्भवालङ्कारध्वनिः, (१४) वाक्यगतशब्दशक्त्युद्भवालङ्कारध्वनिः, (१५) वाक्यगतशब्दार्थोभयशक्त्युद्भवालङ्कारध्वनिः। अर्थशक्त्युद्भवो द्वादशधा यथा—(१) स्वतःसंभविवस्तुना वस्तुध्वनिः, (२) स्वतःसंभविवस्तुनालङ्कारध्वनिः। (३) स्वतःसंभव्यलङ्कारेण वस्तुध्वनिः, (४) स्वतःसंभव्यलङ्कारेणालङ्कारध्वनिः, (५) कविप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिः, (६) कविप्रौढोक्तिसिद्धवस्तुनालङ्कारध्वनिः, (७) कविप्रौढोक्तिसिद्धालङ्कारेण वस्तुध्वनिः, (८) कविप्रौढोक्तिसिद्धालङ्कारेणालङ्कारध्वनिः, (९) कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिः, (१०) कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुनालङ्कारध्वनिः, (११) कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारेण वस्तुध्वनिः, (१२) कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारेणालङ्कारध्वनिः, एते द्वादशार्थशक्त्युद्भवध्वनेर्भेदाः पदवाक्यप्रबन्धगतत्वेन षट्त्रिंशद्भेदतां यान्ति। पूर्वोक्तपञ्चदशध्वनिभेदैः सहैते षट्त्रिंशद्भेदाः (१५ + ३६=५१) ध्वनेरेकपञ्चाशद्भेदा जायन्ते। संभिन्नास्तु सङ्करसंसृष्टिभ्यां सम्मिलितास्तु सहस्रशो भेदाः स्युः। यथोक्तं साहित्यदर्पणे—

'सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
वेदखाग्निशराः (५३०४) शुद्धैरिषुबाणाग्निसायकाः (५३५५)' ॥इति ॥ १२ ॥

---

बत्तीस भेद तथा अर्थशक्तिजन्य-ध्वनि के प्रबन्धगत द्वादश भेद व एक भेद शब्दार्थोभयशक्ति 'का और छै भेद रसध्वनि के, इन सबका सङ्कलन करने पर ध्वनि के इक्यावन भेद होते हैं। जिनके नाम संस्कृत टीका में देखने चाहिये। अलंकारों के समान इन भेदों का सङ्कर व संसृष्टि करने पर ध्वनि के सहस्रों भेद हो जाते हैं। जैसा कि साहित्यदर्पण में तीन प्रकार के संकर व संसृष्टि करने पर ५३५५ ध्वनि के भेद बतलाये हैं। संकर व संसृष्टिका स्वरूप १६० पृष्ठमें देखिये॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वक्तृस्यूतं बोधयितुं व्यङ्ग्यं वक्तुरभीप्सितम् ॥
स्वाङ्कुरितमतद्रूपं स्वयमुल्लसितं गिरः ॥ १२ ॥
कश्चित् साधारणः कश्चिदामन्त्र्य प्रतिबोधितः ।

आर्थीव्यञ्जनानिरूपणव्याजेन पुनर्व्यङ्ग्यस्य विभागान्तरं व्याचष्टे—वक्तृस्यूतमिति । वक्तुः कथयितुर्बोधयितुं ज्ञापयितुमभीप्सितं यद् व्यङ्ग्यं तद् वक्तृस्यूतं व्यङ्ग्यं भवति । वक्तृतात्पर्यविषयभूतमित्यर्थः । यथा 'गङ्गायां घोषः' इत्यत्र शैत्यपावनत्वादि व्यङ्ग्यं बोधयितुमभीप्सितम् । अतद्रूपं वक्तुस्तात्पर्याविषयीभूतम् । गिरो वाचः स्वयमुल्लसितं विकसितं स्वाङ्कुरितं व्यङ्ग्यं भवति । यथा 'अस्तं गतो भानुमान्' इत्यत्र अभिसरणमुपक्रम्यताम्, प्रायःप्रायस्ते प्रेयान्, कर्मकरणान्निवर्तामहे, सान्ध्यो विधिरुपक्रम्यताम्, दूरं मा गाः, गावो गृहे प्रवेश्यन्ताम्, तापोऽधुना न भवति, विक्रेयवस्तूनि संह्रियन्ताम्, नागतोऽद्य प्रेयान् ,इत्यादयो नानार्था वक्तुरतात्पर्यभूता बोद्धव्यादिवैशिष्ट्याद् व्यज्यन्ते ॥ १२ ॥

वक्तृस्यूतस्य चातुर्विध्यं व्याचष्टे—कश्चिदिति । वक्तृस्यूते बोद्धुश्चातुर्विध्यं भवति । यथा कश्चित्साधारणो वक्तृतात्पर्यानभिज्ञो बोद्धा भवति । यथा—'अस्तं गतो भानुमान्' इत्यत्र वक्तृतात्पर्यानभिज्ञस्यापि बोधः । यद्वा साधारणोऽप्रयोज्यत्वे सति

आर्थी व्यंजना के प्रसङ्ग से व्यङ्ग्य के भेदान्तर ( अन्य भेद ) बतलाये जाते हैं—वक्ता अपने तात्पर्य का बोध कराने के लिए व्यङ्ग्य का प्रयोग करे तो वह वक्तृस्यूतव्यङ्ग्य होता है । 'गंगायां घोषः' गंगा के जल में घोष है यह प्रयोग वक्ता से इस घोष में शैत्य व पावनत्व की अधिकता बतलाने के लिए किया गया है, अतः यहां वक्तृस्यूतव्यङ्ग्य है । वक्ता की इच्छा के बिना ही जिस वाक्य से बोद्धा अपने योग्य अर्थको समझ ले वहां स्वाङ्कुरित नामक व्यङ्ग्य होता है । 'अस्तं गतो भानुमान्' सूर्य अस्त हो गया यह इसका उदाहरण है । यहां तुम्हारा पति आने ही वाला है, तुम संमुख जाओ, कारखाने बन्द कर दो, सायंकालीन काम करो, दूर मत जाओ, गायों को घर में बांध दो, इस वक्त सूर्य का ताप नहीं है, दुकानें समेटो, आज भी तुम्हारा पति नहीं आया, इत्यादि बहुत से व्यङ्ग्य अर्थों को वक्ता की अनिच्छा से ही सुनने वाले जान लेते हैं ॥ १२ ॥

वक्तृस्यूतव्यङ्ग्य के चार भेद किये जाते हैं—वक्तृस्यूतव्यङ्ग्य के समझने वाले चार तरह के होते हैं । एक श्रोता साधारण-वक्ता के तात्पर्य को नहीं समझने वाला होता है । जैसे 'अस्तं गतो भानुमान्' यहां श्रोता वक्ता के तात्पर्य को नहीं समझ कर अपने मतलब की बात समझ लेता है । अथवा प्रश्न के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**कश्चित्तटस्थः कश्चिच्च बोधितप्रतिबोधितः ॥ १४ ॥**

प्रतिपाद्यो भवति। यथा—'कुम्भं गृहीत्वा विपुलं सत्वरं समुपागता। श्रमस्वेदनिरासाय विश्राम्यामि सखि! क्षणम्॥' इत्यत्र सखीं प्रति रतिगोपनं प्रश्नं विनैव प्रतिपादितम्। कश्चिदामन्त्र्य सम्बोध्य प्रतिबोधितो विज्ञापितो भवति। यथा—'पथिक नात्र स्रस्तरमस्ति' (२२९ पृ.) अस्मिन्पद्ये पथिकेति सम्बोध्य पयोधरादिशब्दैर्नायिकया 'अत्रैवोपभोगाय तिष्ठ' इति स्वाभिप्रायः प्रतिबोधितः। यद्वा आमन्त्र्य प्रतिबोधितो नीचो भवति। यथा—

'त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम्।
किंशुकाभरणं देहे दृश्यते कथमन्यथा' ॥ इति ॥

त्वं तन्निकटे रन्तुं गतासीति नायिकया दूती आमन्त्र्य बोधिता। कश्चित्तटस्थो बोद्धा भवति। आमन्त्रणशून्यत्वेऽपि वक्तृतात्पर्याभिज्ञत्वं तटस्थत्वम्। यथा 'पश्य निश्चल निष्पन्दा' (२३४ पृ.) इत्यत्र सखीं प्रत्युक्त्या नायिकया तटस्थं प्रति संकेतस्थानं बोधितम्। यद्वा तटस्थः समो बोद्धव्यः। यथा—

'गृहोपकरणे सर्वं व्यापृतायाः सखे! दिनम्।
सन्ध्यायां मम विश्रामः क्वचिद् भवति वा न वा' ॥ इति ॥

अत्र संकेतकालबोद्धा कश्चित्सम्बोधितः। कश्चिद् बोधितेन प्रतिबोधितो बोद्धा

---

विना ही उत्तर देने वाला श्रोता भी साधारण ही होता है। 'कुम्भं गृहीत्वा' यहां नायिका ने विना पूछे ही अपनी बात का गोपन करने के लिये अपनी सखी को वचन कहा। संबोधन करके समझाने को 'आमन्त्र्य प्रतिबोधित' बोद्धा कहते है। 'पथिक! नात्र' इस श्लोक में नायिका ने पथिक को सम्बोधन करके व्यङ्ग्य से अपना आशय समझाया कि उपभोग करना चाहो तो यहां रह सकते हो। अथवा अपने से नीचे आदमी को आमन्त्र्यप्रतिबोधित कहते हैं। 'त्वं दूति निरगाः कुञ्जम्' यहां नायिका ने दूती को सम्बोधन करके कहा कि तू उस नायक के साथ उपभोग करने को नहीं गई थी। यहां दूती नायिका की अपेक्षा अधम है। तीसरा तटस्थ श्रोता होता है। विना सम्बोधन के ही वक्ता के अभिप्राय को समझने वाला तटस्थ श्रोता है। 'पश्य निश्चल' ( २३४ पृ० ) यहां नायिका ने अपनी सखी को सम्बोधन करके कहा और नायक को संकेतस्थान बतला दिया। अथवा जो अपने समकक्ष हो वह भी तटस्थ बोद्धा होता है। 'गृहोपकरणे सर्वम्' यहां अपने मित्र नायक को नायिका ने संकेत समय बतलाया है, अतः यह इसका उदाहरण है। किसी के द्वारा प्रकारान्तर से अपने आशय को

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्येवं बोद्धृवैचित्र्याद्वक्तृस्यूतं चतुर्विधम् ।
उपेक्षानिह्नवाभ्यां च द्विधा स्वाङ्कुरितं मतम् ॥ १५ ॥
भूतादिकालभेदेन निह्नवः स्यादनेकधा ।

---

भवति । यथा—

'मथुरापथिक मुरारेरुपगेयं द्वारि बल्लवीवचनम् ।
पुनरपि यमुनाकूले कालियगरलानलज्वाला' ॥

इत्यत्र गोपीबोधितेन पथिकेन कृष्णः संकेताय प्रतिबोधयितुमिष्टः । अथवा बोधितप्रतिबोधित उत्तमो बोद्धा भवति । यथा—

'प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ।
अत्र स्थितिर्युक्तिमती न देशे करा हिमांशोरपि तापयन्ति' ॥

अत्रोत्तमः स्वामी बोद्धव्यः । एवं वक्तृस्यूतं व्यङ्ग्यं बोद्धृभेदेन चतुर्विधम् ॥१४॥

वक्तृस्यूतभेदानुपसंहरति—इतीति । इत्येवं बोद्धृवैचित्र्यं बोद्धृवैचित्र्यं तस्माद् बोद्धव्यवैशिष्ट्याद्व्यङ्ग्यार्थमूलं वक्तृस्यूतं व्यङ्ग्यं चतुर्विधं भवति । लक्ष्यार्थमूलस्य स्वाङ्कुरितस्य द्वैविध्यं व्याचष्टे—उपेक्षेति । उपेक्षा च निह्नवश्चेत्युपेक्षानिह्नवौ ताभ्यां गूढागूढाभ्यां व्यङ्ग्याभ्यां स्वाङ्कुरितमपि द्विधा । उपेक्षाविषयभूत निह्नवविषयभूतं चेति स्वाङ्कुरितं द्विधेति भावः । उपेक्षा व्यङ्ग्यगोपनानीहा, निह्नवो गोपनेहेति यावत् । एतौ भेदौ गूढागूढशब्दाभ्यां व्यवह्रियेते ग्रन्थान्तरेषु । एतयोरुदाहरणे प्रदर्शितपूर्वे ( २३५ पृ० ) ॥ १५ ॥

निह्नवस्यानेकभेदतां प्रतिपादयति—भूतादीति । भूत आदिर्यस्मिन्स भूतादिस्तादृशश्चासौ कालश्चेति भूतादिकालस्तस्य भेदेन । भूतगोपनं भाविगोपनं वर्त-

---

प्रकट कराना बोधितप्रतिबोधित बोद्धा होता है । 'मथुरापथिक ! मुरारेः' यहां गोपियों ने पथिक द्वारा अपना संकेत कृष्ण के निकट गायन के मिस से पहुँचाना चाहा है । अथवा अपने से उत्तम को आशय समझाना भी बोधितप्रतिबोधित होता है । 'प्राणेश ! विज्ञप्तिरियम्' इस श्लोक में नायिका ने अपने स्वामी को बोद्धा रखा है । यह नायिका की अपेक्षा उत्तम है । इस प्रकार ये चार भेद हुए ॥

वक्तृस्यूत के भेदों की गणना करके स्वाङ्कुरित के दो भेद बतलाये जाते हैं—उक्त प्रकार से बोद्धा की विशेषता के कारण वक्तृस्यूत के चार भेद होते हैं । स्वाङ्कुरित के उपेक्षा और निह्नव ये दो भेद हैं । अगूढव्यङ्ग्य को उपेक्षा और गूढव्यङ्ग्य को निह्नव कहते हैं । अगूढ व गूढव्यङ्ग्य के उदाहरण २३५ पृष्ठ में देखिये ॥ १५ ॥

निह्नव के अनेक भेद सम्भव हैं यह लिखा जाता है—भूतगोपन, भाविगोपन

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनेनापि प्रभेदेन व्यक्तिवल्ली विजृम्भते ॥ १६ ॥
नानाप्रभेदा नियताः क्वचित् प्रकरणादिना ।
अर्थेऽर्थमन्यं यं वक्ति तद्वाच्यव्यङ्ग्यमिष्यते ॥ १७ ॥

---

मानगोपनं चेति भूतादिकालभेदेन निह्नवोऽप्यनेकधा भवति । अनेनापि प्रभेदेन वक्तृस्यूतादिप्रभेदेनापि । यथा लक्षणामूलकार्थसंक्रमितवाच्यादिर्भेदस्तथैवेमे लक्ष्यार्थमूलका व्यङ्ग्यभेदा इत्यर्थः । व्यक्तिवल्ली लक्षणामूलव्यञ्जनालता विजृम्भते विकसति । अनेकभेदयुक्ता भवतीति भावः ॥ १६ ॥

अथाभिधामूलव्यङ्ग्यं व्याचष्टे—नानेति । नाना बहवः प्रभेदा अर्था यस्याः सा नानार्था वाक् प्रकरणादिना क्वचिदर्थे नियता नियमिता, सती, एकार्थवाचकत्वेन निश्चितेति भावः । यमन्यं द्वितीयमर्थं वाच्यातिरिक्तमर्थं वक्ति प्रतिपादयति तद्वाच्यव्यङ्ग्यमिष्यत उच्यत इति भावः । आदिना संयोगादयो गृह्यन्ते । स (अर्थः) चासौ वाच्यव्यङ्ग्यश्चेति समासः । नानार्थेष्वपरार्थस्य व्यञ्जनयोपस्थितौ वाच्यव्यङ्ग्यमित्यर्थः । वाच्यव्यङ्ग्यमुदाहरति—

'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत ॥'इति ।

अत्र प्रकरणेन राजन्यभिधा नियमिता, अतो गजरूपार्थो न केवलं वाच्यः किन्तु वाच्यः सन् व्यङ्ग्यः । असावनियमनदशायां वाच्यः प्रकरणादिना नियमनदशायां तु व्यङ्ग्यो भवतीति वाच्यव्यङ्ग्यपदेनोच्यते । एवं वक्तृस्यूतं व्यङ्ग्यार्थमूलं

---

व वर्तमानगोपन आदि काल के भेद से निह्नव के अनेक भेद हो सकते हैं । जैसे लक्षणामूलकव्यंजना के अर्थान्तरसंक्रमित आदि भेद होते हैं, वैसे ही लक्ष्यार्थमूलक इन स्वाङ्कुरित के भेदों से भी व्यंजनारूपी लता विस्तृत होती है ॥ १६ ॥

अभिधामूलकव्यङ्ग्य का विवरण यह है—अनेक अर्थ वाली वाणी एक अर्थ के बोधन में प्रकरणादिक से रुद्ध होकर जब अन्य अर्थ का बोध कराती है तो वह वाच्यव्यङ्ग्य होता है । भावार्थ यह हुआ कि अनेक अर्थों में से एक अर्थ के बाद दूसरे अर्थ की प्रतीति हो तो वह वाच्यव्यङ्ग्य होती है । 'भद्रात्मनो दुरधिरोह' यह इसका उदाहरण है । यहां अभिधाशक्ति प्रकरण से राजरूपी अर्थको बोध करा के विरत होती है और पुनः गज ( हाथी ) रूपी अर्थ की प्रतीति व्यंजना से होती है । यह अर्थ वाच्य होता हुआ व्यङ्ग्य होता है अतः वाच्यव्यङ्ग्य कहा जाता है । प्रकरणादिक के विना अर्थ का नियम नहीं रहने पर यह अर्थ वाच्य रहता है और प्रकरण आदि से एक अर्थ का नियम होने पर यह गजरूपी द्वितीय

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते

---

स्वाङ्कुरितं लक्ष्यार्थमूलम्, वाच्यव्यङ्ग्यं चाभिधामूलमिति व्यञ्जनाया अन्येऽपि भेदा विज्ञेयाः। काव्यप्रकाशे स्वार्थीव्यञ्जनाया इमे भेदा उक्ताः। यथा—

'वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा' इति। (२ उ० २१-२२)

आदिना चेष्टादिसंग्रहः। उदाहरणानि च तत्रैव द्रष्टव्यानि ॥ १७ ॥

अथ सप्तममयूखपर्यवसानं व्याचष्टे—महादेव इति। महादेवः सत्रेति प्रथममयूखोक्तः षोडशश्लोक एवात्रापि समाप्तौ ज्ञेयः। किन्त्वस्योत्तरार्धम्—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते ।
चिरं चन्द्रालोके महति मुनिसंख्यः सुखयतु' ॥

इति परिवर्त्य पठनीयम्। मुनिसंख्यः सप्तसंख्य इत्यर्थः। स्वायम्भुवमन्वन्तरे—मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति सप्त मुनयो बभूवुः। (हरिवंशे ६ अध्याये, बृहत्संहिता १२ अध्याये च)। विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाख्याः सप्त मुनयो वैवस्वतमन्वन्तरीया लोके प्रथिताः।

---

अर्थ व्यङ्ग्य हो जाता है। इस प्रकार यहां पर व्यङ्ग्यार्थमूल के वक्तृस्यूत लक्ष्यार्थमूलक के स्वाङ्कुरित व अभिधामूलक वाच्यव्यङ्ग्य यह व्यञ्जना के भेदों का निरूपण है। काव्यप्रकाश आदिग्रन्थों में वक्ता, बोद्धा, काकु, वाक्य, वाच्य, अन्यसामीप्य, प्रस्ताव, देश, काल और चेष्टा आदि की विशेषता से आर्थी व्यञ्जना के भेद किये गये हैं। इनके उदाहरण वहीं देखना चाहिए ॥ १७ ॥

अब कवि सप्तम मयूख की समाप्ति करता है—'महादेवः सत्र०' इस प्रथम मयूखके सोलहवें श्लोक के उत्तरार्ध में—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति मुनिसंख्यः सुखयतु'

यह परिवर्तन करके सप्तम मयूख की समाप्ति करनी चाहिये। शास्त्र में सात मुनि प्रसिद्ध हैं। सातों मुनियों के नाम हरिवंश में ये दिये गये हैं—मरीचि, अत्रि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चिरं चन्द्रालोके महति मुनिसंख्यः सुखयतु ॥

इति चन्द्रालोकालङ्कारे ध्वनिनिरूपणो नाम सप्तमो मयूखः ।

# अष्टमो मयूखः

यद्व्यज्यमानं मनसः स्तैमित्याय स नो ध्वनिः ।

---

अन्यत्पूर्ववत् ।

इति राजगुरुकथाभट्टवंश्येन जयपुरराजकीयसंस्कृतकालेजसाहित्य-महाध्यापकेन कथाभट्ट-श्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्यायाः सप्तममयूखे पर्यवसानम् ॥ ७ ॥

ध्वनिभेदान् निरूप्याधुना तद्भेदकथनप्रसङ्गेन मध्यमकाव्यरूपं गुणीभूतव्यङ्ग्यं व्याचष्टे—यदिति । येन काव्येन व्यज्यमानं व्यञ्जनया प्रत्यायितव्यङ्ग्यं मनसश्चित्तस्य स्तैमित्याय द्रुतिजनकतायै । आह्लादायेति भावः । भवति । 'ष्टिम आर्द्रीभावे' इति दैवादिको धातुः । स्त्रियां क्तिन् भावे ष्यञ् च । स नोऽस्माकं ध्वनिः । यत्र वाच्यापेक्षया व्यङ्ग्यार्थस्य प्रतीत्यात्यन्तसाह्लादः स ध्वनिरिति भावः । ध्वनिमत्काव्यमुत्तमं भवति । यथोक्तं काव्यप्रकाशे—'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति । अन्यथा व्यङ्ग्यस्य चमत्कारजनकत्वाभावे तु गुणीभूतव्यङ्ग्यरूपं मध्यमं काव्यं भवति । यथोक्तं काव्यप्रकाशे—'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्' इति । तच्च गुणीभूतव्यङ्ग्ये त्रिधाऽऽपतितं त्रिधा भवतीत्यर्थः । ध्वन्यालोके गुणीभूतव्यङ्ग्यलक्षणमुक्तम्—

'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्' ॥ इति ( ३।३५ ) ।

---

अङ्गिरा, पुलस्त्य, पुलह, क्रतु और वसिष्ठ ॥ १८ ॥

कथाभट्ट श्रीनन्दकिशोरशर्मा साहित्याचार्यकी कथाभट्टीया नामक हिन्दी व्याख्या में चन्द्रालोक का सप्तम मयूख समाप्त हुआ ।

ध्वनि भेदों का निरूपण करके प्रसंगागत गुणीभूतव्यङ्ग्य ( मध्यमकाव्य ) का निरूपण किया जाता है—जिस काव्य से प्रतीत हुआ व्यङ्ग्य चित्त में अत्यन्त आह्लाद करे वह काव्य ध्वनिमान् होने से उत्तम गिना जाता है । वाच्यकी अपेक्षा व्यङ्ग्य अर्थ में अधिक चमत्कार न हो तो गुणीभूतव्यङ्ग्य होता है और वहां मध्यम काव्य माना जाता है । इस ग्रन्थकार के मत से गुणीभूतव्यङ्ग्य के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्यथा तु गुणीभूतव्यङ्ग्यमापतितं त्रिधा ॥ १ ॥

व्यङ्ग्यार्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिः । तस्यैव तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः कल्प्यते । गुणीभूतत्वं च विवाहप्रवृत्तभृत्यानुयायिराजवद् भवति । साहित्यदर्पणमते सव्यङ्ग्यमेव काव्यं न च तच्छून्यम् । एतेन काव्यस्य द्वावेव ध्वनिगुणीभूतव्यङ्ग्यरूपौ भेदावति । एतदन्ये न सहन्ते । शब्दार्थालङ्काररूपस्यापि काव्यभेदात् । यथोक्तं ध्वन्यालोके-

'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद् यत्तच्चित्रमभिधीयते ॥
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्' ॥ ( ३।४२-४३ ) ।

रसगङ्गाधरे तु चत्वारः काव्यभेदाः—ध्वनिमदुत्तमोत्तमम् , गुणीभूतव्यङ्ग्यरूपं चोत्तमम् , अर्थालंकाररूपं मध्यमम् , शब्दालङ्काररूपं चाधममिति । काव्यं दृश्यश्रव्यभेदेन पुनरपि भिद्यते । दृश्यं नाटकादि, श्रव्यकाव्यं महाकाव्यादीति साहित्यदर्पणीयषष्ठपरिच्छेदे विलोकनीयम् । ग्रन्थान्तरेषु गुणीभूतव्यङ्ग्यस्याष्टौ भेदा भवन्ति । अत्र तु त्रयो भेदा इति भावः ॥ १ ॥

---

तीन भेद हैं । गुणीभूतव्यङ्ग्य का स्वरूप ध्वन्यालोक में इस प्रकार लिखा है—ललनालावण्य के समान व्यङ्ग्य अर्थ की प्रधानता में ध्वनि होती है और जब व्यङ्ग्य अर्थ वाच्यार्थ का पोषक बन जावे तो वह गुणीभूतव्यङ्ग्य हो जाता है । जिस प्रकार अपने सेवक के विवाह में प्रवृत्त राजा सेवक की शोभा बढ़ाने के कारण वहां अप्रधान हो जाता है उसी प्रकार ध्वनि भी वाच्य अर्थ की पोषिका होने से गुणीभूत हो जाती है । साहित्यदर्पण में व्यङ्ग्य के होनेपर ही काव्य माना जाता है अतः इस मत में ध्वनि और गुणीभूतव्यङ्ग्यरूप काव्य के दो ही भेद माने गये हैं । अन्य आलङ्कारिकों ने इस मतको नहीं माना । ध्वन्यालोक में लिखा है कि शब्दालङ्कार व अर्थालङ्कार के कारण भी काव्य के भेद होते हैं । रसगङ्गाधरमें काव्य के चार भेद बतलाये हैं । ध्वनि होनेपर उत्तमोत्तम काव्य, गुणीभूतव्यङ्ग्य में उत्तम काव्य, अर्थालंकार होने पर मध्यम काव्य और शब्दालंकार में अधम काव्य होता है । दृश्य ( नाटक आदि ) और श्रव्य ( महाकाव्य आदि ) के भेद से काव्य के और भी भेद होते हैं सो साहित्यदर्पण के षष्ठ परिच्छेद में देखना चाहिए । ग्रन्थान्तरों के मत से गुणीभूतव्यङ्ग्य के आठ भेद और इस ग्रन्थ के मत से तीन भेद माने गये हैं ॥ १ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यक्त एव क्वचिद्व्यङ्ग्यः क्वचिदर्थस्वभावतः ।
क्वचिच्चारुतरस्याग्रे स विमुञ्चति चारुताम् ॥ २ ॥
अगूढं कलयेदर्थान्तरसंक्रमितादिकम् ।

गुणीभूतव्यङ्ग्यस्य त्रैविध्यं लक्षयति—व्यक्त इति । क्वचिद् व्यक्तः प्रकटो वाच्य एव व्यङ्ग्यः । क्वचिदर्थस्य स्वभावात्स्वाभाविकादर्थादिति भावः । व्यङ्ग्यो न चारुः । क्वचित्स व्यङ्ग्यः । चारुतरस्यातिरम्यस्य वाच्यस्याग्रे चारुतां रमणीयतां विमुञ्चति त्यजति । प्रकटव्यङ्ग्यमेकम्, अचारुव्यङ्ग्यं द्वितीयम् , चारुतरवाच्यव्यङ्ग्यं तृतीयमिति त्रयो भेदाः । शरदागमकृन्मते त्वियं योजना—'व्यक्तिरेव' इति पाठः । क्वचिद् व्यक्तिर्व्यञ्जनैव चारुतां मुञ्चतीत्येकः प्रकारः । क्वचिद् व्यङ्ग्योऽर्थः स्वभावत एव चारुतां मुञ्चतीत्यपरः । क्वचिच्चारुरप्यर्थश्चारुतरसंनिधानादचारुरित्यपरः' इति । अत्र मते 'अर्थः स्वभावतः' इति भिन्नं पदम् ॥ २ ॥

अगूढव्यङ्ग्यं व्याचष्टे—अगूढमिति । अर्थान्तरसंक्रमितमादौ यस्य तत्तादृशगुणीभूतव्यङ्ग्यमगूढं कलयेज्जानीयात् । अर्थान्तरसंक्रमितवाच्यमत्यन्ततिरस्कृतवाच्यं पदगतशब्दार्थशक्तिमूलसंलक्ष्यक्रमं व्यङ्ग्यं चागूढं भवतीति भावः ।

गुणीभूतव्यङ्ग्य के तीन भेद ये हैं—कहीं व्यङ्ग्य प्रस्फुट होता है तो कहीं स्वाभाविक अर्थ से वह मनोहर नहीं होता और कहीं वह अत्यन्त मनोरम वाच्य की अपेक्षा से अपनी सुन्दरता को छोड़ देता है । अर्थात् प्रकटव्यङ्ग्य, अचारुव्यङ्ग्य, चारुतरवाच्यव्यङ्ग्य ये तीन भेद होते हैं । शरदागमकार के मत से इस श्लोक का अर्थ इस प्रकार है—व्यञ्जना अपनी चारुता को छोड़े तो प्रथम भेद, व्यङ्ग्यार्थ अपनी चारुता की रक्षा न करै तो द्वितीय भेद और मनोहर भी व्यङ्ग्य अत्यन्त मनोहर वाच्यकी अपेक्षा अचारु हो जावै तो तृतीय भेद होता है । इस मत में "अर्थ स्वभावतः' इन तीनों पदों का समास नहीं है ॥ २ ॥

गुणीभूतव्यङ्ग्य के आठ भेदों में से प्रथम अगूढव्यङ्ग्य यह है—अर्थान्तरसंक्रमितवाच्य, अत्यन्ततिरस्कृतवाच्य वा पदगत शब्द व अर्थमूलक संलक्ष्यक्रमव्यङ्ग्य में अगूढ नामक गुणीभूतव्यङ्ग्य होता है । अगूढ का अर्थ है प्रस्फुट । प्रस्फुटव्यङ्ग्य में वैसा अधिक चमत्कार नहीं रहता कि जैसा गूढ ( कुछ स्फुट ) में चमत्कार रहता है । जैसे कामिनी के कुचकलश कुछ प्रस्फुट और गूढ रहते हुये ही कामी पुरुषों को उत्कण्ठित करते हैं और अत्यन्त प्रस्फुट व अत्यन्त गूढ होने पर वे, रमणीय मालुम नहीं होते हैं उसी प्रकार व्यङ्ग्य के प्रस्फुट होनेपर उस में अप्रधानता आ जाती है और वह अगूढगुणीभूतव्यङ्ग्य कहलाता है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विस्मृतः किमपां नाथ स त्वया कुम्भसंभवः ॥ ३ ॥

अपरस्य　रसादेश्चेदङ्गमन्यद्रसादिकम्　।

अगूढमसहृदयैरपि वेद्यम् । तादृशं च वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम् । यथोक्तम्—

'नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ।

अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः' ॥ इति।

त्रिविधमुदाहरति—विस्मृत इति । हे अपांनाथ जलनाथ समुद्र ! स प्रसिद्धः कुम्भसंभवः समुद्रपाताऽगस्त्यः । त्वया विस्मृतः किम् ? अपि तु न विस्मृतः । त्वया च तस्माद्विभेतव्यमिति भावः । अत्र कुम्भसंभवपदे समुद्रपातृमुन्यर्थकतयात्यन्ततिरस्कृतवाच्यता, त्वयेतिपदे समुद्रपानरूपतत्सामर्थ्यज्ञातृतयार्थान्तरसंक्रमितवाच्यता अपांनाथपदे जडनाथार्थकबोधतया पदगतशब्दशक्तिमूलध्वनिः, विस्मृतपदे च न विस्मृत इत्यर्थबोधतया पदगतार्थशक्तिमूलध्वनिः । एतैर्ध्वनिभिः 'स मुनिरगस्त्य त्वां पास्यति ततस्त्वया विभेतव्य'मिति व्यज्यते । अस्य व्यङ्ग्यस्य वाच्यायमानतया सर्वैरसहृदयैरपि ज्ञायमानत्वात्स्फुटत्वम् ॥ ३ ॥

अपराङ्गं निरूपयति—अपरस्येति । चेद् यदि । रसादिकमन्यत् शृङ्गारादि । अपरस्यान्यस्य । रसादेः करुणादेः । अङ्गं प्रकर्षकम् । तदापरस्याङ्गमपराङ्गरूपं गुणीभूतव्यङ्ग्यम् । रसादेरपराङ्गत्वेऽपराङ्गगुणीभूतव्यङ्ग्यतेति भावः । अलक्ष्यक्रमो लक्ष्यक्रमो वाच्यवस्तु चेति त्रयाणां पदार्थानामपरशब्देन ग्रहणम् । रसपदेन च भावरसाभासा-

'विस्मृतः किमपांनाथ' यह इसका उदाहरण है । हे समुद्र ! तुम उस समुद्रपान करनेवाले अगस्त्य मुनिको भूल गये हो, नहीं कभी मत भूलना, तुमको उससे डरना चाहिये । यहां कुम्भसंभवपद द्वारा समुद्रपानकर्तृक अर्थ की प्रतीति से अत्यन्ततिरस्कृतवाच्यध्वनि, त्वयापद द्वारा 'समुद्रपान की शक्ति को जानने वाले' इस अर्थके ज्ञान मे अर्थान्तरसंक्रमितवाच्यध्वनि, 'अपां नाथ' पद से जडनाथरूप अर्थ के बोध होनेपर पदगतशब्दशक्तिमूलध्वनि और विस्मृत इस पदसे नहीं विस्मृत इस अर्थ की प्रतीति होनेपर पदगतअर्थशक्तिमूलकध्वनि है । इन ध्वनियों से 'वह अगस्त्य तुमको पी जावेगा इसलिये तुमको उससे डरना चाहिये' इस ध्वनि की प्रतीति होती है । यह ध्वनि वाच्य के समान अत्यन्त प्रस्फुट होने से अगूढनामक गुणीभूतव्यङ्ग्य है ॥ ३ ॥

अपराङ्ग का स्वरूप यह है—यदि रसादिव्यङ्ग्य दूसरे रसादिक वा वाच्य का अङ्ग ( प्रकर्षक ) हो तो अपराङ्गगुणीभूतव्यङ्ग्य होता है । भाव यह हुआ


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हा हा ! मत्कुचकाश्मीरलिप्तं भिन्नमुरः शरैः ॥ ४ ॥
तथा वाच्यस्य सिद्ध्यङ्गं नौरर्थो वारिधेर्यथा ।
संश्रित्य तरणिं धीरास्तरन्ति व्याधिवारिधीन् ॥ ५ ॥

---

दीनामपि ग्रहणम् । एकं व्यङ्ग्यं लक्ष्यक्रमालक्ष्यक्रमवाच्यानामङ्गं चेत्तदापराङ्गमिति भावार्थः । अलक्ष्यक्रमव्यङ्ग्यरूपापराङ्गत्वमुदाहरति—हा हेति । रणे पतितं कान्तं विलोक्य कस्याश्चित्कान्ताया उक्तिः । हा हेति खेदे । मत्कुचयोः काश्मीरेण कुङ्कुमेन संभोगकाल इति भावः । लिप्तं व्याप्तमुरो वक्षःस्थलम् । पत्युरिति शेषः । शरैः भिन्नं विदीर्णम् । अत्र संग्रामे मृतं पतिं विलोक्य काचिद्रोदितीति करुणो रसः प्रधानम् । पत्युर्वक्षःस्थले कुचकाश्मीरविलोकनेन संभोगस्मरणाद् विप्रलम्भशृङ्गारध्वनिः । विप्रलम्भस्य करुणपरिपोषकतयाऽप्रधानता । तेनात्र शृङ्गारः करुणस्याङ्गमित्यपराङ्गगुणीभूतव्यङ्ग्यता । उदाहरणान्तराणि रसवदाद्यलङ्कारनिरूपणे १८६—१८८ पृष्ठेषु विलोकनीयानि ॥ ४ ॥

वाच्यसिद्ध्यङ्गं ब्रूते—तथेति । यत्र वाच्यस्य वाच्यार्थस्य सिद्ध्यङ्गमुपपादकं व्यङ्ग्यं तदपि तथा वाच्यसिद्ध्यङ्गरूपं गुणीभूतव्यङ्ग्यम् । दृष्टान्तमाह—नौरिति । यथा वक्ष्यमाणोदाहरणे व्यङ्ग्यो नौरूपोऽर्थो वाच्यस्य वारिधिरूपार्थस्योपपादकः । नौकारूपार्थं विना वारिधिरूपार्थानुपपत्तेः । उदाहरति—संश्रित्येति । धीरास्तरणिं सूर्यं संश्रित्य आश्रित्य व्याधय एव वारिधयःसमुद्रास्तान् । तरन्ति नीरोगा भवन्तीति

---

कि व्यङ्ग्यके अलक्ष्यक्रम, लक्ष्यक्रम वा वाच्य इन तीनों में से किसी का एक भी अङ्ग हो जाने पर अपराङ्ग होता है । 'हा हा मत्कुच०' यह इसका उदाहरण है । संग्राम में पड़े हुए अपने पति को देखकर किसी नायिका का कथन है कि हाय मेरे स्तनों के केशरसे रंजित्त यह मेरे पति का वक्षःस्थल बाणों द्वारा विदीर्ण हुआ पड़ा है । यहां संग्राम में मृत पतिको देखकर नायिका रुदन करती है अतः करुणरस है । पति के वक्षःस्थल में अपने आलिङ्गन के कारण लगे हुए केसर को देखकर सम्भोगशृङ्गार का स्मरण करती है । अतः विप्रलम्भकी ध्वनि है । यह ध्वनि करुणकी परिपोषक होने से अप्रधान ( अङ्ग ) है इसलिये अपराङ्गगुणीभूत व्यङ्ग्य है । अधिक उदाहरण १८६-१८८ पृष्ठों में देखिये ॥ ४ ॥

वाच्यसिद्ध्यङ्ग का निरूपण यह है—व्यङ्ग्य के द्वारा वाच्य की सिद्धि होने पर वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्य होता है । 'संश्रित्य तरणिं' इस उदाहरण में व्यङ्ग्य द्वारा वाच्य सिद्धि होती है । धीर मनुष्य तरणि ( सूर्यरूपी नौका ) के आश्रय से व्याधिरूपी समुद्र को तैर जाते हैं । पुराण में लिखा है कि सूर्य की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्फुटं स्तनयोरत्र कोकसादृश्यवन्मतम् ।
कुङ्कुमाक्तं स्तनद्वन्द्वं मानसं मम गाहते ॥ ६ ॥
संदिग्धं यदि संदेहो दैर्घ्याद्युत्पलयोरिव ।

भावः । सूर्यस्तुत्या हि व्याधिनाशो जायते । 'आरोग्यं भास्करादिच्छेत्' इति पुराणवचनात् । अत्र तरणिशब्दः नौकासूर्ययोर्वाचकोऽपि प्रकरणेन सूर्यरूपार्थे नियमितः तेन नौकारूपार्थो व्यङ्ग्यः । अयं नौकारूपव्यङ्ग्योऽर्थो वाच्यस्य व्याधिवारिधिरूपार्थस्योपपादकः । व्याधिवारिधिरूपकस्य तरित्वेनोपपत्तेः । वारिधिर्हि नावा तीर्यत इति वस्तुस्थितेश्च । तेनात्र नौकारूपो व्यङ्ग्यार्थो वाच्यसिद्ध्यङ्गम् ॥ ५ ॥

अस्फुटव्यङ्ग्यं ब्रूते—अस्फुटमिति । सहृदयैरपि विलम्बवेद्यत्वमस्फुटत्वम् । अत्र कुङ्कुमाक्तमिति वक्ष्यमाणोदाहरणे स्तनयोः कोकसादृश्यवच्चक्रवाकद्वन्द्वसादृश्यव्यङ्ग्यवदस्फुटं गुणीभूतव्यङ्ग्यमत मिष्टम् । यथा स्तनयोः कोकसादृश्यव्यङ्ग्यमस्फुटं तथैवास्फुटं गुणीभूतव्यङ्ग्यं भवतीति भावः । उदाहरति—कुङ्कुमेति । कस्यचिन्नायकस्योक्तिरियम् । कुङ्कुमाक्तं केशररक्तं स्तनद्वन्द्वं कामिनीकुचकलशयुग्मं मम मे मानसं चित्तं गाहते प्रविशति । मनोहरतीति भावः । अत्र कुङ्कुमाक्तत्वेन स्तनद्वन्द्वयोः कोकसादृश्यं व्यङ्ग्यं तच्च विलम्बवेद्यमित्यस्फुटं गुणीभूतव्यङ्ग्यम् ॥ ६ ॥

सन्दिग्धप्राधान्यं व्याचष्टे—सन्दिग्धमिति । यदि चेत् । दैर्घ्यं विशालता, उत्पलं कमलसाम्यं चेति तयोरिव वक्ष्यमाणोदाहरणे वाच्यव्यङ्ग्ययोरिवेति भावः । यदि वाच्यव्यङ्ग्ययोः प्राधान्ये सन्देहः संशयस्तदा संदेहस्य प्राधान्यात्सन्दिग्धप्राधान्यं

---

भक्ति से मनुष्य नीरोग रहता है । यहां तरणि शब्द सूर्य व नौका इन दोनों अर्थों का वाचक है तो भी वह प्रकरण से सूर्य के अर्थ में नियन्त्रित हो जाता है अतः नौकारूपी अर्थ व्यङ्ग्य है । यह व्यङ्ग्य व्याधि में वारिधि के आरोप की सिद्धि का उपपादक होता है अतः वाच्यसिद्ध्यङ्ग है । क्योंकि वारिधि का तरण नौका ( जहाज ) बिना हो नहीं सकता, यह प्रसिद्ध विषय है ॥ ५ ॥

अस्फुटव्यङ्ग्य यह है—काव्यमर्मज्ञ मनुष्यों को भी विलम्ब से व्यङ्ग्य की प्रतीति हो तो अस्फुटव्यङ्ग्य होता है । 'कुङ्कुमाक्तं स्तनद्वन्द्वम्' यह इसका उदाहरण है । कुङ्कुम ( केसर ) से रञ्जित कामिनी के दोनों स्तन मुझ को याद आते हैं । यहां कुङ्कुमाक्त पद से स्तनों में चक्रवाकयुग्म के सादृश्य की प्रतीति होती है । यह प्रतीति काव्यमार्मिकों को भी बहुत विलम्ब से होती है अतः अस्फुटव्यङ्ग्य है ॥ ६ ॥

संदिग्धप्राधान्य का स्वरूप यह है—वाच्य और व्यङ्ग्य की प्रधानता में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संप्राप्ते नयने तस्याः श्रवणोत्तंसभूमिकाम् ॥ ७ ॥
तुल्यप्राधान्यमिन्दुत्वमिव वाच्येन साम्यभृत् ।
कान्ते त्वदाननरुचा म्लानिमेति सरोरुहम् ॥ ८ ॥
असुन्दरं यदि व्यङ्ग्यं स्याद्वाच्यादमनोहरम् ।

गुणीभूतव्यङ्ग्यं भवति। तस्याः कान्तायां नयने नेत्रे श्रवणयोः कर्णयोरुत्तंसः कर्णभूषणं तस्य भूमिरेव भूमिका स्थानं तां संप्राप्ते याते तस्या नेत्रे कर्णान्तविश्रान्ते इति भावः। अत्र कर्णान्तदीर्घे नेत्रे इति वाच्योऽर्थः। कर्णावतंसीभूतकमलसदृशे नेत्रे इति च व्यङ्ग्योऽर्थः। अत्रानयोर्नेत्रदैर्घ्योत्पलसादृश्ययोर्वाच्यव्यङ्ग्ययोर्मध्ये कस्य प्राधान्यमिति सन्देहः। सन्देहस्य प्राधान्यादत्र सन्देहप्राधान्याख्यं गुणीभूतव्यङ्ग्यम् ॥ ७ ॥

तुल्यप्राधान्यं निरूपयति—तुल्येति। इन्दुत्वमिव वक्ष्यमाणोदाहरणे चन्द्रत्वरूपव्यङ्ग्यमिव वाच्येनार्थेन साम्यं तुल्यतां बिभर्तीति साम्यभृत् सदृशम्। तुल्यं समानं प्राधान्यं यस्मिंस्तत्तुल्यप्राधान्यम्। वाच्यव्यङ्ग्ययोर्द्वयोश्चमत्कारित्वात्तुल्यप्रधानता। उदाहरति—कान्त इति। कान्ते सुन्दरि! तवाननं त्वदाननं तव मुखं तस्य रुचा कान्त्या सरोरुहं कमलं म्लानिं मालिन्यमेति प्राप्नोति। पराभवमेतीति भावः। अत्र मुखे चन्द्रसाम्यं व्यङ्ग्यम्। चन्द्रेऽपि कमलपराभवसामर्थ्यदर्शनात् तेनेन्दुत्वरूपव्यङ्ग्यस्य पङ्कजपराभवरूपवाच्यस्य च चमत्कारित्वाद्द्वयोर्वाच्यव्यङ्ग्ययोः सदृशी प्रधानता न तु तरतमभाव इति तुल्यप्राधान्यं गुणीभूतव्यङ्ग्यम् ॥ ८ ॥

असुन्दरं लक्षयति—असुन्दरमिति। यदि व्यङ्ग्यं वाच्यादभिधेयार्थादमनोहरम्

---

सन्देह होने पर सन्दिग्धप्राधान्यव्यङ्ग्य होता है। 'सम्प्राप्ते नयने तस्याः' यह इसका उदाहरण है। उस कान्ता के नेत्रों ने कर्णभूषण के स्थान को प्राप्त कर लिया। यहां उसके नेत्र कानों तक लम्बे हैं यह वाच्यार्थ है। कर्णभूषणभूतकमलके सदृश उसके नेत्र हैं यह व्यङ्ग्य अर्थ है। इन दोनों ( नेत्रों की विशालता व कमलसादृश्य ) में यहां कौन-सा अर्थ प्रधान है यह सन्देह रहता है इस कारण सन्देहप्राधान्यगुणीभूतव्यङ्ग्य है ॥ ७ ॥

तुल्यप्राधान्य का निरूपण यह है—वाच्य और व्यङ्ग्य की प्रधानता समान होने पर तुल्यप्राधान्य व्यङ्ग्य होता है। 'कान्ते त्वदाननरुचा' यह इसका उदाहरण है। हे सुन्दरि! तेरे मुख की कान्ति से कमलकान्ति पराभव को प्राप्त होती है। चन्द्रमा कमल का पराजय करता है अतः मुख में चन्द्रसादृश्य की प्रतीति व्यङ्ग्य द्वारा होती है। यहां, चन्द्रसादृश्यरूपी व्यङ्ग्य और कमलपराजयरूपी वाच्य अर्थ है। इन दोनों में ही चमत्कार के कारण प्राधानता है अतः तुल्यप्राधान्य है ॥

असुन्दरव्यङ्ग्य यह है—वाच्य की अपेक्षा व्यङ्ग्य अर्थ में रमणीयता के न्यून

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सरस्यामीलदम्भोजे चक्रः कान्तां विलोकते ॥ ९ ॥
काकुस्थं प्रणतोऽम्भोधिरद्य माद्यतु रावणः।

ङ्ग्यं स्यात्तदाऽसुन्दरं गुणीभूतव्यङ्ग्यं भवति। वाच्यापेक्षया व्यङ्ग्यऽरमणीयता चेत्तदाऽसुन्दरमिति भावः। उदाहरति—सरसीति। सरसि तडागे। आमीलन्ति ईषत्संकुचन्ति, अम्भोजानि कमलानि यस्मिंस्तत्तस्मिन् सति चक्रश्चक्रवाकः। कान्तां चक्रवाकीं विलोकते पश्यति। आवां वियोक्ष्याव इति दीनदृष्ट्या विलोकयतीति भावः। अत्र वियोगश्चक्रवाकयोर्भावीति व्यङ्ग्यम्। दीननेत्रेण कान्ताया विलोकनं च वाच्यम्। अनयोर्मध्ये वाच्यमेव चमत्कारकमिति व्यङ्ग्यस्यारमणीयतयाऽसुन्दरं गुणीभूतव्यङ्ग्यम्। यथा वा—

वानीरकुञ्जोड्डीनशकुनिकोलाहलंश्रृण्वन्त्याः।गृहकर्मव्यापृताया वध्वा सीदन्ति अङ्गानि'

अत्र 'दत्तसङ्केतो नायको लतागृहं प्राप्तः, गृहकर्मव्यापृततयाहं तु तत्र न गता' इति व्यङ्ग्यस्याङ्गावसादरूपवाच्यापेक्षया न रमणीयतेति लक्षणसंगतिः ॥ ९ ॥

उदाहरणसुखेन काक्वाक्षिप्तं व्याचष्टे—काकुस्थमिति। काकुर्ध्वनेर्विकारस्तयाक्षिप्तं झटिति प्रकाशितम्। यया काक्वा विना वाक्यार्थ एव नात्मानं लभते तया प्रकाश्यमिति यावत्, काक्वा हठेनोपस्थापितमिति वा। काकुध्वनौ तु वाच्योपस्कारकत्वं नास्तीति भेदः। येन लङ्कायां गमनं दुष्करं सोऽम्भोधिः सागरः प्रणतो नम्रः। रावणो दशाननोऽद्य माद्यतु मदयुक्तो भवतु। अत्र 'अद्य समुद्रसेतुद्वारा रामे लङ्कायां

होनेपर असुन्दरव्यङ्ग्य होता है। 'सरस्यामीलदम्भोजे' श्लोक इसका उदाहरण है। तालव में कमलों के मुरझाने को देखकर चक्रवाक अपनी कान्ता को दीनदृष्टि से देखता है कि अब अपना वियोग होने वाला है। यहां चक्रवाक का वियोग होने वाला है यह व्यङ्ग्य है और दीननेत्र से चक्रवाकी की ओर देखना वाच्य अर्थ है, इन दोनों में वाच्य अर्थ ही व्यङ्ग्य की अपेक्षा सुन्दर है अतः असुन्दर-गुणीभूतव्यङ्ग्य है। 'वानीरकुञ्जोड्डीन०' यह भी असुन्दर का उदाहरण है। लतागृह के पक्षियों को उड़ते देखने से नायिका के शरीर में क्लान्ति होती है। यहां 'नायक संकेत स्थान को पहुंच गया और मैं गृहकार्य में लगी हुई हूं' इस व्यङ्ग्य की अपेक्षा वाच्य में अधिक सुन्दरता होने के कारण असुन्दरव्यङ्ग्य है ॥

उदाहरण के द्वारा काक्वाक्षिप्त का निरूपण किया जाता है—किसी प्रकार-विशेष से बोलने पर काकु होता है। इस काकु के विना जहां वाच्य अर्थ की समाप्ति न हो तो वहां काक्वाक्षिप्तव्यङ्ग्य होता है। उदाहरण देखिये—जिस समुद्र की ओट (आवरण) के कारण लंका में गमन कठिन था वही समुद्र आज रामचन्द्र की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यष्टधा गुणीभूतव्यङ्ग्यमङ्गीकृतं बुधैः ॥ १० ॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।

प्राप्ते रावणो गतमदः' इति व्यङ्ग्यं काकौ तिष्ठतीति काकुस्थं काकुनिष्ठम् । यद्वा 'काकुत्स्थम्' इति पाठः । अम्भोधिः चारसमुद्रः काकुत्स्थं रामं प्रणतो नतः । रावणोऽद्य माद्यतु । गतप्रायो मद इति व्यङ्ग्यं काकाक्षिप्तम् । अनेन व्यङ्ग्याक्षेपेण विना वाक्यार्थबोधः साकाङ्क्षस्तेनात्र काक्वाक्षिप्ताख्यं गुणीभूतव्यङ्ग्यम् । इतीत्थं बुधैर्गुणीभूतव्यङ्ग्यमष्टधाङ्गीकृतं स्वीकृतम् । यथा—अगूढम् , अपराङ्गम् , वाच्यसिद्ध्यङ्गम् , अस्फुटव्यङ्ग्यम् , सन्दिग्धप्राधान्यम् , तुल्यप्राधान्यम् , असुन्दरम् , काक्वाक्षिप्तं चेत्यष्टौ भेदाः । ध्वनिभेदवत्संकरसंसृष्टिभ्यामत्रापि बहवो भेदा भवन्ति । यदा चात्र वस्तुमात्रेणालङ्कारो व्यङ्ग्यस्तदा न गुणीभूतव्यङ्ग्यता किन्तु ध्वनितैव । वस्त्वपेक्षयालङ्कारस्य चमत्काराधायकत्वावश्यंभावात् । एवं मध्यमकाव्यभेदा निरूपिताः ॥१०॥

अथाष्टममयूखसमाप्तिं ब्रूते—महादेव इति । महादेवः सत्रेति प्रथममयूखीयः षोडशश्लोक एव पूर्ववदत्रापि समाप्तौ पठनीयः । किन्तु तस्योत्तरभागे—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते चिरं चन्द्रालोके महति वसुसंख्यः सुखयतु' ।

इति विशेषः । वसुसंख्योऽष्टसंख्य इति यावत् । वसूनामष्टविधत्वात् । ध्रुवः, धरः, सोमः, आपः, वायुः, अग्निः, प्रत्यूषः, प्रभासश्चेत्यष्टौ वसवोऽग्निपुराणे । यद्यपि

---

शरण में आगया, अब रावण भले ही गर्व करे अर्थात् उसके गर्व से अब कोई हानि नहीं । अब रामचन्द्र लङ्का में जाकर उसके गर्व का नाश कर देंगे । यहां 'अब उसका गर्व प्रायः नष्ट ही हो गया' यह व्यङ्ग्य काकुद्वारा प्रतीत होता है । इस के विना वाक्य का वाच्य अर्थ पूर्णतया प्रतीत नहीं होता अतः यहां काक्वाक्षिप्त-गुणीभूतव्यङ्ग्य है । इस प्रकार विद्वानों से अगूढ, अपराङ्ग, वाच्यसिद्ध्यङ्ग, अस्फुट, संदिग्धप्राधान्य, तुल्यप्राधान्य, असुन्दर और काक्वाक्षिप्त ये गुणीभूतव्यङ्ग्य के आठ भेद माने गये हैं । ध्वनि की तरह यहां भी संकर व संसृष्टि के कारण अनेक भेद होते हैं । किन्तु अलंकार ध्वनि के साथ संकर व संसृष्टि होनेपर गुणीभूतव्यङ्ग्य नहीं होता यह अवश्य जान लेना चाहिए । यह मध्यम काव्य के भेदों का निरूपण हुआ ॥ १० ॥

'महादेवः सत्र०' इस प्रथम मयूख के सोलहवें श्लोक के उत्तर भाग में—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति वसुसंख्यः सुखयतु' ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति वसुसंख्यः सुखयतु ॥ ११ ॥

इति चन्द्रालोकालङ्कारे गुणीभूतव्यङ्ग्यनिरूपणो नामाष्टमो मयूखः ।

## नवमो मयूखः

मुख्यार्थस्याविवक्षायां पूर्वाऽवाची च रूढितः ।

---

ऋक्संहितादौ पुराणे च वसुनामसु भेदोऽपि दृश्यते तथापि संख्या तु समानैव सर्वत्र। अन्यत्प्राग्वत् ॥ ११ ॥

इति श्रीजयपुरपुरन्दरमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन वेदान्तभूषणोपाधिविभूषितेन, भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीयप्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमितिजुषा, जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीसमाख्यायाश्चन्द्रालोकव्याख्याया अष्टममयूखे पर्यवसानम् ॥ ८ ॥

शब्दस्य तिस्रो वृत्तयस्तासु व्यञ्जनां निरूप्याधुना लक्षणां निरूपयति—मुख्यार्थेति । शब्दस्यार्थबोधने मुख्या स्वाभाविकी वृत्तिरभिधाख्यैव । एतस्याः संकेतस्येश्वरेणोद्भावितत्वात् । इयं लक्षणा तु मनुष्योद्भाविता स्वाभाविकेतरा आरोपिताऽमुख्या शब्दस्य शक्तिः । अत एव—

'शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता। अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते'॥

---

यह परिवर्तन करके अष्टम मयूखकी समाप्ति करनी चाहिए । वसुनामक देवता शास्त्र में आठ माने गये हैं अतः 'वसुसंख्य' का अर्थ आठ होता है । आठों वसुओं के नाम ये हैं—ध्रुव, धर, सोम, आप ( जल ), वायु, अग्नि, प्रत्यूष और प्रभास । अन्य अर्थ पूर्ववत् जानना चाहिए ॥ ११ ॥

कथाभट्ट श्रीनन्दकिशोरशर्मा साहित्याचार्यकी कथाभट्टीया नामक हिन्दीव्याख्या में चन्द्रालोक का अष्टम मयूख समाप्त हुआ ।

शब्द द्वारा अर्थ के बोध में तीन व्यापार ( शक्तियां ) होते हैं, उनमें व्यञ्जना का निरूपण करके अब लक्षणा का निरूपण किया जाता है । शब्द की

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यभिधावृत्तिमातृकायां भट्टमुकुलेनाभिहितम्। एवं पदपदार्थयोः सम्बन्धस्याभिधासंज्ञा वाच्यार्थसम्बन्धस्य तु लक्षणेति सारः। लक्षणाशब्दो हि लक्षणं लक्षणेति भावव्युत्पत्त्या, लक्ष्यतेऽनयेति लक्षणेति करणव्युत्पत्त्या च विगृह्यते। भावव्युत्पत्त्या लक्ष्यार्थज्ञानस्य, करणव्युत्पत्त्या च लक्ष्यार्थज्ञानजनकव्यापारस्य च लक्षणात्वं भवति। मीमांसकादिभिर्मम्मटभट्टेन च भावव्युत्पत्तिरेव स्वीकृता। शब्दार्थबोधप्रतिपादकानि त्रीणि शास्त्राणि प्रथितानि—व्याकरणं न्यायः पूर्वमीमांसा चेति। तत्र प्रथमं व्याकरणमहाभाष्ये मुख्यार्थलक्ष्यार्थसम्बन्धाः प्रतिपादिताः, यथा—

'चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद् भवति; तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्। मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय' इति 'पुंयोगादाख्यायाम्' (४।१।४८) इति सूत्रभाष्ये। न्यायदर्शने च 'सहचरण-स्थान-तादर्थ्य-वृत्त-मान धारण-सामीप्य-योग साधनाधिपत्येभ्यो ब्राह्मणमञ्च-कट-

मुख्य शक्ति अभिधा है। क्योंकि यह अभिधा शक्ति संकेतित अर्थ का ही बोध कराती है और यह संकेत ईश्वर द्वारा नियत किया गया है। लक्षणा शक्ति का निर्माण ईश्वर द्वारा नहीं हुआ यह तो अर्थानुसन्धान से जानी जाती है। बस इसीलिये यह शब्द की मुख्य वृत्ति नहीं मानी जाती। इसका तो शब्द में आरोप किया जाता है और अभिधा स्वयं शब्द में विराजमान रहती है। इसी बातको मुकुलभट्ट ने अपने ग्रन्थ 'अभिधावृत्तिमातृका' में स्पष्ट किया है। सार यह हुआ कि पद और अर्थके सम्बन्ध को अभिधाशक्ति कहते हैं और वाक्यार्थ व लक्ष्यार्थ के सम्बन्धको लक्षणा कहते हैं। 'लक्षणं लक्षणा' इस भावप्रधान-व्युत्पत्ति से 'लक्ष्यतेऽनयेति लक्षणा' इस करणप्रधानव्युत्पत्ति से लक्षणा शब्द का दो तरह से विग्रह किया जाता है। भावव्युत्पत्ति से लक्ष्यार्थ ज्ञान की और करणव्युत्पत्ति से लक्ष्यार्थज्ञानके उत्पादक व्यापारकी प्रतीति होती है। मीमांसक लोग व आलंकारिक मम्मटभट्टने भावव्युत्पत्ति ही मानी है। शब्दार्थबोधके प्रतिपादक व्याकरण, न्याय और मीमांसा ये तीन शास्त्र हैं। उनमें प्रथम वैयाकरण महाभाष्यमें मुख्यार्थ और लक्ष्यार्थ के सम्बन्ध के विषयमें वर्णन प्राप्त होता है। 'मञ्चा हसन्ति' यहां तात्स्थ्य, 'सिंहो माणवकः' यहां ताद्धर्म्य, 'गङ्गायां घोषः' यहां सामीप्य, 'यष्टीः प्रवेशय' यहां साहचर्य सम्बन्ध है। इनसे लक्ष्यार्थज्ञानकी प्रतीति होती है (४।१।४८ सूत्रका महाभाष्य)। गौतमप्रणीत न्याय-दर्शन के द्वितीय अध्याय में द्वितीय आह्निक के 'सहचरण-स्थान॰' इस चौंस-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

राज-सक्तु-चन्दन-गङ्गा-शकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः' ( २ अध्याये २ आह्निके ६४ सूत्रम् ) इति लक्षणानिर्देशः । एवं वाक्यपदीये द्वितीयकाण्डे—

'यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते ।
तथा स एव गोशब्दो वाहीकेऽपि व्यवस्थितः ॥ २५४ ॥
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपचर्यते' ॥ २५५ ॥
'गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः' ॥ २५७ ॥
'जातेर्वा लक्षणा यस्मात् सर्वथा सप्तपर्णवत्' ॥ ३११ ॥
'काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः ।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति' ॥ ३१४ ॥

इत्यादिलक्षणाविचारो दृश्यते । ततो मीमांसककुमारिलभट्टग्रन्थे—

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' ॥

( तन्त्रवार्तिके १ अ० ४ पा० २२ सूत्रम् ) इति लक्षणागौणीवृत्त्योर्लक्षणमुपलभ्यते ।

'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः' ॥

( तन्त्रवार्तिके ३ अ० १ पा० ८ सू० )

इति च निरूढलक्षणाभेदविचारो दृश्यते । एवं भट्टमुकुलेनापि लक्षणालक्षणभेदा· दिनिरूपकोऽभिधावृत्तिमातृकाख्यो ग्रन्थो निरमायि । ततश्च काव्यप्रकाशे शब्दव्या- पारविचारे च भट्टमम्मटेन लक्षणाया लक्षणं भेदाश्च परिष्कृत्य प्रदर्शिताः । एवं च तत्त्वचिन्तामणि-शब्दशक्तिप्रकाशिका·साहित्यदर्पण·न्यायसिद्धान्तमुक्तावली-वेदान्त·

---

ठवें सूत्रमें लक्षणका निर्देश है । इसी प्रकार वाक्यपदीय के द्वितीय काण्ड में २५४, २५५, २५७, ३११, ३१४ श्लोकों में प्रकरणागत लक्षणा की चर्चा की गई है । इसके अनन्तर कुमारिलभट्टने तन्त्रवार्तिक (१ अ० ४ पा० २२ सू० ) में लक्षणा वा गौणीवृत्ति का पृथक् २ लक्षण कहा है । उसी ग्रन्थ के तृतीय अध्याय के प्रथमपाद के आठवें सूत्र की व्याख्या में निरूढा लक्षणा के भेद बत- लाये हैं । ततः मुकुलभट्टने अभिधावृत्तिमातृका ग्रन्थ में लक्षणा के लक्षण व भेद-प्रभेद वतलाये हैं । बाद में काव्यप्रकाश व शब्द व्यापार विचार में विस्तार- पूर्वक लक्षणा का निरूपण किया है । इस प्रकार गंगेशोपाध्याय की तत्वचिन्ता- मणि में, जगदीश तर्कालङ्कार की शब्दशक्तिप्रकाशिका में, साहित्यदर्पण में,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**प्रयोजनाच्च संबद्धं वदन्ती लक्षणा मता ॥ १ ॥**

---

परिभाषा-रसगङ्गाधर-वृत्तिवार्तिक-वैयाकरणमञ्जूषा-त्रिवेणिकाद्यनेकेष्ववर्वाचीनग्रन्थेषु लक्षणाविचारपरम्परा पल्लविता प्रावर्तत।

भक्तिः, उपचारः, अमुख्या वृत्तिः—इत्यादीनि लक्षणाया एव नामान्तराणि। काव्यप्रकाशकारादयस्तूपचारशब्दं गौणीवाचकमेव मन्यन्ते। इयं लक्षणा वक्तुस्तात्पर्यानवबोधरूपे सति मुख्यार्थबाध एव प्रवर्तते, मुख्यार्थसम्बन्धिनं चार्थान्तरं रूढेः प्रयोजनाद्वा हेतोर्बोधयतीति ग्रन्थकारेण लक्षणानिरूपणे प्रदर्शितम्। यथाह तल्लक्षणं—मुख्येति। मुख्यार्थस्याभिधेयार्थस्य वक्तुमिच्छा विवक्षा, न विवक्षा, अविवक्षा तस्याम्। तात्पर्यानुपपत्ताविति यावत्। प्रतिपादनानिच्छायामिति भावः। सम्बद्धं मुख्यार्थसम्बद्धमर्थान्तरं वदन्ती प्रतिपादयन्ती लक्षणा वृत्तिर्मता। सा च रूढितो लोकप्रसिद्धेः पूर्वा निरूढलक्षणा, प्रयोजनाद्वक्तुस्तात्पर्याच्चावार्चीना प्रयोजनलक्षणेति द्विधा मता। इयं प्रयोजनवती लक्षणैव स्वारसिकलक्षणा फललक्षणा चेति व्यवह्रियते। अयमाशयः—वक्तुस्तात्पर्यानुपपत्तौ मुख्यार्थसम्बद्धो रूढिहेतुकः प्रयोजनहेतुको वा मुख्यार्थातिरिक्तोऽर्थो यया लक्ष्यते सा शब्दे आरोपिता, अर्थे च स्वाभाविकी शक्तिर्व्यापाररूपा लक्षणा नाम। ततश्च मुख्यार्थबाधमुख्यार्थसम्बन्धरूढिप्रयोजना-

---

न्यायसिद्धान्तमुक्तावली में, धर्मराजाध्वरीन्द्र की वेदान्तपरिभाषा में, रसगंगाधर में, अप्पय्यदीक्षित के वृत्तिवार्तिक में, नागेशकी वैयाकरणमञ्जूषा में और आशाधर की त्रिवेणिका आदि ग्रन्थों में लक्षणा का विचार विस्तार से प्राप्त है। भक्ति, उपचार व अमुख्या वृत्ति आदि शब्द लक्षणा के ही नामान्तर हैं। काव्यप्रकाश आदि में उपचार शब्द को गौणी लक्षणा का ही बोधक बतलाया है। संकेतित शब्दों से वक्ता का तात्पर्य स्फुट न हो तो लक्षणा की आवश्यकता होती है। ततः उस संकेतित अर्थ से सम्बन्ध रखनेवाले अन्य अर्थ की प्रतीति, रूढि वा प्रयोजनहेतु द्वारा लक्षणा से होती है। जैसा कि ग्रन्थकारने लक्षणा के निरूपण में लिखा है। अब लक्षणा का निरूपण देखिए—मुख्य अर्थ से तात्पर्य की प्रतीति न होने पर मुख्य अर्थ से सम्बन्ध रखनेवाले अन्य अर्थ का बोध करानेवाली लक्षणा वृत्ति होती है। लक्षणा में, जहां लोकप्रसिद्धि के कारण बोध हो, वहां निरूढा लक्षणा होती है। और किसी प्रयोजन से लक्ष्यार्थ ज्ञान होने पर प्रयोजनवती लक्षणा होती। इस प्रयोजनवती लक्षणा को ही स्वारसिकलक्षणा व फललक्षणा कहते हैं। सारांश यह हुआ कि वक्ताके तात्पर्य की प्रतीति न होने पर मुख्यार्थ से सम्बन्ध, रूढि वा. प्रयोजन द्वारा, जिस वृत्ति से अन्य ( लक्ष्य )

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्यतरहेतुकत्वे सति मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नार्थबोधजनको व्यापारो लक्षणेति लक्षणं सम्पन्नम्। 'कलिङ्गः साहसिकः' इति निरूढलक्षणाया उदाहरणम्। अत्र कलिङ्गशब्दस्य देशविशेषरूपो मुख्यार्थः। स चात्राविवक्षितः। साहसरूपचेतनधर्मवत्त्वप्रतिपादनात्। तेन मुख्यार्थसम्बद्धः कलिङ्गदेशस्थः पुरुषो लक्ष्यते। मुख्यार्थलक्ष्यार्थयोः कलिङ्गदेशपुरुषयोश्च संयोगसम्बन्धः। एवं कलिङ्गदेशस्थः पुरुषः साहसिक इति बोधः। अत्र देशविशेषवाचिना कलिङ्गशब्देन पुरुषप्रतीतिश्च रूढिनिमित्तात्। कलिङ्गादिशब्दानां पुरुषाद्यर्थेषु प्रसिद्धत्वात्। 'गङ्गायां घोषः' इति प्रयोजनवत्या लक्षणाया उदाहरणम्। अत्र गङ्गाशब्दस्य प्रवाहे, सप्तम्या अधिकरणे, घोषस्य चाभीरपल्ल्यां संकेतः। तेनाभिधाया प्रवाहाधिकरणको घोष इत्यर्थो जायते। एष च मुख्यार्थोऽत्रानुपपन्नः। जलप्रवाहे घोषसम्भवात्। तेन गङ्गातीरे घोष इत्यर्थो लक्ष्यते। मुख्यार्थलक्ष्यार्थयोर्गङ्गातीरयोः सामीप्यादिश्च सम्बन्धः। घोषे च शैत्यपावनत्वद्योतनायैव मुख्यशब्दं विहाय लाक्षणिकशब्दः प्रयुक्त इति शैत्यपावनत्वा-

---

अर्थ की प्रतीति होती है वह लक्षणा वृत्ति है। शब्द में यह आरोपित है। अर्थ में इसका स्वाभाविक निवास है। 'कलिंगः साहसिकः' कलिंग के मनुष्य साहसी हैं। यहां निरूढा लक्षणा है। कलिंग शब्द का कलिंग देश मुख्य अर्थ है। इस मुख्य अर्थ कलिंग देश में साहस हो नहीं सकता अतः मुख्यार्थ कलिंग-देश से सम्बन्ध रखने वाले कलिंग निवासी मनुष्य की प्रतीति होती है अर्थात् कलिंग देश के मनुष्य साहसी हैं, इस लक्ष्यार्थ का बोध लोकप्रसिद्धि ( रूढि ) के कारण लक्षणा से होता है। देशवाचक शब्दों से देशस्थित पुरुषों की प्रतीति संसार में होती है। अत एव समाचार पत्रों में लिखा जाता है कि जयपुर ने विद्या में बहुत उन्नति की। 'गङ्गायां घोषः' गङ्गा के प्रवाह में ग्राम है, यह प्रयोजनवती लक्षणा का उदाहरण है। गंगा का प्रवाह में और घोष का ग्वालों के निवास स्थान में संकेत है। अतः अभिधा से गंगा के जल में ग्वालों का निवासस्थान है, इस मुख्यार्थ का बोध हुआ। किन्तु जल में किसी का निवासस्थान हो नहीं सकता। अतः वक्ता का तात्पर्य स्पष्ट रूप से नहीं प्रतीत हुआ इस कारण यहां लक्षणा की आवश्यकता हुई। ततः लक्षणा द्वारा गंगा के तीर पर घोष है, इस लक्ष्यार्थ का ज्ञान हुआ। गंगारूप मुख्यार्थ और तीर रूप लक्ष्यार्थ में सामीप्यादि सम्बन्ध है। इस घोष में शीतलता वा पवित्रता अधिक है इस बात का द्योतन करने के लिये ही मुख्य शब्द को छोड़ कर लाक्षणिक शब्द का प्रयोग किया गया है। गंगापद से तीररूपी अर्थ की प्रतीति लक्षणा से और शीतलता व

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तिशयः प्रयोजनम् । तच्च व्यङ्गयमित्युक्तं २३३ पृष्ठे । ननु रूढिः प्रयोजनं चेति लक्षणायां द्वे निमित्ते । तत्र रूढिः प्रसिद्धिरूपा । प्रसिद्धिश्च भूरिप्रयोगप्रवाहरूपसंकेतितार्थाभिन्ना । रूढ्यर्थस्य संकेतितार्थतयाऽभिधयैव बोधे किं रूढेर्लक्षणाहेतुत्वस्वीकारफलमिति चेदुच्यते । कलिङ्गादिशब्दो देशवाचकः पुरुषवाचकश्चेत्यनेकार्थकः । अनेकार्थकशब्दानामर्थबोधेऽभिधाशक्तिः प्रकरणादिपर्यालोचनमपेक्षते । लक्षणायाश्च स्वीकारस्तात्पर्यानुपपत्तितयाऽनिवार्य एव । एवं चावश्यके लक्षणाभ्युपगमे येषामनेकार्थकशब्दानां यदि रूढिनिमित्ततया लक्षणयैवार्थबोधस्तदा किं फलमभिधाशक्त्या तेषां । प्रकरणादिपर्यालोचनसापेक्षेऽर्थबोधे । तेन रूढिश्च प्रयोजनं चेति निमित्तद्वयं लक्षणायाः । अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्चेति द्वौ लक्षणावकाशहेतू प्राचीना मन्यन्ते । तन्न । 'काकेभ्यो रचयतामन्नम्' इत्यत्रान्वयानुपपत्तेरभावात् । तात्पर्यानुपपत्तेरेव च कार्यसिद्धेः । 'गंगायां घोषः' इत्यस्य तीरे घोष इति बोधः । एतस्य चाप-

---

पवित्रता की प्रतीति व्यञ्जना द्वारा होती है । यह व्यञ्जनानिरूपण ( २३३ पृ० में ) लिखा जा चुका है । अब यहां यह संदेह होता है कि रूढि और प्रयोजन ये दो लक्षणा के निमित्त होते हैं । इन में रूढि अर्थ संकेतित अर्थ का ही रूपान्तर है । अतः उसकी प्रतीति अभिधा द्वारा ही हो सकती है तो फिर उस रूढि को लक्षणा के अन्तर्गत क्यों माना जाता है ? इसका उत्तर यह है कि यदि 'कलिंगः साहसिकः' इस रूढि के उदाहरण में अभिधा से ही बोध माना जावै तो कलिङ्ग शब्द को देशवाचक और पुरुषवाचक होने से अनेकार्थक मानना चाहिये । अनेक अर्थवाले शब्दों से अर्थबोध में तो प्रकरण आदि के विचार करने की आवश्यकता रहती है और लक्षणा का स्वीकार भी अनिवार्य है । ऐसी दशा में जब लक्षणा से ही रूढिद्वारा अर्थबोध हो जाता है तो फिर क्यों प्रकरणादि के विचार से अर्थबोध में विलम्ब किया जावै ? अतः रूढि को भी लक्षणा में हेतु माना है । प्राचीन आचार्य अन्वयानुपपत्ति (अन्वय का न होना) व तात्पर्यानुपपत्ति (आशय का ज्ञान न होना ) इन दोनों को लाक्षणिक प्रयोग में निमित्त बतलाते हैं । किन्तु यह कथन उचित नहीं है । क्योंकि 'काक रोटी न खा जावै' इस वाक्य में अन्वयानुपपत्ति नहीं है । पदों का अन्वय अच्छी तरह हो जाता है । तथापि वक्ता का तात्पर्य नहीं जाना जाता अतः यहाँ लक्षणा तात्पर्यानुपपत्ति से ही की जाती है और बोध होता है कि सब जानवरों से हम रोटी को बचाना चाहते हैं । अतः तात्पर्यानुपपत्ति ही लक्षणा में बीज है । 'गङ्गायां घोषः' इस वाक्य से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**लक्षणीयस्वशब्दस्य मीलनामीलनाद् द्विधा ।**

लापोऽनिवार्यः । सोऽयं बोधो लक्षणयैव । प्रवाहे घोष इति बोधानन्तरमभिधाया विरतत्वात् । विरतायाश्च पुनरुत्थानाभावात् । व्यञ्जनायाश्च शैत्यपावनत्वातिशय-व्यङ्ग्यबोधसामर्थ्यात् । तात्पर्याख्यायाश्च वृत्तेः पदार्थसंसर्गमात्रबोधकत्वात् । तेन लक्षणाभ्युपगम आवश्यक एवेत्यन्यत्र विस्तरः ॥ १ ॥

लक्षणाभेदानाह—लक्षणीयेति । लक्षणीयं लक्ष्यं यत्स्वं वस्तु तस्य शब्दस्य तद्वाचकपदस्य मीलनमकीर्तनम् । अनुपादानमिति यावत् । अमीलनं कीर्तनम् । उपादानमिति यावत् । तयोर्मीलनामीलनयोः समाहार इति मीलनामीलनं तस्मात् पूर्वोक्ता निरूढा प्रयोजनवती च लक्षणा द्विधा भवति । लक्ष्यवाचकपदोपादाने प्रथमा, लक्ष्यवाचकपदानुपादाने च द्वितीयेति भावः । एवं रूढिप्रयोजनाभ्यां लक्षणायां चातुर्विध्यं सम्पन्नम् । 'शुक्लो घटः' इत्यत्र रूढौ 'अग्निर्माणवकः' इत्यत्र च प्रयोजने लक्ष्यवाचकपदोपादानम् । 'श्वेतो धावति' इत्यत्र रूढौ 'कुन्ताः प्रवि-

---

तीर में घोष है इस बोधको कोई छिपा नहीं सकता और यह बोध केवल लक्षणा से ही होता है । क्योंकि अभिधाशक्ति 'गंगाप्रवाह में घोष है' इस संकेतित अर्थ का बोध कराती है यह वृत्ति फिर तीररूपी अर्थ का बोध नहीं कराती । क्योंकि एक शक्ति दो बार एक ही शब्दसे बोध नहीं करा सकती । व्यञ्जना-वृत्ति शीततादिक व्यङ्ग्य अर्थ के बोधमें ही सामर्थ्य रखती है और तात्पर्याख्या वृत्ति पद व अर्थ के सम्बन्धमात्र के बोध से ही शान्त हो जाती है । अतः लक्ष-णावृत्ति अवश्य माननी चाहिए ॥ १ ॥

अब लक्षणा के भेद बतलाये जाते हैं—लक्ष्यार्थबोधक शब्द की सत्ता में लक्ष्यवाचकपदामीलना और उसकी असत्तामें लक्ष्यवाचकपदमीलना ये लक्षणा के दो भेद होते हैं । पहिले लक्षणा निरूढा और प्रयोजनवती ये दो भेद बत-लाये थे । ये दोनों भेद ( निरूढा व प्रयोजनवती ) दो-दो प्रकार के होते हैं । अतः लक्षणा के चार भेद हुए । भावार्थ यह हुआ कि लक्ष्य व लक्षक इन दोनों पदों के उपादान व अनुपादान के कारण चार भेद होते हैं । निरूढा लक्षणा में लक्ष्यार्थ के बोधक शब्दका उपादान 'शुक्लो घटः' इस वाक्य में है और अनु-पादान 'श्वेतो धावति' इस वाक्य में है । प्रयोजनवती लक्षणा में लक्षणीय शब्द का उपादान 'अग्निर्माणवकः' इस वाक्य में और अनुपादान 'कुन्ताः प्रविशन्ति' इस वाक्य में है । दूसरे ग्रन्थों में लक्ष्यवाचकपदामीलना को सारोपा और दूसरी लक्षणा को साध्यवसाना लक्षणा कहते हैं । इन चारों भेदों में से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्षणा सा त्रिधा सिद्धसाध्यसाध्याङ्गभेदतः ॥ २ ॥

शन्ति' इत्यत्र च प्रयोजने लक्ष्यवाचकपदानुपादानम् । ग्रन्थान्तरे तु पदोपादाने सारोपा पदानुपादाने च साध्यावसानेति नाम्ना व्यवहारः । सिद्धोद्देश्यवाचकपद-निष्ठा, साध्या विधेयवाचकपदनिष्ठा, साध्याङ्गिनी च विधेयान्वयिवाचकपदनिष्ठा चेति तासां भेदात् चतुर्विधाप्येषा लक्षणा त्रिधा भवति। सर्वसंकलने द्वादशभेदयुक्ता जायत इति भावः। यथा कश्चिन्मूर्खमुद्दिश्य 'भो पाषाण ! उक्तं गृहाण' इति कश्चिदुक्ति। अत्रोद्देश्यवाचिन्येव पाषाणशब्दे मूर्खत्वलक्षणा न तु विधेयवाचिपदे। तेनेयं सिद्धलक्षणा। यत्र विधेयोऽर्थो लक्ष्यते सा साध्यलक्षणा । यथा 'कामिनीवचोऽमृतम्'इति । अत्र कामिनीवचस्यमृतं विधेयम् । विधेयस्यामृतपदस्यानन्दजनके लक्षणेति साध्यलक्षणा । 'गङ्गायां घोषः' इति साध्याङ्गलक्षणोदाहरणम् । अत्र घोषो विधेयपदम् । विधेयस्य घोषस्यान्वयवाचिनि गंगापदे तीरत्वलक्षणासत्त्वात् । पदोपादानानुपादानादिरूढिप्रयोजनादिभेदानामुदाहरणानि स्वयमूहनीयानि । ग्रन्थ-विस्तरभिया नेह तानि प्रतायन्ते । इत्थं सर्वसंकलने निरूढलक्षणायाः षड् भेदाः सम्पन्नाः लक्ष्यवाचकपदामीलने सिद्धा, साध्या, साध्याङ्गिनी चेति त्रयः । लक्ष्यवाचकपदामीलने सिद्धा, साध्या साध्याङ्गिनीति त्रयः । द्वयोरेतयोः संकलनेन

---

प्रत्येकके तीन-तीन भेद और होते हैं। उद्देश्यवाचकपदमें लक्षणा हो तो सिद्धा लक्षणा, विधेयवाचकपद में लक्षणा हो तो साध्या लक्षणा और विधेय के सम्बन्ध-बोधक पद में लक्षणा हो तो साध्याङ्गलक्षणा कही जाती है। इस प्रकार चारों भेदों में से प्रत्येक के तीन तीन भेद होने से लक्षणा के द्वादश भेद हुए। सिद्धलक्षणा का उदाहरण 'भो पाषाण ! उक्तं गृहाण' यह वाक्य है। किसी मूर्खको कहा है कि रे पत्थर ! तू मेरे कथन को समझ। यहां उद्देश्यवाचक पाषाणशब्द से मूर्ख का बोध होता है अतः सिद्धा लक्षणा है। जहां विधेय अर्थ की लक्षणा हो, वहां साध्या लक्षणा है। 'कामिनीवचोऽमृतम्' कामिनीका वाक्य अमृत है। यहां अमृत पद विधेय हैं। इस विधेयपद से कामिनी के वाक्य में आनन्द-जनकता की प्रतीति होती है अतः साध्या लक्षणा है। 'गङ्गायां घोषः' यह साध्याङ्गलक्षणा का उदाहरण है। क्योंकि इस वाक्य में घोष विधेय है। इस घोष से सम्बन्ध रखने वाले गंगापद में लक्षणा की जाती है और तीररूपी अर्थ का बोध होता है। अतः यहां साध्याङ्ग लक्षणा है। इसी प्रकार उक्त द्वादश भेदों के भिन्न भिन्न उदाहरण समझने चाहिये। निरूढा लक्ष्यवाचकपदामीलन में सिद्धा, साध्या, साध्याङ्गिनी ये तीन भेद हैं और ये ही तीनों भेद लक्ष्यवाचक-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्फुटास्फुटप्रभेदेन प्रयोजनमपि द्विधा।
विदुः स्फुटं तटस्थत्वादर्थगत्वाद्द्विधा बुधाः ॥ ३ ॥

षड्भेदाः प्रयोजनवत्या भेदास्तु सङ्कलयिष्यन्ते ॥ २ ॥

अथ प्रयोजनभेदेन लक्षणाभेदान् ब्रूते—स्फुटेति। प्रयोजनमपि लक्षणाप्रयोजनमपि स्फुटमगूढमस्फुटं गूढं चेति स्फुटास्फुटे तयोर्भेदस्तेन द्विधा। प्रयोजनमिदं व्यञ्जनया प्रतीयत इति व्यङ्ग्यपदेनोच्यते। तेन लक्षणायाः स्फुटव्यङ्ग्या, अस्फुटव्यङ्ग्या चेति द्वे नाम्नी स्तः। अगूढव्यङ्ग्या गूढव्यङ्ग्येति ग्रन्थान्तरे प्रसिद्धिः। स्फुटत्वं सर्वजनवेद्यत्वम्। अस्फुटत्वं च वाक्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यत्वम्। 'अग्निर्माणवकः' इत्यत्राग्निसदृशतेजोऽतिशयप्रतिपादनं प्रयोजनम्। तच्च स्फुटम्। पटैकदेशे दग्धे 'पटोऽयं दग्धः' इति वाक्यं प्रयुज्यते तत्रावशिष्टपटे कर्मानर्हताप्रतिपादनं प्रयोजनं तच्चात्रास्फुटम्। बुधा विद्वांसः। तटस्थत्वादर्थगत्वात्स्फुटमपि प्रयोजनं द्विधा विदुः। लक्ष्यलक्षकेतरवृत्तितया प्रतीयमानत्वं प्रयोजनस्य तटस्थत्वम्। इदं च समासोक्तावुपयुज्यते, तथा हि—'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति

पदामीलन में होते हैं। इस प्रकार निरूढा लक्षणा के छः भेद होते हैं। प्रयोजनवती के भेद और भी होते हैं अतः इसके भेदों की गणना आगे की जावेगी ॥ २ ॥

अब प्रयोजन के भेद से लक्षण के भेद किये जाते है—कहीं लक्षणा का प्रयोजन स्फुट व कहीं अस्फुट रहता है अतः लक्षणा के स्फुटप्रयोजना और अस्फुट प्रयोजना ये दो भेद होते हैं। लक्षणा के इस प्रयोजन की प्रतीति व्यञ्जना द्वारा होती है अतः इस प्रयोजन को व्यङ्ग्य कहते हैं। इसी कारण लक्षणा को स्फुटव्यङ्ग्या अस्फुटव्यङ्ग्या भी कहते हैं। दूसरे ग्रन्थों में अगूढव्यङ्ग्या, गूढव्यङ्ग्या ये नाम प्रसिद्ध हैं। विना अर्थ की भावना के ही सब मनुष्यों को प्रतीत होनेवाले प्रयोजन को स्फुट प्रयोजन कहते हैं। 'अग्निर्माणवकः' यह बालक अग्नि है इस वाक्य में अत्यन्त तेजस्वीपन प्रयोजन है और वह स्फुट है। अत्यन्त विवेकी पुरुषों को ही जहां प्रयोजन का बोध हो वह अस्फुट प्रयोजन है। 'पटोऽयं दग्धः' इसका उदाहरण है। वस्त्र का एक प्रान्त जल जाने पर 'यह वस्त्र जल गया' यह कहा गया है। 'अधिक वस्त्र जल गया' इस लक्ष्यार्थ की प्रतीति होती हैं। यह वस्त्र पहिनने के योग्य नहीं है इस प्रयोजन की प्रतीति सब को नहीं होती, केवल तत्त्वज्ञ मनुष्यों को ही होती है अतः यह प्रयोजन अस्फुट है। इनमें स्फुट प्रयोजन के दो भेद हैं-एक तटस्थगत और दूसरा अर्थगत। लक्ष्यार्थ और लक्षकपदार्थ से भिन्न स्थान में जो प्रयोजन रहता है, वह तटस्थ-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्फुटं चार्थनिष्ठत्वात्तटस्थत्वादपि द्विधा ।

चन्द्रमाः' ( १४० पृ० ) इत्यादौ परनायिकासक्तनायकवृत्तान्तप्रतीतिः प्रयोजनम् । एतदर्थमेव 'मुखं चुम्बति' इति लाक्षणिकपदप्रयोगः । अस्य 'अग्रं स्पृशति' इति लक्ष्यार्थः । पूर्वोक्तं प्रयोजनं च स्फुटं तच्च लक्ष्ये पूर्वदिक्स्पर्शरूपेऽर्थे, लक्षकपदार्थे मुखचुम्बनादिरूपे च न वर्तत इति तदितरनायकवृत्तित्वात्तटस्थम् । 'अग्रं स्पृशति' इति प्रयोगे तु प्रयोजनाप्रतीत्या न समासोक्तिः । एवं च समासोक्तौ प्रकृतार्थप्रतीतिः शक्त्याभिधया, सति च मुखचुम्बनरूपमुख्यार्थबाधे लक्षणा नायिकानायकवृत्तान्तप्रतीतिश्च प्रयोजनम् । तच्च व्यञ्जनया प्रतीयते । इदं च व्यङ्ग्यं वाच्यार्थपोषकमिति गुणीभूतव्यङ्ग्यतया समासोक्तिस्वीकारः । लक्ष्यलक्षकपदार्थवृत्तित्वम् । उदाहरणमग्रे वक्ष्यते । एवं च तटस्थप्रयोजना, अर्थगतप्रयोजनेति स्फुटव्यङ्ग्याया द्वौ भेदौ ॥ ३ ॥

अस्फुटव्यङ्ग्याया भेदद्वयमाह—अस्फुटमिति । अस्फुटमपि प्रयोजनं तटस्थत्वादर्थनिष्ठत्वाच्च द्विधा भवति । तटस्थप्रयोजना, अर्थगतप्रयोजनेत्यस्फुटव्यङ्ग्यापि

---

गत प्रयोजन होता है । यह समासोक्ति में उपयोगी अधिक होता है । जैसे 'अयमैन्द्रीमुखम' इस समासोक्ति के ( १४० पृ० ) उदाहरण में किसी नायक व नायिका के वृत्तान्त की प्रतीति प्रयोजन है और इसी के बोध के लिये 'मुखं चुम्बति' यह लाक्षणिक प्रयोग किया गया है, पूर्वदिशा के अग्रभाग का स्पर्श करता है, यह उक्त वाक्य का लक्ष्यार्थ है । यहां 'पूर्व दिशा का स्पर्श' यह लक्ष्यार्थ है । 'मुखचुम्बन करना' यह लक्षकपद का अर्थ है । नायक के कार्य की प्रतीति इन दोनों ही अर्थों में नहीं रहती । वह तो एक तीसरे ही पदार्थ ( नायक ) में रहती है अतः यह तटस्थगत प्रयोजन है । 'अग्रं स्पृशति' अग्रभागको छूता है । ऐसे प्रयोग से प्रयोजन का बोध नहीं होता, अतः समासोक्ति भी नहीं होती । समासोक्ति में प्रकृत अर्थ की प्रतीति अभिधा शक्ति द्वारा होती है । और 'चन्द्रमा मुख चुम्बन नहीं कर सकता' इस मुख्यार्थ बाध में लक्षणा द्वारा 'अग्र भाग को छूता है' यह बोध होता है । अन्य कामुक पुरुष के व्यवहार का ज्ञान व्यञ्जना द्वारा होने से व्यङ्ग्य होता है । यह व्यङ्ग्य वाच्यार्थ का परिपोषक होता है । अतः यह गुणीभूतव्यङ्ग्य समासोक्ति को बना देता है । अर्थगत प्रयोजन लक्ष्यार्थ वा लक्षकपदार्थ में रहता है । इसके उदाहरण आगे दिये जावेंगे । इस प्रकार स्फुटव्यङ्ग्या के तटस्थप्रयोजना और अर्थगतप्रयोजना ये दो भेद होते हैं ॥ ३ ॥

अस्फुटव्यङ्ग्या के भी तटस्थप्रयोजना और अर्थगतप्रयोजना ये दो भेद होते हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्ष्यलक्षकनिष्ठत्वादर्थसंस्थमपि द्विधा ॥ ४ ॥

द्विधेति भावः । तटस्थत्वादिलक्षणमुक्तपूर्वम् । तटस्थप्रयोजनाया उदाहरणं "मुखं विकसितस्मितम्" इत्यादिपद्यम् । विकसितं च तत् स्मितं चेति विकसितस्मितम् । विकासित्वं हि कुसुमधर्मः । स च स्मितेऽनुपपन्नः । यत्तु विकसति सोऽसंकुचितो भवतीति विकसितशब्दो बाधितविकासमुख्यार्थः सन् सातिशयत्वं स्मिते लक्षयन् हृद्यत्वसुरभित्वादिप्रयोजनलक्षणं व्यनक्ति । अत्र मुखसौरभत्वादिप्रयोजनस्य सातिशयत्वरूपे लक्ष्ये विकसितत्वपुष्पधर्मरूपे लक्षकपदार्थे चाविद्यमानतया तटस्थत्वम् । अर्थगतोदाहरणं वक्ष्यते । स्फुटास्फुटव्यङ्ग्ययोरर्थगतप्रयोजनभेदानाह—लक्ष्येति । स्फुटास्फुटव्यङ्ग्ययोरर्थसंस्थमपि प्रयोजनं लक्ष्यं च लक्षकं चेति लक्ष्यलक्षकौ पदार्थौ तयोर्निष्ठं तस्य भावस्तत्त्वं तस्मात् । द्विधा भवति । अर्थगतप्रयोजनस्य द्वौ भेदौ एकं लक्ष्यनिष्ठमपरं च लक्षकनिष्ठमिति । अस्य प्रयोजनं रूपकेऽस्ति । "इन्दुर्मुखम्" इति लक्ष्यनिष्ठप्रयोजनोदाहरणम् । इन्दुर्मुखं न सम्भवतीति बाधे समुपस्थिते इन्दुपदेनेन्दुतादात्म्यापन्नं मुखं लक्ष्यते । मुखनिष्ठोत्कर्षप्रतीतिश्च स्फुटं प्रयोजनम् । तच्च लक्ष्ये मुख एव । एवं कान्तामुखं विलोक्य कश्चिद्ब्रूते "मुखमिन्दुः" इति । इदं लक्षकपदार्थनिष्ठस्फुटप्रयोजनोदाहरणम् । मुखमिन्दुर्न भवितु शक्नोति मुख्यार्थबाधः । ततश्च मुखपदेन मुखतादात्म्यापन्न इन्दुर्लक्ष्यत इति मुखपदं लक्षकम् । कान्तिमत्त्वप्रतीतिः

होते हैं । तटस्थनिष्ठका लक्षण पूर्व श्लोक में दिया जा चुका है । "मुखं विकसितस्मितम्" यह इसका उदाहरण है । विकास ( खिल जाना ) पुष्प में होता है । वह स्मित ( हास ) में नहीं हो सकता । इस लिये लक्षणा द्वारा अत्यन्त हास का बोध होता है । मनोहरता वा सौरभ आदि का बोध प्रयोजन अस्फुट है । यह प्रयोजन लक्ष्यार्थ ( हास का आधिक्य ) में वा विकसितरूप लक्षकपदार्थ में नहीं रहता, किन्तु मुखमें ही रहता है अतः तटस्थनिष्ठ है । अर्थनिष्ठ प्रयोजन के भेद ये हैं—लक्ष्यार्थनिष्ठ वा लक्षकपदार्थनिष्ठ होने से अर्थगत के दो भेद होते हैं । इन दोनों का उपयोग रूपक अलङ्कार में होता है । "इन्दुर्मुखम्" यह लक्ष्यनिष्ठ प्रयोजन का उदाहरण है । चन्द्रमा मुख नहीं हो सकता इस मुख्यार्थ बाध होने पर इन्दुपद से अभिन्न ( एकताको प्राप्त ) मुख की प्रतीति होना लक्ष्यार्थ है । कान्तामुख का चन्द्र के समान सुन्दर होना प्रयोजन है और यह लक्ष्यार्थ ( मुख ) में रहता है । "मुखमिन्दुः" यह लक्षकनिष्ठ प्रयोजन का उदाहरण है । मुख इन्दु नहीं हो सकता । इसलिये लक्षणा से मुखरूपी चन्द्रमा का ज्ञान होता है । यहां मुखपद लक्षक है । इसमें सुन्दरती की प्रतीति होती है ।


CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रयोजनम् । तच्च लक्षकपदार्थे मुख एवेति लक्षकपदार्थनिष्ठमत्र स्फुटं प्रयोजनम् । अस्फुटप्रयोजनस्य लक्ष्यलक्षणनिष्ठोदाहरणे स्वयमूह्यं । इत्थं सर्वसंकलने प्रयोजनस्य षड् भेदा भवन्ति । इदं च प्रयोजनवृत्तीलक्षणाया भेदसंकलनम्—प्रयोजनलक्षणायाः लक्ष्यवाचकपदामीलने प्रथमो भेदः, लक्ष्यवाचकपदमीलने चापरः । प्रथमभेदस्यायं प्रस्तारः—




एते लक्ष्यवाचकपदामीलने सिद्धलक्षणायाः षड् भेदाः । एवमेव साध्यायाः षट्, साध्याङ्गलक्षणायाः षट् च परस्परं मिलित्वा अष्टादश भेदा जायन्ते । अष्टादश भेदा एव च लक्ष्यवाचकपदमीलने भवन्तीति द्वयोः सम्मेलनेन षट्त्रिंशद् भेदाः प्रयोजनाश्रयेण लक्षणाया भवन्ति ॥ ४ ॥

---

अतः यहां लक्षक में स्फुट प्रयोजन है । अर्थगत अस्फुट प्रयोजन के उदाहरण अन्यत्र देखिये । इस प्रकार स्फुट व अस्फुट प्रयोजन में प्रत्येक के छै २ भेद होते हैं और वे सिद्ध, साध्य वा साध्याङ्ग के कारण अष्टादश होते हैं । एवं स्फुटव्यङ्गया के वा अस्फुटव्यङ्गया के भेद मिलाने पर प्रयोजनवती लक्षणाके कुल छत्तीस भेद होते हैं ॥ ४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्षकस्थं स्फुटं यत्र सा विचक्षणलक्षणा ।
अस्फुटत्वं तटस्थत्वं लक्ष्यस्थत्वममुष्य च ॥ ५ ॥
अन्यास्तिस्र इति व्यक्ता शक्तितः सा चतुर्विधा ।

केचनास्फुटप्रयोजनस्यैकमेव भेदमुररीकुर्वन्ति तन्मतेन पूर्वोक्तमेव लक्षणायाश्चातुर्विध्यं ब्रूते—लक्षकस्थमिति । यत्र स्फुटं प्रयोजनं लक्षके लक्षकपदार्थे तिष्ठतीति लक्षकस्थं भवति सैका लक्षणा, सा च विचक्षणलक्षणानाम्नाऽभिधीयते । मुखनिष्ठोत्कर्षप्रतीतये 'इन्दुर्मुखम्' इत्यादिवाक्येषु मुखे लाक्षणिकमिन्दुपदमेव प्रयुज्यत इति वस्तुस्थितिः । अत्र तु तदर्थमेव मुखपदमिन्दौ लाक्षणिकं विचक्षणैरेव प्रयुज्यत इत्येतस्या विचक्षणलक्षणासंज्ञा । अमुष्य प्रयोजनस्य च । अस्फुटत्वं तटस्थत्वं लक्ष्यस्थत्वं चेति भेदत्रयं भवति । अयं भावः—स्फुटप्रयोजना लक्षकनिष्ठा, तटस्थनिष्ठा, लक्ष्यनिष्ठा, एका चास्फुटप्रयोजनेति भेदचतुष्टयं लक्षणायाः केषांचिन्मते । भेदत्रयमस्फुटप्रयोजनाया अपि भवतीति स्वमतमिति विवेकः । यतो हि 'अस्फुटत्वम्' इत्यारभ्य 'सा चतुर्विधा' इत्यन्तः [ ] एतत्कोष्ठकान्तर्गतः पाठोऽसावधानतया निहित इव प्रतिभाति । अग्रे षण्णां स्फुटास्फुटव्यङ्ग्यभेदोदाहरणानामपि ग्रन्थकृतैवोपन्यस्तत्वात् । एवं च स्फुटव्यङ्ग्यथावदस्फुटव्यङ्ग्यथाया अपि त्रैविध्यमिति भावः ॥ ५ ॥

प्रयोजनवतीभेदानुपसंहरति—अन्या इति । एका लक्षकस्थस्फुटप्रयोजना विच-

---

कोई-कोई विद्वान् अस्फुट प्रयोजना के भेद नहीं मानते, उनके मतसे लक्षणा के चार भेद ये हैं । जहाँ लक्षणा में प्रयोजन स्फुट हो वह भेद विचक्षणलक्षणा के नाम से कहा जाता है । वास्तविक बात यह है कि मुख के सौन्दर्य की प्रतीति के लिये 'इन्दुर्मुखम्' इत्यादि वाक्यों में इन्दु द्वारा ही मुख का बोध माना जाता है । किन्तु विचक्षण लोग ही मुख द्वारा इन्दु का बोध कराते हैं, अतः इसका नाम विचक्षणलक्षणा हुआ है । प्रयोजन का अस्फुट होना, तटस्थ होना, लक्ष्यस्थ होना ये तीनों भेद विचक्षणलक्षणा के साथ मिलकर प्रयोजनवती लक्षणा के चार भेद होते हैं । स्फुटप्रयोजना के लक्षक, लक्ष्य व तटस्थनिष्ठ होने से तीन भेद होते हैं । अस्फुट प्रयोजना का एक भेद है । यद्यपि अस्फुटप्रयोजना के तीन भेद हो सकते हैं, किन्तु कोई २ विद्वान् इन्हें नहीं मानते । सारांश यह है कि 'अस्फुटत्वम्' इससे लेकर 'सा चतुर्विधा' यहां तक का पाठ असावधानता से अधिक रख दिया गया है । क्यों कि स्फुटप्रयोजना लक्षण की तरह अस्फुट प्रयोजना के भी तीन भेद होते हैं । इन छे भेदों के उदाहरण खुद ग्रन्थकारने ही आगे दे दिये हैं । इन छै भेदों के नाम २७४ पृष्ठ की पौर्णमासी में देखिये ॥५॥

इस प्रकार किसी के मतसे लक्षणा के चार भेद हैं । यह लक्षणा अभिधा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्दुरेवैष तद्वक्त्रमुत्कर्षो लक्ष्यते मुखे ॥ ६ ॥

लक्षणलक्षणा, अन्याश्च तिस्र इति हेतोः शक्तितोऽभिधाशक्तितो व्यक्ता भिन्ना सा लक्षणा चतुर्विधा भवति। अयं भावः—प्रयोजनप्रतिपिपादयिषायै लाक्षणिकस्यैव पदस्य प्रयोगो न तु वाचकस्य। तेनेयं लक्षणा शक्तितोऽभिधातो भिन्नेति भावः। प्रयोजनप्रतीतिस्तु व्यञ्जनयैव। यथोक्तम्—

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया' ॥ इति। ( काव्यप्र० २।१४ )

लक्ष्यलक्षकस्थस्फुटप्रयोजनामुदाहरति—इन्दुरिति। एष दृश्यमान इन्दुरेव चन्द्र एव तस्याः कान्ताया वक्त्रमाननम्। इति वाक्ये कान्ताया मुखे उत्कर्षो लक्ष्यते प्रतीयते। अयं सारः—'तद्वक्त्रमिन्दुरेव' इत्यत्र वक्त्रपदेन वक्त्रतादात्म्यापन्न इन्दुर्लक्ष्यत इति वक्त्रपदमिन्दुलक्षकम्। इन्दुश्च लक्ष्यम्। उत्कृष्टताप्रतीतिश्च स्फुटं प्रयोजनम्। सा चेयमुत्कृष्टता लक्षकपदार्थमुखनिष्ठैव प्रतीयत इत्युदाहरणसंगतिः। 'एष इन्दुरेव तद्वक्त्रम्' इत्यत्र चेन्दुपदेनेन्दुतादात्म्यापन्नं वक्त्रं लक्ष्यत इतीन्दुपदं वक्त्रलक्षकम्। वक्त्रं च लक्ष्यम्। उत्कृष्टताप्रतीतिश्च स्फुटं प्रयोजनम्। सा चोत्कृष्टता लक्ष्यपदार्थवक्त्रनिष्ठैव प्रतीयत इति लक्ष्यनिष्ठस्फुटप्रयोजनाया अप्यत्रोदाहरणम्। अयं भावः—यदा वक्त्रपदं चन्द्रे लक्षणिकं तदा लक्षकनिष्ठस्फुटप्रयोजना, यदा च चन्द्रपदं वक्त्रे लाक्षणिकं तदा लक्ष्यनिष्ठस्फुटप्रयोजनेतीदमुभयोदाहरणम् ॥ ६ ॥

---

शक्ति से भिन्न ही है। क्यों कि प्रयोजन को बतलाने के लिये लाक्षणिकपद का ही प्रयोग किया जाता है, वाचक पदका नहीं। प्रयोजन का बोध तो व्यञ्जना द्वारा ही होता है। जैसे कि काव्यप्रकाश आदि में लिखा है। लक्षक में रहने वाले स्फुटप्रयोजन का उदाहरण 'तद्वक्त्रमिन्दुरेव' 'उसका मुख ही चन्द्रमा है' यह वाक्य है। यहां मुखपद इन्दुका लक्षक है। मुख में सौन्दर्य की प्रतीति होती है। यह प्रयोजन स्फुट और लक्षक ( मुख ) में रहता है। अतः लक्षकनिष्ठ स्फुटप्रयोजना का उदाहरण है। लक्ष्य में रहने वाले स्फुट प्रयोजना का उदाहरण 'एष इन्दुरेव तद्वक्त्रम्' 'यह चन्द्र ही उसका मुख है' यह वाक्य है। यहां चन्द्रपद मुखका लक्षक है। मुख में सौन्दर्य की प्रतीति होती है। यह प्रयोजन स्फुट और लक्ष ( मुख ) में रहता है। अतः यह लक्ष्यनिष्ठ स्फुटप्रयोजना का उदाहरण है। भावार्थ यह है कि 'इन्दुरेवैष०' इत्यादि कारिकार्ध से लक्षकनिष्ठस्फुटप्रयोजना तथा लक्ष्यनिष्ठस्फुटप्रयोजना इन दोनों भेदों के उदाहरण दिये गये हैं ॥ ६ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रदीपं वर्धयेत्तत्र तटस्थं मङ्गलोदयः ।

· तटस्थनिष्ठां स्फुटास्फुटप्रयोजनामुदाहरति–प्रदीपमिति । दीपनिर्वाणेऽभिलषिते 'दीपं वर्धयेत्' इत्युच्यते तत्र दीपनिर्वाणं लक्ष्यम् । मङ्गलोदयश्च प्रयोजनम् । तच्च तटस्थं तटस्थनिष्ठमित्यर्थः । दीपनिर्वाणकामनया 'दीपं वर्धयेत्' इत्युच्यत इति तात्पर्यानुपपत्तिः । यतो हि 'वर्धयेत्' इति रूपं ण्यन्ताद् वृधु वृद्धौ (भ्वा० आ० से०) इति धातोर्निष्पन्नम् । न तु वर्ध छेदने ( चु० प० से० ) धातोर्ण्यन्ते निष्पन्नम् । अत्र छेदनार्थकधातुरूपस्वीकारेऽमङ्गलपरिहाररूपप्रयोजनानुपपत्तिः । एवं चात्र दीपनिर्वाणं लक्ष्यते । अमङ्गलपरिहारश्च प्रयोजनम् । एतच्च प्रकरणादिवक्त्रादिसहकारे स्फुटम् । प्रकरणादिवक्त्राद्यभावे चास्फुटम् । अतः स्फुटास्फुटयोरुदाहरणमिदम् । अस्य च प्रयोजनस्य वक्तृश्रोतृनिष्ठतया तटस्थता । लक्ष्यलक्षकान्यतरवृत्तित्वाभावात् । एवमेवान्नसमाप्तावपि 'बहुलमन्नम्' इति स्त्रियो वदन्ति तत्रापि द्रष्टव्यम् ।

. तटस्थ में स्फुट तथा अस्फुट प्रयोजनको देखिए–दीपक को शान्त करने के लिये 'दीपं वर्धयेत्, दीपक को बढाओ' यह कहनेपर लक्षणाद्वारा 'दीपक का निर्वाण' यह अर्थ जाना जाता है । यहां वृद्धिवाचक वृधु धातु का णिजन्तप्रक्रिया में 'वर्धयेत्' यह रूप बनाया है छेदनार्थक वर्ध धातुसे नहीं । इसे छेदनार्थक धातु का रूप माननेपर मुख्यार्थबाध नहीं होने से तथा ग्रन्थकार के अभीष्ट अमङ्गलपरिहाररूपप्रयोजन का ज्ञान नहीं होने से लक्षणा नहीं होगी ।

वृद्धिवाचक धातु का रूप मानने पर मुख्यार्थ बाध उपस्थित होता है और दीपनिर्वाण का लक्षणासे ज्ञान होता है । अमङ्गल परिहार प्रयोजन है । प्रकरण व वक्ता आदिका ज्ञान होने पर यहां प्रयोजन स्फुट रूप से प्रतीत होता है और प्रकरण व वक्ता आदिका ज्ञान नहीं होने पर यहां प्रयोजन अस्फुट रहता है । अतः यह स्फुट व अस्फुट इन दोनों व्यङ्ग्यों का उदाहरण है । यह अमङ्गल परिहाररूप प्रयोजन लक्ष्य व लक्षक इन दोनों ही अर्थों में नहीं रहता किन्तु वक्ता व श्रोता ( अर्थात् तटस्थ ) में ही रहता है अतः यह तटस्थनिष्ठ स्फुट व अस्फुट प्रयोजना लक्षणा का उदाहरण है ।

इसी प्रकार भोजनसामग्री के समाप्त होने पर भी स्त्रियां प्रायः कहती रहती हैं कि 'हां, लीजिये, सामग्री बहुत है' । इस वाक्य में भी तटस्थगत प्रयोजन जानना चाहिए । शुभ शब्द के उच्चारण से मङ्गल की प्राप्ति प्रयोजन है । लक्षकनिष्ठ अस्फुटप्रयोजना लक्षणा का उदाहरण देखिए—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पटोऽयं दग्ध इत्यादौ स्फुटं नास्ति प्रयोजनम् ॥ ७ ॥
अमृतं सूक्तमित्यादौ लक्ष्यस्थमतिहृद्यता ।
आभिमुख्यात् संनिधानात्तथाऽऽकारप्रतीतितः ॥ ८ ॥

लक्षकस्थास्फुटप्रयोजनामुदाहरति—पटोऽयमिति । पटस्यैकदेशे दग्धे 'पटोऽयं दग्धः' इत्यादि प्रयोगे कर्मानर्हतारूपं प्रयोजनं स्फुटं नास्ति । अत्र पटपदेन पटस्यैकदेशो लक्ष्यते । पटाभाव इवावशिष्टपटे कर्मानर्हताप्रतिपादनं प्रयोजनम् । तच्चास्फुटम् । लक्षकपटनिष्ठं चेति बोद्धव्यम् ॥ ७ ॥

लक्ष्यस्थास्फुटप्रयोजनामुदाहरति-अमृतमिति । 'अमृतं सूक्तम्' इत्यादिवाक्येऽमृतपदेन रसवत्सुभाषितं काव्यं लक्ष्यते । अतिहृद्यताऽतिरमणीयता, तस्याः प्रतीतिश्च प्रयोजनम् । अत्रामृतपदं लक्षकम् । सरससूक्तकाव्यं च लक्ष्यम् । प्रयोजनप्रतीतिश्च लक्ष्ये काव्य एवेत्युदाहरणसंगतिः । एवं स्फुटप्रयोजनस्य लक्षकलक्ष्यतटस्थनिष्ठानामस्फुटप्रयोजनस्य तटस्थलक्षकलक्ष्यनिष्ठानां चोदाहरणानि प्रदर्शितानीति ज्ञेयम् । अथ लक्षणाप्रयोजकसम्बन्धान् दर्शयति—आभिमुख्यादिति । एतेभ्यो वक्ष्यमाणेभ्यः शक्यलक्ष्यसम्बन्धेभ्यो लक्षणा भवतीति भावः। आभिमुख्यं संमुखावस्थानत्वं सम्बन्धस्तस्मात् । लक्षणा भवति । यथा 'अङ्गुल्यग्रे करिशतं विद्यते' इति । अत्राभिमुख्यसम्बन्धादङ्गुल्यग्रपदेनाङ्गुलिसंमुखस्थो देशविशेषो लक्ष्यते । तटस्थान

वस्त्र के एक प्रान्त के दग्ध होने पर यह वस्त्र जल गया 'पटोऽयं दग्धः' यह कहा जाता है । 'यह वस्त्र कार्य के योग्य नहीं है' इस प्रयोजन की प्रतीति यहां सर्वसाधारण को नहीं होती अतः यह अस्फुट है और दग्धावशिष्ट पट ( लक्षक पदार्थ ) में वर्तमान है ॥ ७ ॥

लक्ष्यनिष्ठ अस्फुटप्रयोजना का उदाहरण देखिए—'अमृतं सूक्तम्' इस वाक्य में अमृतशब्द से सरस सुभाषित काव्य का बोध लक्षणा से होता है । अतिरमणीयता का ज्ञान इसका प्रयोजन है। अमृत पद लक्षक है। सूक्त ( काव्य ) लक्ष्यार्थ है । मधुरता रूपी प्रयोजन लक्ष्यार्थ ( काव्य ) में है अतः यह लक्ष्यार्थ में रहनेवाले प्रयोजन का उदाहरण है । इसप्रकार स्फुटप्रयोजन के ( लक्षक लक्ष्य व तटस्थ में ) और अस्फुटप्रयोजन ( तटस्थ, लक्षक व लक्ष्य में ) उदाहरण बतलाये गये । अब लक्षणा के निमित्तभूत सम्बन्ध बतलाये जाते हैं । शक्यार्थ व लक्ष्यार्थ के आपस में आगे लिखे सम्बन्ध होते हैं । किसी वस्तु की संमुखस्थिति में आभिमुख्य-सम्बन्ध होता है । 'अङ्गुल्यग्रे करिशतम्' मेरी अङ्गुली के सामने सौ हाथी हैं । इस वाक्य में अग्रपद से आगे ( सामने ) के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**कार्यकारणभावात्सा वाच्यवाचकभावतः ।**

स्याङ्गुलयग्रसंमुखस्थत्वात् । सन्निधानं समीपता तस्मात् । यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन तीरत्वबोधः । अयं च सामीप्यसम्बन्धाद् भवति । गङ्गातीरयोः समीपावस्थानात् । यत्र च वास्तवं सन्निधानं नास्ति तत्र तथाकारप्रतीतितः सन्निधानसदृशज्ञानात्सम्बन्धाल्लक्षणा भवति । यथा "पर्वताग्रे चन्द्रः" इति । पर्वताग्रसन्निहितोऽयं चन्द्र इति सान्निध्याकारप्रतीतितः सम्बन्धात् पर्वतस्यौन्नत्यं लक्ष्यते । यत्र ज्ञाततत्त्वस्य भ्रान्तिस्तत्र लक्षणा । यत्र त्वज्ञाततत्त्वस्य तत्र शक्त्यैव प्रयोगः ॥ ८ ॥

लक्षणाप्रयोजकसम्बन्धान् दर्शयति—कार्येति । कार्यकारणभावाल्लक्षणा भवति । यथा "आयुर्घृतम्" इत्यत्रायुष्कारणमपि घृतं कार्यकारणभावसम्बन्धयायुस्तादात्म्येन प्रतीयते । अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं प्रयोजनम् । घृतेनायुर्वर्धत इत्यायुः कार्यं घृतं च तत्कारणम् । वाच्यवाचकभावतो वाच्यवाचकसम्बन्धाच्च लक्षणा यथा द्विरेफपदे । एकेन भ्रमरपदोच्चारणे कृतेऽन्यो "द्विरेफमुच्चारयति" इति वदति अस्मिन्वाक्ये द्विरेफपदस्य "द्वौ रेफौ यस्मिंस्तत्" इति योगवृत्त्या भ्रमरपदं लक्ष्यम् । अत्र वाच्यत्वं सम्बन्धः । इमां नैयायिका लक्षितलक्षणां कथयन्ति । यथोक्तं न्याय-

---

प्रदेश का बोध लक्षणा द्वारा होता है। शक्यार्थ ( आगे ) व लक्ष्यार्थ संमुख प्रदेश में आभिमुख्य सम्बन्ध है। लक्षणा में एक सामीप्यसम्बन्ध भी होता है। 'गङ्गायां घोषः' यहां गङ्गापद से तीर का बोध होता है। गंगा ( शक्यार्थ ) व तीर ( लक्ष्यार्थ ) में समीपता का सम्बन्ध है। जहां वास्तविक समीपता नहीं होती वहां समीप के सदृश दीखने पर समीपता मान ली जाती है और लक्षणा होती है। 'पर्वताग्रे चन्द्रः' पर्वत के शिखर पर चन्द्रमा है। इस वाक्य में पर्वत के समीप ही चन्द्रमा दीखता है, यह सामीप्य सम्बन्ध है। पर्वत का अधिक ऊँचापन लक्ष्यार्थ है। जहाँ वास्तविकतत्व के जानने पर भी सामीप्य की भ्रान्ति हो, वहां लक्षणा होती है। अज्ञातावस्था में जो सामीप्य की भ्रान्ति है वह अभिधा द्वारा ही जानी जाती है यह सारांश है ॥ ८ ॥

लक्षणा के प्रयोजक और भी सम्बन्ध बतलाये जाते हैं। "आयुर्घृतम्" यहां कार्यकारणभाव सम्बन्ध है। क्योंकि घृत के सेवन से आयु की वृद्धि होती है। अतः आयु कार्य है और घृत उसका कारण है। द्विरेफ पद में वाच्य-वाचकभावसम्बन्ध है। द्विरेफ पदसे दो रेफ वाले भ्रमर शब्द की प्रतीति होती है। अतः भ्रमर का लक्षणासे बोध होता है। नैयायिक लोग इसे लक्षितलक्षणा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्येवमादेः संबन्धात् किंचान्यस्माच्चतुष्टयात् ॥ ९ ॥

मुक्तावल्याम्—"यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदाद्रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च संबन्धो भ्रमरे ज्ञायते इति लक्षितलक्षणा"। द्विरेफपदघटकस्योत्तरपदभूतस्य रेफपदस्य रेफद्वयसम्बन्धिनि भ्रमरपदे लक्षणा। लक्षितस्य भ्रमरपदस्य च भ्रमररूपेऽर्थे लक्षणेति सारः। इमां लक्षितलक्षणां वैयाकरणा न स्वीकुर्वन्ति। यथोक्तं वैयाकरणलघुमञ्जूषायाम्—'द्विरेफपदं तु रूढिशक्त्या भ्रमरबोधकम्। अवयवार्थप्रतीतिस्तु नास्त्येव रथन्तरादिपदवत् इत्यादि'। यथा वा क्लेशे 'शान्त' पदं प्रयुज्यते, तत्र वाच्यवाचकभावलक्षणः सम्बन्धः। शान्तपदोपस्थाप्यक्लेशशब्दवाच्यत्वस्य क्लेशेऽर्थे सत्त्वात्। वाचकं शान्तपदम् वाच्यं क्लेशपदम् लक्ष्यम्। ततश्च क्लेशार्थज्ञानम् इत्येवमादेः सम्बन्धात्सा लक्षणा भवति। अत्रादिपदेन न्यायसूत्रोक्ता अवशिष्टाः। ( २६४ पृ० ) सम्बन्धा विज्ञेयाः। यथा—'यष्टीः प्रवेशय' अत्र यष्टित्वारोपो ब्राह्मणे साहचर्यात्। 'मञ्चाः क्रोशन्ति' अत्र मञ्चत्वारोपो बालेषु तात्स्थ्यात्। 'वीरणेष्वास्ते' अत्र कटेषु वीरणत्वारोपस्तादर्थ्यात्। वीरणपदं हिन्दीभाषायां 'खश' नाम्ना प्रसिद्धम्। 'अयं राजा यमः' अत्र राज्ञि यमत्वारोपो वृत्तात्। 'प्रस्थः सक्तुः' अत्र सक्तौ

---

कहते हैं। जैसा कि न्यायसिद्धान्तमुक्तावली में लिखा है कि जहां शब्दार्थ का परम्परासम्बन्ध हो वहां लक्षितलक्षणा होती है। जैसे द्विरेफ पद से दो रेफवाले भ्रमरपदका बोध होता है। पश्चात् भ्रमर पद से भ्रमर का बोध होता है। इस वाक्यार्थ के परम्परा सम्बन्ध के कारण यहां लक्षितलक्षणा होती है। वैयाकरणों ने इस लक्षणाको नहीं माना है। जैसा कि नागेश ने लघुमञ्जूषा में लिखा है—द्विरेफपद तो रूढिशक्ति से भ्रमर का बोधक है। अवयवार्थ ( दो रेफ ) का ज्ञान रथन्तर ( सामवेद का मन्त्र ) आदि पदों की तरह नहीं होता। क्लेश शब्द शकारान्त है। अतः इसके लिये शान्त पद का प्रयोग किया जावै तो वाच्यवाचकभावसम्बन्ध होता है। शान्तपद वाचक क्लेशपद वाच्य है। इत्यादि पूर्वोक्त सम्बन्धों के कारण लक्षणा को अवकाश मिलता है। आदि पद से न्यायसूत्र में कहे हुए ( २६४ पृ० ) सम्बन्धों का भी ग्रहण करना चाहिए। यथा—"यष्टीः प्रवेशय" यहां ब्राह्मणों में यष्टी का आरोप साहचर्यसम्बन्ध से है। "मञ्चाः क्रोशन्ति" यहां बालकों में शय्या का आरोप तात्स्थ्य सम्बन्ध से है। "वीरणेष्वास्ते" यहां तादर्थ्य सम्बन्ध द्वारा तृण में खश का आरोप किया है। "अयं राजा यमः" राजा से यम के ग्रहण में तात्कर्म्य सम्बन्ध है। "प्रस्थः सक्तुः" सक्तु में प्रस्थ (एक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

साद्दश्यात् समवायात् सा वैपरीत्यात् क्रियान्वयात् ।

प्रस्थत्वारोपस्तन्मानकत्वात् । 'चन्दनं तुला' चन्दने तुलात्वस्यारोपः, तद्धार्यत्वात् । 'कृष्णः शकटः' कृष्णगुणयोगाच्छकटे तद्धर्मकृष्णत्वारोपः । 'अयं कुलस्य राजा' अत्र पुरुषे राजत्वारोपः कुलाधिपत्यात् इति । त्रिवेणिकायामाशाधरभट्टेन त्रिविधः सम्बन्धो निरूपितः—संयोगः समवायो विशिष्टबुद्धियोग्यश्चेति । तत्र संयोगो नानाविधः—व्याप्यव्यापकभावः, धार्यधारकभावः, भर्तृभार्यात्वम्, आधाराधेयभावश्चेत्यादि, । अवयवावयविभावः, गुणगुणिभावः, क्रियाक्रियावद्भावः, जातिव्यक्तिभावः, विशेषनित्यद्रव्यभावश्चेति समवायसम्बन्धः पञ्चधा । तत्र जातिव्यक्तिभावो विशेषसामान्यभावनाम्नाप्युदाह्रियते । जन्यजनकभावो विशेषणविशेष्यभावो वर्ण्यवर्णकभावः, उपमानोपमेयभावश्चेति विशेषनित्यद्रव्यभावभेदाः । एवमन्येऽपि भेदा स्वयमूहनीयाः । उदाहरणानि तत्रैव द्रष्टव्यानि । किं च चतुर्णां समाहारश्चतुष्टयं तस्मात् । अन्यस्माच्चतुष्टयात् सम्बन्धादपि लक्षणा भवति । ते च चत्वारः सम्बन्धा अग्रे प्रतिपादिताः ॥ ९ ॥

लक्षणाप्रयोजकमन्यत्सम्बन्धचतुष्टयमाह—साद्दश्यादिति । साद्दश्याद्गुणानां साद्दश्यसम्बन्धाल्लक्षणा भवति। इयं च लक्षणा गुणयोगाद्गौणीत्युच्यते। साद्दश्येतरसम्बन्धा अन्याः सर्वा अपि लक्षणास्तु शुद्धा उच्यन्ते । 'गौर्वाहीकः' इति वाक्ये

सेर ) का आरोप तौल के सम्बन्ध से है। 'चन्दनं तुला' चन्दनमें तुला का आरोप तद्धार्य सम्बन्ध से है । 'कृष्णः शकटः' यहां तद्गुण शब्द से शकट को कृष्णवण बतलाया है । 'अयं कुलस्य राजा' यह वंश का राजा है। यहां कुलस्वामी में राजा का आरोप आधिपत्य सम्बन्ध से है । त्रिवेणिका में आशाधर भट्ट ने लक्षणा के प्रयोजक तीन सम्बन्ध बतलाये हैं—संयोग, समवाय व विशिष्टबुद्धियोग्य । व्याप्यव्यापकभाव, धार्यधारकभाव, भर्तृभार्याभाव और आधाराधेयभाव के भेद से संयोग सम्बन्ध के अनेक प्रकार हैं । अवयवावयविभाव, गुणगुणिभाव, क्रियाक्रियावद्भाव, जातिव्यक्तिभाव व विशेषनित्यद्रव्यभाव ये समवाय के पांच भेद हैं । जातिव्यक्तिभाव को सामान्यविशेषभाव भी कहते हैं । विशेषनित्यद्रव्यभाव के जन्यजनकभाव, विशेषणविशेष्यभाव, वर्ण्यवर्णकभाव, उपमानोपमेयभाव ये भेद हैं । इस प्रकार और भी सम्बन्ध होते हैं । ग्रन्थकार लक्षणा के चार सम्बन्ध और बतलायेंगे ॥ ९ ॥

लक्षणा के चार सम्बन्ध ये हैं—गुणों के साद्दश्य सम्बन्ध से भी लक्षणा होती है और इसको गौणी लक्षणा कहते हैं। 'गौर्वाहीकः' (ग्रामीण मनुष्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गुणानां सादृश्याद् गौणी लक्षणा। अत्र वाक्यार्थबोधे मतभेदः। तथा हि—गोप्रतीतिरभिधया भवति। तद्गतगुणा जाड्यादयस्तु लक्षणया प्रतीयन्ते साहचर्यसम्बन्धत्वात्। ततो लक्षितास्त एव गुणा गोशब्देन वाहीकार्थस्याभिधया बोधने निमित्तीभवन्ति। ततो वाहीकप्रतीतिरभिधयैव जायते। एवमेतन्मते 'जाड्यवदभिन्नो वाहीकः' इति बोधो जायते। अस्मिन्मतेऽयं दोषः—'अभिधा हि संकेतितमर्थं बोधयति। गोशब्दस्य च वाहीके संकेतो नास्ति। अतो गोशब्दस्यासंकेतितवाहीकार्थबोधनेऽसामर्थ्यम्। गोशब्दार्थबोधानन्तरं चाभिधाया विरामः' इति। अन्ये त्विदं वदन्ति—नाभिधया गोशब्देन वाहीकार्थः प्रतीयते। किन्तु गोत्वसहचारिसाजात्यसम्बन्धेन वाहीकार्थगता गुणा एव लक्ष्यन्ते। वाहीकार्थस्तु धर्मिरूपेणाक्षिप्यते। 'गोगतजाड्यमान्द्यादिसजातीयवाहीकगतगुणाः' इति बोधोऽस्मिन्मते।

---

पशु है) यह इसका उदाहरण है। इस वाक्यार्थ के बोध में मतभेद प्राप्त होते हैं। प्रथम मत यह है कि गो की प्रतीति तो अभिधा से होती है। और गोगत् जाड्यादि गुणों का बोध साहचर्य सम्बन्ध से लक्षणा द्वारा होता है। ततः जाड्यादि ये लक्षित गुण ही गोपद से अभिधा द्वारा वाहीक का बोध कराने में निमित्त होते हैं। अतः वाहीक का ज्ञान अभिधासे ही होता है इस मत में यह दोष आता है कि अभिधा संकेतित ही अर्थ को बताती है। और गोपद का वाहीक में संकेत नहीं है, अतः वह ( अभिधा ) गोपद से वाहीक का बोध नहीं करा सकती। गोपद का बोध कराकर पुनः वही शक्ति वाहीक के बोध कराने में असमर्थ होती है। अतः यह मत माननीय नही है। दूसरा मत यह है-—गोपद से अभिधा द्वारा वाहीक अर्थ का ज्ञान नहीं होता। किन्तु गोगत जाडयादि गुणों के साहचर्य सम्बन्ध से वाहीक में स्थित जडत्वादि गुण गोपद से लक्षित होते हैं। और धर्मीरूप से वाहीक का आक्षेप कर लिया जाता है। गोगत जाड्यादि के समान वाहीक में जडत्वादि है, यह लक्ष्यार्थ ज्ञान होता है। इस मत में दूषण यह है कि गोपद से वाहीक की प्रतीति होती है या नहीं, प्रतीति होती है यह नहीं माना जा सकता। क्योंकि गोपद का वाहीक में संकेत नहीं है। गोपद से वाहीक को प्रतीति नहीं होती यह मानना भी उचित नहीं है। क्योंकि गोपद और वाहीकपद का सामानाधिकरण्य असंगत हो जाता है। इसलिये यहां लक्षणा से बोध होता है। गो पशु और वाहीक मनुष्य इन दोनों का एक क्रिया में अन्वय नहीं हो सकता। अतः मुख्यार्थबाध के कारण गोगत जडत्वादि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सारोपाध्यवसानाख्ये गौणशुद्धे पृथक् पृथक् ॥ १० ॥

अत्रायं दोषः—तथाहि–'गोशब्दाद् वाहीकार्थः प्रतीयते न वे'ति प्रश्नः । आद्ये 'वाहीकार्थे गोपदस्यासंकेतितत्वात्तत्प्रतीतिरसम्भवा । द्वितीयपक्षे तु गोपदवाहीकपदयोः समानाधिकरण्यमसङ्गतं स्यात्' इति । तस्मादत्र लक्षणयैव बोध इति सिद्धान्तः । यथा—गौः पशुः, वाहीकस्तु नरः, तेन गोशब्दार्थो वाहीकार्थेन सहान्वयमलभत इत्येष मुख्यार्थबाधः । अज्ञत्वादिसादृश्यमत्र सम्बन्धः । ततो गोगतजाड्यमान्द्यादिसजातीयगुणाश्रयो वाहीक इति बोधः । जाड्याद्यतिशयश्च प्रयोजनम् । इयं च गुणयोगाद्गौणी लक्षणा । 'छत्रिणो यान्ति' इत्यत्र समवायात् सम्बन्धाल्लक्षणा । समवायो नामात्र समुदायार्थकः । मानवसमुदाये केचन छत्रिणो केचन च छत्ररहिताः । एतान्सर्वान् लक्ष्यीकृत्य 'छत्रिणो यान्ति' इति प्रयोगस्ततः समवायसम्बन्धाच्छत्रिणां बाहुल्यं लक्ष्यते । वैपरीत्याद्विपरीतसम्बन्धादपि लक्षणा जायते । यथा—अकुशले कुशलपदप्रयोगे, अतक्षणि तक्षकर्तृप्रयोगे च वैपरीत्यसम्बन्धाल्लक्षणा भवति । इयमालङ्कारिकैर्लक्षणलक्षणा, अन्यैश्च जहत्स्वार्थोच्यते । अपकारिणं प्रति 'उपकृतं बहु तत्र किमुच्यत' इत्यनेनोपकारप्रतिपादनेऽपीयमेव लक्षणलक्षणा भवति क्रियान्वयो नाम तत्क्रियाकारित्वम् । तस्मात्क्रियान्वयात्तत्क्रियासम्बन्धाच्च लक्षणा । 'अयं राजा यमः' इत्यत्र राज्ञि यमत्वारोपस्तत्क्रियाकारित्वात् । यमराजवत्प्रचण्डोऽयं राजेति बोधः । एते लक्षणाप्रयोजकसम्बन्धाः प्रदर्शिताः । अथ मतान्तरसिद्धान् लक्षणाभेदान् व्याचष्टे—सारोपेति । आरोपश्चाध्यवसानं चेत्यारोपाध्यवसाने

---

गुणों के समान जडत्वादि गुणों से युक्त यह वाहीक है, ऐसा लक्ष्यार्थ का बोध होता है । अज्ञत्वादि सादृश्य सम्बन्ध लक्षणा का निमित्त है । जड़ता की अधिकता प्रयोजन है । यह गुणों के कारण गौणी लक्षणा है । 'छत्रिणो यान्ति' छत्तेवाले जारहे हैं,' यहां समवायसम्बन्ध से लक्षणा है । मानवसमुदाय में छत्रधारक व छत्रशून्य दोनों तरह के मनुष्य जारहे हैं । इनको देख कर उक्त वाक्य का प्रयोग किया गया है । यहां समवायसम्बन्ध है । छत्रधारक मनुष्यों की अधिकता प्रतीत होती है । अपकारक मनुष्य को उपकारक कहकर प्रयोग करने पर विपरीत सम्बन्ध से लक्षणा होती है । इस को आलंकारिक लोग लक्षणलक्षणा और नैयायिक आदि जहत्स्वार्था लक्षणा कहते हैं । 'अयं राजा यमः' यहां तत्क्रियाकारित्व सम्बन्ध से राजा में यमका आरोप किया है । 'यमराज के समान राजा प्रचण्ड है' इस लक्ष्यार्थ का बोध होता है । ग्रन्थकारने लक्षणा के प्रयोजक सम्बन्ध बतला दिये । अब वह काव्यप्रकाश के मत से लक्षणा के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गौणं सारोपमुद्दिष्टमिन्दुर्मुखमितीदृशम् ।
गौणं साध्यवसानं स्यादिन्दुरेवेदमीदृशम् ॥ ११ ॥

ताभ्यां सहिते सारोपाध्यवसाने, ते आख्ये ययोस्ते तथोक्ते। गौणी च शुद्धा चेति गौणशुद्धे लक्षणे पृथक् पृथग्भवतः। अयमाशयः—सारोपा साध्यवसाना चेति द्विविधा लक्षणा। द्विविधाप्येषा गौणी शुद्धा चेति द्विधा भूत्वा चतुर्धा भवति। अस्मिन् ग्रन्थे तु सारोपा लक्ष्यवाचकपदामीलना साध्यवसाना च लक्ष्यवाचकपदमीलनेति नाम्ना व्यवह्रियते द्वयोर्लक्ष्यलक्षकपदयोः प्रयोगे सारोपा। केवललक्षकपदस्यैव प्रयोगे तु साध्यवसाना। सादृश्यसम्बन्धे गौणी, सादृश्येतरसम्बन्धे च शुद्धा। यथा—'सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि। सादृश्यात्तु मता गौण्यः' इति साहित्यदर्पणेऽभिहितम्। उदाहरणान्यग्रे ॥ १० ॥

उदाहरणान्याह—गौणमिति। 'इन्दुर्मुखम्' इतीदृशं वाक्यं गौणं सारोपं चोद्दिष्टं कथितम्। अत्रेन्दुपदेनेन्दुतादात्म्यापन्नं मुखं लक्ष्यते। इन्दुनिष्ठानामाह्लादकत्वादिगुणानां सादृश्यमत्र सम्बन्धः। इयं लक्षणा गुणयोगाद्गौणी। द्वयोरारोप्यमाणारोपविषययोरत्रोपादानाच्च सारोपा। अत्रारोप्यमाणः ( लक्षकः ) इन्दुः, मुखं ( लक्ष्यं ) चारोपविषयः। 'इन्दुरेवेदम्' इतीदमीदृशं वाक्यं गौणं साध्यवसानं च। अत्र सादृश्यगुणयोगाद् गौणी लक्षणा। आरोप्यमाणेन निगीर्णस्यारोपविषयस्यान्यतादात्म्यप्रतीतिकृत्साध्यवसाना। इन्दुपदेनारोप्यमाणेनारोपविषयस्य मुखपदस्य नि-

---

भेद बतलाता है। सारोपा और साध्यवसाना ये दो लक्षणा के भेद गौणी व शुद्धा के कारण चार हो जाते हैं। इस ग्रन्थ में सारोपा को लक्ष्यवाचकपदामीलना और साध्यवसाना को लक्ष्यवाचकपदमीलना नाम से कहा है। लक्ष्य व लक्षक पदों के प्रयोग में सारोपा तथा केवल लक्षक पद के प्रयोग में साध्यवसाना होती है। सादृश्य सम्बन्ध से जहां लक्षणा हो, वहां गौणी व अन्य सम्बन्ध से लक्षणा होने पर शुद्धा लक्षणा होती है। उदाहरण आगे लिखे गये हैं ॥ १० ॥

गौणी सारोपा का उदाहरण—'इन्दुर्मुखम्' यह वाक्य है। यहां इन्दुपद द्वारा इन्दु से अभिन्न ( एकतापन्न ) मुख की प्रतीति होती है। इन्दुनिष्ठ आह्लादकत्वादि गुणों का सादृश्यसम्बन्ध है। यह लक्षणा गुणों के सादृश्य से होती है अतः गौणी है। आरोप्यमाण ( इन्दु ) और आरोपविषय ( मुख ) इन दोनों के उपादान से सारोपा लक्षणा है। 'इन्दुरेवेदम्' यह गौणी साध्यवसाना का उदाहरण है। सादृश्यसम्बन्ध के कारण यह गौणी है। केवल आरोप्यमाण ( लक्षक ) पद के उपादान से साध्यवसाना है। इन्दुपद से मुखपद का निगरण

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शुद्धं सारोपमुद्दिष्टमायुर्घृतमितीदृशम् ।
शुद्धं साध्यवसानं स्यादायुरेवेदमीदृशम् ॥ १२ ॥
उपादानार्पणद्वारे द्वे चान्ये इति षड्विधा ।

गरणं पुनश्च मुखतादात्म्यप्रतीतिस्ततः साध्यवसाना ॥ ११ ॥

शुद्धामुदाहरति—शुद्धमिति । 'आयुर्घृतम्' इतीदृशं शुद्धसारोपं चोद्दिष्टम् । अत्रायुष्कारणं घृतमिति लक्ष्यते । कार्यकारणभावश्च सम्बन्धः । सादृश्येतरसम्बन्धादियं लक्षणा शुद्धा । लक्ष्यलक्षकयोर्द्वयोरुपादानाच्च सारोपा । आरोपेण सह वर्तत इति सारोपा । 'आयुरेवेदं पीयते' इतीदृशं वाक्यं शुद्धं साध्यवसानं च । अत्र कार्यकारणभावरूपसादृश्येतरसम्बन्धाच्छुद्धा लक्षणा । केवलमारोप्यमाणपदस्य चोपादानाच्च साध्यवसाना । साध्यवसानालक्षणमुक्तम् ॥ १२ ॥

शुद्धाभेदान् व्याचष्टे—उपादानेति । उपादीयते स्वार्थो गृह्यतेऽनेनेत्युपादानं चार्पणं च मुख्यार्थत्यागश्चेत्युपादानार्पणे उपादानार्पणे द्वारे ययोस्ते तादृशे अन्ये द्वे लक्षणे उपादानलक्षणा, अर्पणलक्षणा च स्त इति लक्षणा षड्विधा काव्यप्रकाशे प्रतिपादिता । अर्पणलक्षणैव लक्षणालक्षणेत्युच्यते । अनयोर्लक्षणे साहित्यदर्पणे—

'मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा' ॥ इति ।
'अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये ।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा' ॥ इति च ।

है और फिर दोनों में तादात्म्य की प्रतीति होती है ॥ ११ ॥

अब शुद्धा लक्षणा के उदाहरण देखिए—'आयुर्घृतम्' यह वाक्य शुद्ध सारोपा का उदाहरण है । आयु को बढ़ानेवाला घृत ही है यह लक्ष्यार्थ है । कार्यकारणभावसम्बन्ध है । सादृश्यसम्बन्ध से भिन्न कार्यकारणभावसम्बन्ध होने से शुद्धा लक्षणा है । लक्ष्य व लक्षक इन दोनों पदों के उपादान के कारण सारोपा लक्षणा है । 'आयुरेवेदं पीयते' यह वाक्य शुद्धा साध्यवसाना का उदाहरण है । कार्यकारणभाव सम्बन्ध के कारण शुद्धा है । केवल आरोप्यमाण ( लक्षक ) पद के ही उपादानसे साध्यवसाना है ॥ १२ ॥

अब शुद्धा के भेद बतलाये जाते हैं—शुद्धा के सारोपा व साध्यवसाना ये दो भेद उपादानलक्षणा और अर्पण लक्षणा के कारण चार भेद हो जाते हैं । इनमें दो गौणी के भेद मिलाने पर लक्षणा के छै भेद होते हैं । लक्ष्यार्थबोध में मुख्यार्थ का बोध हो तो उपादान लक्षणा होती है । लक्ष्यार्थ के बोध में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कुन्ता विशन्ति गङ्गायां घोषो निवसतीति च ॥ १३ ॥

'स्वसमर्पणेन परमार्थोपस्थापनमुपलक्षणम् । तथा च काव्यप्रकाशमतेन लक्षणाया इमे षड्भेदाः–गौणी सारोपा, गौणी साध्यवसाना, शुद्धा सारोपोपादानलक्षणा, शुद्धा सारोपार्पणलक्षणा, शुद्धा साध्यवसानोपादानलक्षणा, शुद्धा साध्यवसानार्पणलक्षणा चेति । ननु–'गोवाहीकसाधारण्येन गाव एते समानीयन्ताम्, गावः समानीयन्ताम्, इत्युपादानसारोपसाध्यवसानयोरुदाहरणद्वयसम्भवाद्गौण्यामप्युपादानार्पणरूपभेदद्वयोपपत्तिः इति चेन्न । स्वसादृश्यस्य स्वावृत्तित्वेन तत्रोपादानाद्यसम्भवात् । क्रमेणोदाहरति—कुन्ता इति । 'कुन्ता विशन्ति' इत्युपादानलक्षणाया उदाहरणम् । अत्र कुन्तानां प्रवेशान्वयसिद्ध्यर्थं तद्वन्त पुरुषा लक्ष्यन्त इति कुन्तार्थरूपमुख्यार्थस्याप्युपादानमित्युपादानलक्षणा । 'गङ्गायां घोषो निवसति' इत्यत्र च गङ्गारूपमुख्यार्थत्यागेन तीरार्थबोध इति मुख्यार्थार्पणादर्पणलक्षणा । उपादानसारोपा यथा—'कुन्ताः पुरुषाः प्रविशन्ति' इति, उपादानसाध्यवसाना यथा–'कुन्ताः प्रविशन्ति' इति । अर्पणसारोपा यथा—'आयुर्घृतम्' इति, अर्पणसाध्यवसाना यथा–'आयुरेवेदम्' 'गङ्गायां घोष' इति चेति प्रत्येतव्यम् । उपादानलक्षणाऽजहत्स्वार्था, अर्पणलक्षणा च जहत्स्वार्थेति शास्त्रान्तरे संज्ञा । वेदान्तिनां मते जहदजहत्स्वार्थापि स्वीक्रियते । यथा वेदान्तपरिभाषायाम्–'यत्र हि विशिष्टवाचकशब्द एकदेशं विहायैकदेशे वर्तते तत्र

---

मुख्यार्थ का बोध न हो तो अर्पणलक्षणा होती है। इसका नाम लक्षणलक्षणा भी है। गौणी सारोपा, गौणी साध्यवसाना, शुद्धा सारोपोपादानलक्षणा, शुद्धा सारोपार्पणलक्षणा, शुद्धा साध्यवसानोपादानलक्षणा, शुद्धा साध्यवसानार्पणलक्षणा ये काव्यप्रकाश के मत से लक्षण के छै भेद हैं, गौणी के उपादान लक्षणा व अर्पणलक्षणा ये भेद नहीं होते। उदाहरण देखिए—'कुन्ताः प्रविशन्ति' यह उपादानलक्षणा का उदाहरण है। कुन्तों ( भालों ) का प्रवेश बतलाने के लिये कुन्तधारी पुरुषों का बोध होता है। इस लक्ष्यार्थ में कुन्तरूप मुख्यार्थ का भी बोध होने से उपादान लक्षणा है। 'गङ्गायां घोषः' यहां अर्पणलक्षणा है। गङ्गापदसे तीर की प्रतीति होती है। तीर ( लक्ष्यार्थ ) के बोधमें गङ्गापद अपने मुख्यार्थ ( प्रवाह ) का त्याग ( अर्पण ) कर देता है। अतः अर्पणलक्षणा है। 'कुन्ताः पुरुषाः प्रविशन्ति' यह उपादानसारोपा का, 'कुन्ताः प्रविशन्ति' यह उपादानसाध्यवसाना का, 'आयुर्घृतम्' यह अर्पण साध्यवसाना का उदाहरण है। अन्य शास्त्रों में उपादान लक्षणा को अजहत्स्वार्था और अर्पणलक्षणा को जहत्स्वार्था कहा है। वेदान्तशास्त्र में जहदजहत्स्वार्था

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्ष्यलक्षकवैशिष्ट्याद्द्विविधा लक्षणा पुनः ।
सरसं काव्यममृतं विद्या स्थिरतरं धनम् ॥ १४ ॥

जहदजहल्लक्षणा यथा 'सोऽयं देवदत्त' इति । यथा वा 'तत्त्वमसि श्वेतकेतो' इत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येनान्तःकरणविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः,' इति । यद्यप्यस्मिन्वेदान्तवाक्ये तु धर्मराजाध्वरीन्द्रो वेदान्तपरिभाषाकारो लक्षणां न स्वीकुरुते तथापि 'सोऽयं देवदत्तः' इति वाक्ये तूक्तलक्षणां स्वीकुरुत एव । इयमेव भागत्यागलक्षणा । एतन्मतानुसारेणैव वृत्तिवार्त्तिककारेणाप्पय्यदीक्षितेन ग्रामैकदेशदाहादौ सति 'ग्रामो दग्धः, पुष्पित वनम्' इत्यादावियं लक्षणा स्वीकृता ॥ १३ ॥

पूर्वोक्तसिद्धसाध्यलक्षणाद्वयभेदावाह—लक्ष्येति । लक्ष्यं च लक्षकं च लक्ष्यलक्षके, तयोर्वैशिष्ट्यं विशेषणवत्त्वं तद्रूपं यद्वैशिष्ट्यं विशेषस्तस्मात् । विशेषणविशिष्टलक्ष्यलक्षकाभ्यां सा लक्षणा पुनर्द्विविधेति भावः । क्रमेणोदाहरति—सरसमिति । 'अमृतं सरसं काव्यमस्ति' इति वाक्यं विशिष्टलक्ष्योदाहरणम् । अत्रामृतकार्यकारित्वेन

---

लक्षणा भी मानी गई है । 'सोऽयं देवदत्तः वह यही देवदत्त है', 'तत्त्वमसि श्वेतकेतो !—हे श्वेतकेतु ! तुम उसी ईश्वर के रूप हो' ये जहदजहल्लक्षणा के उदाहरण हैं । लक्ष्यार्थबोध में कुछ मुख्यार्थ का त्याग व कुछ मुख्यार्थ का उपादान होने से इसका नाम जहदजहल्लक्षणा है । 'तत् त्वमसि' इस वाक्यमें तत् पदसे सर्वज्ञत्वादिगुणविशिष्ट चेतन का और त्वंपद से अल्पज्ञत्वादि विशिष्ट चेतन का बोध होकर पुनः ( चेतनत्व ) का बोध होता है । मुख्यार्थ में से सर्वज्ञत्वादिका त्याग वा चेतनपदार्थ का ग्रहण करने से यहां उदाहरणकी संगति है । इसीको भागत्यागलक्षणा भी कहते हैं । यद्यपि वेदान्तपरिभाषाकार उक्तवाक्य में इस लक्षणा को नहीं मानते तथापि अन्य वेदान्तियों ने उक्तस्थल में यह लक्षणा अवश्य मानी है । इस वेदान्तमत के अनुसार वृत्तिवार्तिककार अप्पय्यदीक्षित ने भी 'ग्रामो दग्धः' 'पुष्पितं वनम्' इत्यादि वाक्योंमें जहदजहल्लक्षणा मानी है ॥ १३ ॥

पहिले सिद्धा व साध्या लक्षणा बतलाई गई थी, अब उनके भेद बताये जाते हैं । लक्ष्य व लक्षक पदों के विशेषण लगा देनेपर विशेषणवती सिद्धा व विशेषणवती साध्या ये दो भेद लक्षणा के और हो सकते हैं । उदाहरण देखिए—'अमृतं सरसं काव्यम्' सरस काव्य ही अमृत है, यहां लक्ष्यपद के विशेषण लगाया गया है । अमृत पद से सरस विशेषण से युक्त काव्य में सुखजनकता

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्बन्धेनामृतपदेन सरसविशेषणविशिष्टे काव्ये सुखजनकत्वं लक्ष्यत इति विशिष्टं लक्ष्यम्। 'स्थिरतरं धनं विद्या' इति विशिष्टलक्षकपदार्थोदाहरणम्। अत्र स्थिरतरं धनमिति पदद्वयेन विशिष्टधनकार्यकर्तृत्वसम्बन्धेन विद्यायां सुखजनकत्वं लक्ष्यते। लक्षकं धनमिति पदं विशेषणान्वितमित्यपरोदाहरणम्। अत्र प्रथमोदाहरणे विशिष्टकाव्योद्देशेनामृतत्वं विधेयमिति विशिष्टोद्देश्यवाचकपदनिष्ठत्वेन सिद्धा विशेषणवती, द्वितीयोदाहरणे च विद्योद्देशेन स्थिरतरधनत्वं विधेयमिति विशिष्टविधेयवाचकपदनिष्ठतया विशेषणवती साध्या लक्षणा। एवं 'गम्भीरायां नद्यां घोषः' इत्यादौ विशिष्टे विधेयघोषान्वयिवाचके गङ्गापदे लक्षणा। साध्याङ्गलक्षणा विशेषणवत्यपि विज्ञेया। अत्र मीमांसकाः समुदाये शक्तिमङ्गीकृत्य वाक्यनिष्ठां लक्षणामामनन्ति। नैयायिकाश्च 'गम्भीरायां नद्यां घोषः' इत्यादौ नदीपदमेव विशिष्टनदीतीरे लाक्षणिकं गम्भीरपदं च तात्पर्यग्राहकमिति नात्र वाक्यनिष्ठा लक्षणा, वाक्ये शक्तेरभावात्, एवमेव बहुव्रीहितत्पुरुषसमाहारद्वन्द्वाव्ययीभावसमासेषु लक्षणा, द्वन्द्वकर्मधारयसमासयोश्च नास्ति लक्षणा' इति प्रतिपादयन्ति ॥ १४ ॥

---

की प्रतीति होती है। तत्कार्यकारित्व सम्बन्ध है। लक्ष्यपदार्थ काव्य के सरस विशेषण लगाने से यह विशिष्टलक्ष्य का उदाहरण है। 'स्थिरतरं धनं विद्या' यह विशेषण वाले लक्षकपदार्थ का उदाहरण है। विशिष्टधनकर्तृत्व सम्बन्ध है। विद्या में सुखजनकता का बोध लक्ष्यार्थ है। प्रथम उदाहरण में काव्य उद्देश्य है व अमृत विधेय है। उद्देश्य ( काव्य ) के विशेषण लगाने से विशेषणवती सिद्धा लक्षणा है। द्वितीय उदाहरण में विद्यापद उद्देश्य है और स्थिरतर धन विधेय है। विधेयपद में विशेषण होने के कारण विशेषणवती साध्या लक्षणा है। 'गम्भीरायां नद्यां घोषः' यहां साध्याङ्गलक्षणा भी हो सकती है, किन्तु ग्रन्थकारने इसका निर्देश नहीं किया। मीमांसक लोग विशेषणवती लक्षणा को समुदाय में शक्ति मानकर वाक्यनिष्ठा का उदाहरण कह देते हैं। किन्तु नैयायिक इस बात को नहीं मानते। वे कहते हैं कि नदीपद ही विशिष्ट नदीके तीर का लक्षक है, और गम्भीरपद तात्पर्यग्राहक है। अतः वाक्यनिष्ठा लक्षणा नहीं होती। वाक्यमें शक्ति भी नहीं रहती। इसी प्रकार बहुव्रीहि, तत्पुरुष, समाहारद्वन्द्व, अव्ययीभाव समास में लक्षणा होती है और द्वन्द्व व कर्मधारय समास में लक्षणा नहीं होती, यह भी नैयायिकों का मत जान लेना चाहिये ॥ १४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तथा सहेतुस्तथाभेदभिन्ना च कुत्रचित् ।
सौन्दर्येणैव कन्दर्पः सा च मूर्तिमती रतिः ॥ १५ ॥
शब्दे पदार्थे वाक्यार्थे संख्यायां कारके तथा ।

---

पुनरपि लक्षणाया भेदद्वयमाह—तथेति । तथोक्तभेदवत् । हेतुना सहिता सहेतुर्लक्षणा । अतथा हेतुशून्या चेति भेदाभ्यां भिन्नापि लक्षणा कुत्रचित्प्राप्यते । लक्ष्यार्थबोधने सहेतुका निर्हेतुकेति द्वावन्यावपि भेदौ स्त इति भावः । उदाहरति—सौन्दर्येति । एष पुरुषः सौन्दर्येण रमणीयतया कन्दर्पः काम एव । अत्र कन्दर्पसदृशः सुन्दर इति लक्ष्यार्थः । 'सौन्दर्येण' इति हेतोरुपादानात्सहेतुका । सा च कामिनी मूर्तिमती शरीरधारिणी रतिः कामप्रिया । अत्र सौन्दर्यरूपहेत्वनुपादानान्निर्हेतुका लक्षणा ॥ १५ ॥

उपाध्यन्तरेणलक्षणाया भेदान्तरं प्रतिपादयति-शब्द इति । शब्दे पदवाक्यान्यतररूपे लक्षणा यथा—'अग्नेरग्निर्नष्टः' इति । अत्राग्निपदेनार्चिर्लक्ष्यते । 'मुखं चन्द्रः' इत्यत्र पदार्थे लक्षणा । मुखपदार्थेन चन्द्रतादात्म्यं लक्ष्यते । 'यद् गुरुवचनमाकर्णयन्ति तदमृतं पिबन्ति' इति वाक्यार्थलक्षणाया उदाहरणम् । वाक्यार्थयोरैक्यारोपात् । 'यावन्तो युद्धप्रियास्तावन्तोऽर्जुनाः' इति संख्याया लक्षणोदाहरणम् । अत्रैकस्मिन् पुरुषे बहुत्वसंख्यया पूज्यत्वं लक्ष्यते । तथा 'स्थाली पचति' इत्यधिकरणकारके लक्षणा ।

---

लक्षणा के दो भेद और भी हो सकते हैं । लक्ष्यार्थ के बोध में हेतु का उपादान होने पर सहेतुका और हेतु का उपादान न होने पर निर्हेतुका लक्षणा होती है । 'यह पुरुष सौन्दर्य के कारण कामदेव ही है' इस स्थान में सौन्दर्यरूप हेतु का निर्देश होने से सहेतुका लक्षणा है । 'वह कामिनी मूर्त्तिमति रति ही है' इस वाक्य में सौन्दर्यरूप हेतु का निर्देश न होने से निर्हेतुका लक्षणा है ॥१५॥

आधारभेद से लक्षणा के भेद किये जाते हैं—शब्द में, पदार्थ में, वाक्यार्थ में, संख्या में, कारक में और लिङ्ग में लक्षणा होती है । अतः इसके अनेक भेद हैं । यह लक्षणा अलङ्कारों की सहायक होती है । 'अग्नेरग्निर्नष्टः' यहां अग्नि शब्द में लक्षणा है । अग्निपद से उसकी ज्वाला ( अर्चिः ) का बोध होता है । 'मुखं चन्द्रः' यहां पदार्थ में लक्षणा है । मुख पद के अर्थ से चन्द्रतादात्म्य की प्रतीति होती है । 'यदगुरुवचनम्०' जो गुरु का वाक्य सुनते हैं वे अमृत पीते हैं । यहां दोनों वाक्यार्थों में एकता का आरोप करने से वाक्यार्थ में लक्षणा है । 'यावन्तो युद्धप्रियाः०' यहां एक पुरुष में बहुत संख्या का आरोप करने से पूजनीयता ( आदर ) का बोध होता है अतः यह संख्यागतलक्षणा का उदाहरण है । 'स्थाली पचति' स्थाली में पकाता है, यहां अधिकरण ( सप्तमी )

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लिङ्गे चेयमलङ्काराङ्कुरबीजतया स्थिता ॥ १६ ॥

'हस्तिनी' इत्यत्र लिङ्गे लक्षणा। अत्र हस्तिनीपदेन हस्तिवदस्य पुंल्लिङ्गता प्रतीयते। हस्तोऽस्यास्तीति हस्ती, स्त्री चेत् हस्तिनीति व्युत्पत्तेः। एवमुक्तस्थले: विषयं लक्षणा भवति। लक्षणानिरूपणफलं व्याचष्टे—इयं लक्षणालङ्काराङ्कुरस्यालङ्कार-प्रादुर्भावस्य बीजतया हेतुतया स्थिता स्वीकृता। अलङ्कारपदं ध्वनिरसादेरप्युपलक्षणम्। इयं लक्षणा रूपकसमासोक्त्यतिशयोक्त्यादीनामलङ्काराणां प्रसविनी। तथा हि—उपादानलक्षणा अर्थान्तरसंक्रमितवाच्यध्वन्युपयोगिनी, अर्पणलक्षणा चात्यन्ततिरस्कृतवाच्यध्वन्युपयोगिनी, गौणी सारोपा रूपकालङ्कारोपयोगिनी, गौणसाध्यवसाना ऽतिशयोक्तिप्रयोजिका, शुद्धसाध्यवसाना च सहकारिव्युदासेन कार्यकारित्वरूपसामर्थ्यातिशयरूपव्यङ्ग्योपदर्शिकेत्यादि स्वयमूहनीयम्। एवं लक्षणाया लक्षणं भेदोपभेदाश्च प्रदर्शिताः। साहित्यदर्पणे चास्या अशीतिभेदाः। तथाहि रूढिभेदा इमे—सारोपा उपादानलक्षणा, सारोपा लक्षणलक्षणा, साध्यवसानोपादानलक्षणा, साध्यवसाना लक्षणलक्षणा, गौणीसारोपोपादानलक्षणा, गौणी सारोपा लक्षणलक्षणा, गौणी साध्यवसानोपादानलक्षणा, गौणी साध्यवसाना लक्षणलक्षणा चेति। एत एवाष्टौ भेदाः प्रयोजने विज्ञेयाः। अष्टविधा प्रयोजनलक्षणा व्यङ्ग्यस्य गूढागूढत्वेन षोडशविधा भवन्ति। पुनश्च सा धर्मिधर्मगतत्वेन प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्विधा प्रयोजने जायते। एषा

---

कारक में लक्षणा है। 'हस्तिनी' यहां पुंलिङ्ग में लक्षणा है। क्योंकि स्त्रीबोधक हस्तिनीपद से पुंल्लिङ्ग हस्ती का बोध हो जाता है। हस्तीपद को स्त्रीलिङ्गार्थ बनाने के लिये उसी पद से ङीप् प्रत्यय किया जाता है। लक्षणा का रस, ध्वनि व अलङ्कारों में उपयोग होता है। अर्थान्तरसंक्रमितवाच्य ध्वनि में उपादान-लक्षणा का, अत्यन्ततिरस्कृतावाच्यध्वनि में अर्पणलक्षणा का, रूपक में गौणी-सारोपा का, अतिशयोक्ति में गौणी साध्यवसाना का, व्यङ्ग्य में प्रयोजनवती लक्षणा का उपयोग है। इस प्रकार लक्षणा के लक्षण भेद व उपभेद बतलाये गये। साहित्यदर्पण में लक्षणा के अशीति ( अस्सी ) भेद किये हैं—रूढि के कारण लक्षणा के आठ भेद ये हैं—सारोपा उपादानलक्षणा, सारोपा लक्षण-लक्षणा, साध्यवसाना उपादानलक्षणा, साध्यवसाना लक्षणलक्षणा, गौणीसारोपा उपादानलक्षणा, गौणी सारोपा लक्षणलक्षणा, गौणीसाध्यवसाना उपादान लक्षणा, गौणीसाध्यवसाना लक्षणलक्षणा। ये आठ भेद प्रयोजनवती के भी होते हैं। प्रयोजनलक्षणा के आठ भेदों में व्यङ्ग्य गूढ-अगूढ रूप से रहता है अतः प्रयोजनवती के सोलह भेद हुए। पुनः वह प्रयोजन धर्मी व धर्म में रहता है अतः इसके बत्तीस भेद जानिये। रूढि के आठ भेद मिलाये जाने पर लक्षणा के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति नवसंख्यः सुखयतु ॥ १७ ॥

इति श्रीजयदेवकविविरचिते चन्द्रालोकालङ्कारे लक्षणानिरूपणो नाम नवमो मयूखः ।

---

चाष्टाभी रूढिलक्षणाभिः सह चत्वारिंशत्प्रकारा भवन्ति । ततः पदवाक्यगतत्वेनाशीतिभेदभिन्ना भवति ॥ १६ ॥

अथ नवममयूखसमाप्तिं व्याचष्टे—महादेव इति । महादेवः सत्रेति प्रथममयूखीयः षोडशश्लोक एव पूर्ववदत्रापि समाप्तौ पठनीयः । तस्योत्तरभागे तु—'मयूखस्तेनासौ सुकविजयदेवेन रचिते चिरं चन्द्रालोके महति नवसंख्यः सुखयतु'॥ इति विशेषः । अन्यत्पूर्ववत् ॥ १७ ॥

इति श्रीजयपुरपुरन्दरमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्टवंश्येन, वेदान्तभूषणोपाधिविभूषितेन भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीयप्रत्नतत्त्वान्वेषणपरायणेन भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमितिजुषा, जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासीतिसमाख्यायाश्चन्द्रालोकव्याख्याया नवममयूखे पर्यवसानम् ॥ ९ ॥

---

चालीस भेद होते हैं। ये चालीस भेद पद व वाक्यनिष्ठ होने के कारण अशीति ( अस्सी ) संख्या को प्राप्त करते हैं ॥ १६ ॥

अब कवि नवम मयूख की समाप्ति करता है। 'महादेवः सत्र०' इस प्रथम मयूख के सोलहवें श्लोक के उत्तर भाग में—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति नवसंख्यः सुखयतु' ॥

यह परिवर्तन करके नवम मयूख की समाप्ति करनी चाहिये ॥ १७ ॥

कथाभट्ट श्रीनन्दकिशोर शर्मा साहित्याचार्य की कथाभट्टीया नामक हिन्दी व्याख्या में चन्द्रालोक का नवम मयूख समाप्त हुआ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## दशमो मयूखः

**धर्मं कंचित् पुरस्कृत्य प्रायः शब्दः प्रवर्तते ।**

अथ लक्षणां निरूप्याधुना शाब्दबोधमूलभूतां मुख्यां वृत्तिमभिधां निरूपयति-धर्ममिति । शाब्दबोधे मुख्या वृत्तिरभिधा । सा चानादिः । वृत्त्या पदजन्यपदार्थस्मरणं व्यापारः । एतस्याकाङ्क्षादिसहकारिशाब्दबोधः फलम् । एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानं शाब्दबोध उच्यते । यथा 'देवदत्तो गृहं गच्छति' इत्यत्र देवदत्ते गमनक्रियाऽभेदज्ञानम् । अत्र षट् पदानि सन्ति—देवदत्त १ सु २ गृह ३ अम् ४ गम् ५ तिप् ६ । पदार्थाश्च—देवदत्तत्व १ देवदत्त २ समवाय ३ पुंस्त्वत्व ४ पुंस्त्व ५ समवाय ६ एकत्वत्व ७ एकत्व ८ समवाय ९ गृहत्व १० गृह ११ समवाय १२ क्लीबत्वत्व १३ क्लीबत्व १४ समवाय १५ एकत्वत्व १६ एकत्व १७ समवाय १८ कर्मत्व १९ कर्म २० समवाय २१ गमनत्व २२ गमन २३ समवाय २४ कर्तृत्व २५ वर्त्तमानकाल २६ कर्तृगतैकत्वत्व २७ एकत्व २८ समवाय २९ देवदत्तस्य कर्तर्यभेदः ३०, अन्यपदार्थस्य गमनक्रियायां कर्मक्रियाभावसम्बन्धश्च सन्ति। एकसम्बन्धिज्ञानमंपरसम्बन्धिस्मारकमिति रीत्या पदज्ञानात्पदार्थस्मरणं जायते । शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिः । सा च वृत्तिरभिधालक्षणाव्यञ्जनाभेदात्त्रिधा । व्यञ्जनालक्षणे तावन्निरूपिते साम्प्रतमभिधाख्या वृत्तिर्निरूप्यते। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा संकेतः, तद्रूप एव पदेन सह पदार्थस्य

---

अब ग्रन्थकार लक्षणा का निरूपण करके शाब्दबोध की प्रधान कारण मुख्य वृत्ति अभिधा का निरूपण करता है—

शाब्दबोध कराने में अभिधाशक्ति ही प्रधान है । यह अभिधा शक्ति अनादि काल से चली आ रही है । वृत्ति से पद के अर्थ का ज्ञान होना ही वृत्ति का व्यापार माना जाता है । आकाङ्क्षादि के सहित शाब्दबोध होना इस व्यापारका फल है । पदों के आपस में संसर्ग सहित ज्ञान को शाब्दबोध कहते हैं । 'देवदत्त गृह को जाता है' इस शाब्दबोध में छै पद व ३० पदार्थ हैं । जो संस्कृत-टीकापौर्णमासी में लिखे गये हैं । एक पदार्थ के सम्बन्धी को जान लेने पर दूसरे पदार्थ के सम्बन्धी का ज्ञान हो जाता है, इस नियम से पदज्ञान से पदार्थ का स्मरण हो जाता है । शाब्दबोध के कारण इस पदार्थस्मृति के अनुकूल पद व पदार्थ के सम्बन्ध को वृत्ति कहते हैं । इस वृत्ति के अभिधा, लक्षणा व व्यञ्जना के कारण तीन भेद होते हैं । इनमें व्यंजना वा लक्षणा का निरूपण किया जा चुका है । अब अभिधा का निरूपण किया जाता है । इस विषय में नैयायिक

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्बन्धः शक्तिः । आधुनिके च नाम्नि शक्तिरस्त्येव । 'एकादशेऽह्नि पिता नाम कुर्यात्' इतीश्वरेच्छायाः सत्त्वात् । इयं शक्तिरीश्वरेच्छारूपत्वाद् गुणान्तर्गता' इति न्यायविदः । मीमांसकास्तु 'शक्तिः पदार्थान्तरम् । अस्या एव संकेतनाम्ना व्यवहारः सा चेयं शक्तिः प्रतिपदं भिन्नतयाऽनन्तानादिश्च । आधुनिकसंज्ञाशब्दाश्च पारिभाषिकाः, 'सर्वे सर्वार्थवाचकाः' 'इति न्यायेन वा तत्तदर्थबोधकाः' इत्याहुः । वैयाकरणानां चायं सिद्धान्तसारः—'वाच्यवाचकभावरूपः पदपदार्थयोः सम्बन्धः शक्तिः । शक्तिग्राहकं च पदपदार्थयोरध्यासमूलं तादात्म्यम् । एतदेव च संकेतः । आधुनिकसंकेतस्थले द्वादशेऽह्नि क्रियमाणनामस्थले च लक्षणयैव बोधः' इति लघुमञ्जूषायां नागेशः । वेदान्तिनां मतं मीमांसकानुसारि । तथा हि-'शक्तिः पदार्थान्तरम् । सा च विविधानादिश्च । 'परास्य शक्तिर्विविधैव श्रूयते' 'शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचराः' इति श्रुतिस्मृतिवचनान्यपि पृथक्शक्तिसद्भावे प्रमाणम् ।

---

आचार्यों का मत यह है कि—'इस शब्द से यह अर्थ जानना चाहिये' इस ईश्वरेच्छा को ही संकेत कहते हैं । पद का पद के अर्थ के साथ जो सम्बन्ध है, वह संकेत ही है और यह संकेत ही अभिधा शक्ति है । आधुनिक संकेतित नाम आदि भी ईश्वर की इच्छा से कल्पित किये जाते हैं । क्यों कि 'पिता एकादशवें दिन अपनी सन्तान का नामकरण करें' इस स्मृति के वाक्य से नाम रखने में भी ईश्वर की आज्ञा ही कारण है यह अभिधा शक्ति ईश्वर की इच्छारूप होने से रूप आदि चौबीस गुणों के अन्तर्गत है । मीमांसकमत यह है कि 'शक्ति एक पृथक् ही पदार्थ है । इसी का संकेत नाम से व्यवहार किया गया है । यह शक्ति प्रत्येक पद में भिन्न भिन्न रूप से रहती है । यह अनन्तरूपा है और अनादि काल से प्रचलित है । आधुनिक संज्ञावाचक शब्द तो पारिभाषिक हैं । अथवा 'सब शब्द सभी अर्थों के बोधक हो सकते हैं' इस कारण वे अर्थ बोध करा देते हैं ।' वैयाकरण विद्वानों का यह सिद्धान्त है कि 'वाच्य वा वाचकरूप पद व पदार्थ के सम्बन्ध को शक्ति कहते हैं । पद का पदार्थ के साथ तादात्म्य (एकता) सम्बन्ध शक्ति का ग्राहक है । यह सम्बन्ध ही संकेत है । आधुनिक संज्ञाशब्दों में लक्षणा से अर्थ बोध होता है' यह नागेश ने वैयाकरणमध्यमंजूषा में लिखा है । वेदान्तियों का मत प्रायः मीमांसकमत से मिलता हुआ-सा है—जैसे शक्ति एक पृथक् पदार्थ है ।' वह अनादि व अनन्त है । इसमें 'परास्य शक्तिः' 'शक्तयः सर्व०' यह श्रुति व स्मृति के वाक्य प्रमाण हैं । जैसे प्रत्येक वस्तु में अपनी २ पृथक् शक्ति होती है । वैसे ही प्रत्येक पद में अर्थबोध-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यथा पदार्थमात्रे स्वस्वकार्यकारणसामर्थ्यभिन्नं तथैव पदेऽपि तत्तत्पदजन्यपदार्थज्ञान रूपकार्यानुमेयाऽर्थबोधकता शक्तिः । इयांस्तु विशेषः—'वस्तुशक्तिः स्वरूपतः कार्यकर्त्री, पदे तु ज्ञातैव शक्तिः कार्यकर्त्री' इति । नव्यास्तु इच्छैव शक्तिः । तेनाधुनिकसंकेतितेऽपि शक्तिरस्त्येव । गगरीत्याद्यपभ्रंशेषु तु शक्तिभ्रमाच्छाब्दबोधः । तत्रापि शक्तिरस्तीति केचित् । आलङ्कारिकाश्च 'संकेतितार्थबोधिका अभिधा ।' 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्यादिप्रवर्तकोपदेशरूपः, 'अस्यायं वाचकोऽस्यायं वाच्यः इत्यादिसम्बन्धो वा संकेतः शक्तिग्राहकः' इति मन्वते । संकेतग्रहप्रकारस्तु वृद्धव्यवहारादिनानाकारणेभ्यो भवति । यथा—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥' इति ।

एकेन 'गामानय' इत्युक्तेऽपरस्मिंश्च गवानयनकर्मणि प्रवृत्ते बालोऽस्य वाक्यस्य 'सास्नादिमत्पिण्डानयनमर्थः' इति प्रवृत्तपुरुषक्रियया प्रथमं जानाति । ततश्च 'गां बधान' 'अश्वमानय' इति वाक्यद्वयोक्ताभ्यां गोबन्धनाश्वानयनरूपाभ्यामावापोद्वापाभ्यां बालो गोपदस्य 'सास्नादिमानर्थः' आनयनपदस्य च 'आहरणमर्थः' इति संके-

---

कतारूपी शक्ति भिन्नरूप से रहती है । विशेषता यह है कि वस्तुओं की शक्ति स्वरूप से ( स्वयं ) कार्य करती है और पदों की शक्ति का ज्ञान होने पर वह कार्य ( अर्थबोध ) में समर्थ होती है । नवीन आचार्य कहते हैं कि 'केवल इच्छा ही शक्ति है । इस मत के मानने से कल्पित संज्ञाशब्दों में भी संकेत प्राप्त हो जाता है । गगरी आदि अपभ्रंश शब्दों में तो शक्ति के भ्रम से अर्थ का बोध होता है' । कोई कोई लोग अपभ्रंश शब्दों में भी शक्ति को मान लेते हैं । आलङ्कारिकों का सिद्धान्त है कि 'संकेतित अर्थ की बोधिका अभिधा शक्ति है । 'इस शब्द का यह अर्थ जानना चाहिये' इस न्याय से वा 'यह पद इस अर्थ का वाचक है और यह अर्थ इस का वाच्य है' इत्यादि सम्बन्ध ही संकेत है और शक्ति का ग्राहक है ।' संकेत का ग्रहण वृद्ध पुरुषों के व्यवहार वा अन्य अनेक कारणों से होता है । जैसे—व्याकरण, उपमान ( सादृश्य ), कोश, वृद्धों के वचन, व्यवहार, वाक्य की समाप्ति का न होना, विवरण, प्रसिद्धपद का सांनिध्य आदि शक्तिग्राहक माने गये हैं । 'गाय लाओ' इस कथन से गाय लाते हुए आदमी को देखकर बालक जानता है कि उक्त वाक्य का 'गाय लाना' यह अर्थ है । इस के बाद 'गाय को बांध दो, और अब अश्व लाओ' इन वाक्यों के अनुसार गृहस्थ को बांधकर अश्व लाने पर इन दोनों क्रियाओं को देखनेवाला बालक गोपद

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यथार्थं स्पष्टमाचष्टे शब्दस्तामभिधां विदुः ॥ १ ॥

तमवगच्छति । एवमन्येऽपि संकेतग्रहोपाया अवसेयाः । एवं संकेतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधोच्यते काव्यविद्भिः । यद्यपि संकेतः सनातनः, शक्तिस्तु प्रयोगकाले प्रकटीभवतीति निर्णयः कोविदानन्दे (आशाधरनिर्मिते), तथापि व्यवहारे शक्तिसंकेतयोरभेदनिर्देशः । कोविदानन्दे शक्तिग्राहकाणीमानि—व्याकरणं, कोशः, निरुक्तं, मुनिवाक्, व्यवहारः, व्याख्यानं, वाक्यशेषः, प्रसिद्धार्थपदसन्निधिः, उपमानं चेति । अथ प्रस्तुतग्रन्थयोजना-शब्दो गवादिशब्दः प्रायो बाहुल्येन कचिद् धर्मं जात्यादिरूपं पुरस्कृत्यैव द्वारीकृत्यैव प्रवर्ततेऽर्थबोधने समर्थो भवति । समानेष्वनुगतो व्यावर्तकश्च धर्म इत्युच्यते । तत्र धर्म एव तदवच्छिन्ने वा शक्तिः, न केवलव्यक्ताविति भावः । एवं सति धर्मस्य सर्वत्रावश्यकत्वे प्रायःशब्दस्य प्रयोगोऽनुपपन्न इति चेन्न । धर्मस्य नानात्वेनैकधर्मस्यापरत्राभावेन प्रायःपदप्रयोगसार्थक्यात् । आकाशादौ च धर्मस्य प्रवृत्तिनिमित्तत्वाभाव इति मताश्रयणाद्वा । शब्दो धर्मद्वारार्थबोधको यया वृत्त्या स्पष्टं साक्षादर्थमाचष्टे ब्रूते तां वृत्तिमभिधां मुख्यां वृत्तिं विदुर्जानन्ति । बुधा इति शेषः । लक्षणादावेकार्थबोधानन्तरमपरार्थबोधान्न साक्षादर्थबोधकता । संकेतितार्थविषयीभूतबोधजनको व्यापारोऽभिधेति लक्षणम् । शक्यते साक्षादभिधीयतेऽनयेति शक्तिः । धातूनामनेकार्थत्वाच्छक्नोतेः साक्षादभिधार्थत्वम् । तत्र शक्तिर्वृत्तिर्व्यापारः क्रिया चेति वृत्तिपर्यायशब्दाः । आद्या शक्तिः, अभिधा, मुख्या चेति नामान्तराणि । शक्तिविषयभूतोऽर्थश्च-आद्यः, शक्यो वाच्योऽभिधेयो मुख्यार्थश्चेत्युच्यते । अर्थानुसारेण शब्दश्च—आद्यो, वाचकः, शक्तोऽभिधा-

---

का गाय और आनयन पद का ले आना अर्थ समझ जाता है । इस संकेतित अर्थ की बोधिका शक्ति 'अभिधा है' । यद्यपि संकेत प्राचीन है और शक्तिपद प्रयोग के समय प्रकट होता है, यह आशाधरने कोविदानन्द में लिखा है, तथापि व्यवहार में शक्ति व संकेत का अभेद माना गया है । अब प्रस्तुत ग्रन्थ के श्लोक का अर्थ लिखा जाता है । प्रायः किसी जात्यादिरूप धर्म का आश्रय लेकर के ही शब्द अर्थ के बोधन में प्रवृत्त होता है । यह शब्द जिस वृत्ति से साक्षात् ( व्यवधान रहित ) अर्थ का प्रतिपादन करे, वह अभिधा वृत्ति कही जाती है । लक्षणादि वृत्ति से, जो अर्थ जाना जाता है, वह अर्थ अभिधेयार्थ के पश्चात् प्रतीत होता है । अतः वे वृत्तियां साक्षात् अर्थ की बोधिका नहीं मानी जातीं । आद्या शक्ति, अभिधा, वृत्ति, शक्ति, व्यापार व क्रिया, ये शब्द समानार्थक हैं । आद्य, शक्य, अभिधेय, मुख्या, शक्ति ये सब अभिधा के ही नामान्तर हैं । आद्य, शक्य, अभिधेय, वाच्य, मुख्यार्थ ये शब्द अभिधा से प्रतीत मुख्य अर्थ के नाम हैं । इसी प्रकार

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जात्यां गुणेन क्रियया वस्तुयोगेन संज्ञया ।
निर्देशेन तथा प्राहुः षड्विधामभिधां बुधाः ॥ २ ॥

यकश्चेत्युच्यते । अस्य शब्दस्य रूढयौगिकयोगरूढादिप्रकारैनैव भेदा भवन्ति । ते च सप्तदशे ( १७ ) पृष्ठे दृश्याः ॥ १ ॥

धर्मस्य षड्विधत्वेनाभिधायाः षड्विधत्वं व्याचष्टे—जात्येति । जात्या गोत्वरूप-जातिवाचकशब्देन । गुणेन शुक्लत्वादिगुणवाचकशब्देन । क्रियया चलनत्वरूपक्रि-यावाचकपदेन । वस्तुयोगेन दण्डीत्यादिवस्तुवाचकशब्देन । संज्ञया डित्थादिरूप-यदृच्छाशब्देन । तथा निर्देशेन कंसादिनिर्देशवाचकशब्देन च बुधा विद्वांसोऽभिधां षड्विधां विदुः कथयन्ति । ननु सर्वप्रयोजनसंपादकतया व्यक्तिरेव संकेतसहा न जातिरिति चेन्न । आनन्त्याद् व्यभिचारदोषापातात् । सर्वासु गोव्यक्तिषु संकेतेऽन न्तानां गोव्यक्तीनां युगपदुपस्थानाभावादनवस्था स्यात् । एकस्यां गोव्यक्तौ संकेते तु संकेतातिरिक्तगोव्यक्तिज्ञानाभावो भवेत् । किञ्च व्यक्तिशक्तिवादे 'गौः शुक्लः, चलो, डित्थः' इति चतुर्भिरपि पदैरेका सैव गोव्यक्तिरुच्यते । तेन च पदार्थभेदो न स्यात् । तत्र व्यक्तेरेव पदार्थत्वात्तस्याश्च प्रकृते एकत्वात् । तेन जात्याद्युपाधिषु संकेतः । व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते । आक्षेपोऽत्र नानुमानम् । किन्तु

---

उक्त अर्थ के बोधक शब्द के वाच्य, वाचक, शक्त व अभिधायक ये नाम हैं । इस शब्द के रूढ आदि नौ भेद १७ वें पृष्ठ में बतला दिये गये हैं ॥ १ ॥

जात्यादिरूप धर्म के छै भेद होते हैं अत एव अभिधा के छै भेद बतलाये जाते हैं । जातिवाचक, गुणवाचक, क्रियावाचक, वस्तुयोगवाचक, संज्ञावाचक व निर्देशवाचक शब्दों के कारण अभिधाशक्ति के छै भेद होते हैं । अर्थात् जाति, गुण, क्रिया, वस्तुयोग, संज्ञा व निर्देश आदि में संकेत माना गया है । अब यहाँ यह सन्देह होता है कि व्यक्ति का प्रत्यक्ष होता है तथा व्यक्ति ही कार्य में उपयोगिनी होती है । अतः गोत्वरूप जाति में संकेत मानना उचित नहीं, किन्तु व्यक्ति में संकेत मानना चाहिए । इसका उत्तर यह है कि व्यक्ति में संकेत मानने पर आनन्त्य व व्यभिचार दोष आता है । व्यक्तियां अनन्त हैं इस कारण सब व्यक्तियों में संकेतग्रह हो नहीं सकता । एक व्यक्ति में संकेत मानने पर दूसरी व्यक्ति का ज्ञान होना असम्भव है । अतः व्यभिचारदोष होता है । व्यक्ति में संकेत होने से 'गौः, शुक्लः, चलो, डित्थः' इन चारों पदों से भी एक ही व्यक्ति का बोध होगा । अतः उक्त दोषों के कारण जाति आदि उपाधि में ही संकेत मानना चाहिये । जाति व व्यक्ति का अविनाभाव सम्बन्ध होने से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्मरणमित्यालङ्कारिकाः । केचिदत्रानुमानम्, भाट्टास्त्वर्थापत्तिम्, गुरवः समानवित्तिवेद्यताम्, मण्डनमिश्रा जातौ शक्तिं व्यक्तौ लक्षणामाहुः । कुब्जशक्तिवादिनस्तु जातिव्यक्त्योः शक्तिरस्ति परन्तु जातौ घटत्वविशिष्टव्यक्तिस्मरणे शाब्दबोधे चज्ञातव शक्तिरस्ति, व्यक्तौ तु स्वरूपसती हेतुरित्याहुः । गवादिशब्दानामानयनादिकार्यान्विते गवादौ शक्तिरित्यन्विताभिधानवादिनः प्राभाकराः । इतरान्वितघटादौ संसर्गशक्तिरिति भाट्टा अभिहितान्वयवादिनः । मीमांसका जातावेव शक्तिं स्वीकुर्वन्ति । तेषु गङ्गेशोपाध्यायैस्तत्त्वचिन्तामणौ प्रभाकरमतभट्टमतमण्डनाचार्यश्रीकरमतानि समुल्लिखितानि विशेषतया तत्रैव द्रष्टव्यानि । नित्यत्वे सति अनेकसमवेतत्वं जातित्वम् । यथा गोत्वादि । अयं जातिवाचकशब्दः प्राणप्रदो व्यवहारनिर्वाहको भवति। तथोक्तं वाक्यपदीये–'गौः स्वरूपेण न गौर्नाप्यगौः, गोत्वादिसम्बन्धाद्गौः' इति । गौर्गोपदोद्देश्यः सास्नादिमान् पिण्डः । स्वरूपेण जातिरहितव्यक्तिमात्रेण न गौर्न गोव्यवहारनिर्वाहकः । नापि चागौर्गोभिन्नत्वेन व्यवहारनिर्वाहकः । किन्तु गोत्वाभिसम्बन्धाद्गोत्ववत्तया ज्ञानाद्गौर्गोशब्दव्यवहार्यः । जातिशक्तिवादिनामयमभिप्रायः–

जातिद्वारा व्यक्ति का आक्षेप हो जाता है । आलङ्कारिकों ने यहां आक्षेपपद से अनुमान का ग्रहण नहीं किया है, किन्तु आक्षेप पद का वे स्मरण अर्थ मानते हैं । भाट्ट मीमांसकों ने अर्थापत्ति मानी है । गुरु मत में सादृश्य ज्ञान से व्यक्तिज्ञान माना है । मण्डन मिश्र ने जाति में शक्ति और व्यक्ति में लक्षणा मानी है । कुब्जशक्तिवादियों ने लिखा है कि जातिविशिष्टव्यक्ति के बोध में वा शाब्दबोध में शक्तिज्ञान होता है, किन्तु प्रत्येक व्यक्ति में वह शक्ति स्वरूप से ही रहती है । व्यक्ति के अनन्त होने के कारण वह शक्ति जानी नहीं जाती । अन्विताभिधानवादी प्राभाकर मीमांसक कहते हैं कि पदों के अन्वयरूप वाक्यार्थ में शक्ति है । अभिहितान्वयवादी मीमांसकों ने माना है कि पदों के अर्थमात्र में शक्ति है पीछे उनके अन्वय का भी बोध हो जाता है । मीमांसकों ने जाति में ही संकेत माना है । गंगेश उपाध्याय ने तत्त्वचिन्तामणि नामक बृहद्ग्रन्थ में प्रभाकर, भाट्टमत, मण्डनाचार्य व श्रीकर मीमांसकों के मत का सारांश दिया है वह वहां ही देखना चाहिये । जो अनेक व्यक्तियों में रहे तथा नित्य व एक हो वह जाति कही जाती है । जैसे गोत्व, घटत्व आदि जातियाँ हैं । यह जातिवाचक शब्द प्राणपद ( व्यवहार-निर्वाहक )'कहा जाता है । वाक्यपदीय में भी लिखा है कि–जातिरहित केवलव्यक्ति से गोपदद्वारा गो का बोध नहीं होता, किन्तु जाति के सम्बन्ध से ही गो का बोध होता है । जातिशक्तिवादियों का मत है कि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'हिमपयःशङ्खकुन्दादिनिष्ठेषु शुक्लत्वादिषु यद्वशेन शुक्लः शुक्ल इत्यभेदज्ञानं तत् शुक्लत्वादिसामान्यम्। गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादिसामान्यम्। बालवृद्धस्त्रीप्रभृत्युदीरितेषु डित्थादिशब्देषु प्रतिक्षणं भिन्नेषु डित्थाद्यर्थेषु च डित्थत्वाद्यस्ति सामान्यमिति जातावेव संकेतो न गुणादिष्विति। अत्र मीमांसकमतेऽरुचिबीजमिदम्—'चलन्तीं गामानय' इति वाक्ये चलनक्रियोपादानेऽपि तत्र संकेताभावात् 'पुरुषः स्थितां गामानयेत्' इत्यतिप्रसङ्गः स्यात्। गुणः शुक्लादिः। शुक्लादिना हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो विशिष्यते। गुणलक्षणं हि 'वोतो गुणवचनात्' ( ४।१।४४ ) इति सूत्रे महाभाष्येऽभिहितम्—'सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते। आधेयश्चाक्रियायश्च सोऽसत्त्वप्रकृतिर्गुणः' इति। 'अयमर्थः—द्रव्यमाश्रयते। तत एव च द्रव्यान्निवर्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते। ननु क्रियाप्युक्तलक्षणा भवतीति चेन्न। आधेयः उत्पाद्यः, यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः यथाकाशादेर्महत्त्वादिः। क्रिया तूपाद्यैव न नित्येति न तस्या गुणान्तर्भावः। नन्वेवं सत्यपि द्रव्यस्यापि गुणत्वं प्राप्नोति। तन्निवारणायोक्तम्—असत्त्वप्रकृतिरद्रव्यस्वभाव इति। क्रिया पाकादिपदवाच्या। तदुक्तं वाक्यपदीये—'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते'

बर्फ, दुग्ध, शंख, कुन्दपुष्प आदि पदार्थों में श्वेत वर्ण की भिन्नता होने पर भी जिस कारण श्वेतत्व रूप एक जाति का बोध होता है, वहां श्वेतत्वरूप जाति में सङ्केत माना जा सकता है। पूरी, लड्डू, चावल आदि के पाक में भी पाकत्वरूप सामान्य ( जाति ) है। बालक, वृद्ध, स्त्री आदि से कहे हुए डित्थ आदि संज्ञाओं में भी डित्थत्व आदि जाति विद्यमान रहती है। अतः जाति में ही संकेत मानना चाहिये। इस मत में यह दोष आ जाता है कि 'चलती हुई गौ को लाओ' इस वाक्य में चलनक्रिया का सम्बन्ध होने पर भी पुरुष क्रिया में संकेत न होने से स्थित ( बैठी हुई ) गौ को ला सकता है। अतः जाति गुण आदि सब पदार्थों में संकेत माना जाना चाहिये। शुक्लादि को गुण कहते हैं। शुक्लादि गुण में संकेत मानने से कृष्ण, पीत, आदि वर्णों से भेद मालूम हो जाता है। गुण का लक्षण व्याकरण महाभाष्य में लिखा है कि जो पदार्थ में रहे और पदार्थ से हटाया भी जा सके तथा भिन्नजातीय द्रव्यों में भी रहे उत्पन्न किया जावे वा आकाश में महत्व के समान स्वयं सिद्ध हो, ऐसे द्रव्य से भिन्न वस्तु को गुण कहते हैं। पाक-गमन आदि को क्रिया कहते हैं। वाक्यपदीय में इसका लक्षण यह बतलाया है कि पाकादि क्रिया में जिस प्रकार प्रारम्भ से समाप्ति पर्यन्त के व्यापार को पाकक्रिया के नाम से कहा जाता है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति। अस्यार्थः—सिद्धं भूतम्। असिद्धं भूतभिन्नं भविष्यद्वर्तमानं च यावत्सर्वं व्यापारवृन्दं साध्यत्वेन तत्प्रकारत्वेनाभिधीयते साऽभिधीयमाना क्रियेति कथ्यते। तेन—अपाक्षीत्, पचति, पक्ष्यति, इत्यादौ सर्वत्र क्रियात्वम्। अत्र हेतुः—आश्रितं क्रमरूपं येन तत्त्वात् पूर्वापरीभूतावयवत्वादित्यर्थः। अयं भावः—पाकादिषु कार्येषु प्रारम्भादिसमाप्तिपर्यन्तक्रियाकलापः पाकादिक्रियापदवाच्य इति। वस्तुनो योगः सम्बन्धो वस्तुयोगः। यथा 'दण्डी' इत्यादौ दण्डसम्बन्धः। अयं दण्डसम्बन्धो वाच्यो वाच्यतावच्छेदको वा। अत्र दण्डसम्बन्धस्य विशेषणत्वेन भानम्। अयमेव वस्तुयोगशब्दः। यत्र जात्यादयः सम्बन्धेन च व्यवहितास्तत्र त एव प्रवृत्तिनिमित्तानि वाच्या वा। यत्र तु तेन व्यवहितास्तत्र वस्तुयोग एव तथा। यथा दण्डो गोत्ववानित्यादौ। अत एव द्रव्ययोग इत्युपेक्ष्य वस्तुयोग इत्युक्तम्।

डित्थादिशब्दः संज्ञा। यदृच्छाशब्द इति नामान्तरम्। एते शब्दा एकव्यक्तिवाचिनो भवन्ति। 'हिरण्यपूर्वं कशिपुं प्रचक्षते' (शिशुपा० १ सर्ग ४२ श्लोक०) 'धनुरुपपदमस्मै वेदमभ्यादिदेश' (किराता० १८।४४), 'देवपूर्वं गिरिं ते' (मेघदू० पू० भा०४२) इत्यादिस्थलेषु निर्देशशब्दाः सन्ति। वाचकवर्णानां स्वरपरत्वं निर्देशत्वम्। उक्तोदाहरणेषु हिरण्यपूर्वकशिपुपदाभ्यां हिरण्यकशिपुवर्णवत्त्वेव वाच्या वाचकत्वावच्छेदिका वा। तेनात्र निर्देशशब्दत्वं विज्ञेयम्। प्रस्तुतग्रन्थकारमते निर्देशशब्दतयाऽभिधयार्थप्रतीतिः। अन्ये त्वत्र लक्षणां स्वीकुर्वन्ति। अत्र जातिगुणक्रियावस्तुयोगसंज्ञासम्बन्धानामभावान्न जात्यादिशब्दत्वम्। नापि च रूढयौगिकादिशब्दत्वम्। एवं च जातिगुणक्रियावस्तुयोगसंज्ञानिर्देशशब्दैरभिधायाः षड्विधत्वं सम्पन्नम्।

---

उसी प्रकार प्रारम्भ से समाप्ति पर्यन्त के व्यापार को क्रिया कहते हैं। भूत, वर्तमान व भविष्यत् ये तीनों ही क्रियायें होती हैं। किसी वस्तु के सम्बन्ध को वस्तुयोग कहते हैं। जैसे दण्डी इस शब्द से दण्ड का सम्बन्ध ज्ञात होता है। यह सम्बन्ध ही उक्त पदमें वाच्य रहता है। जहां जात्यादि का सम्बन्ध दूर रहता है, वहां उक्त वस्तुयोग द्वारा ही अभिधेयार्थ जाना जाता है। डित्थ, देवदत्त आदि शब्द संज्ञाशब्द होते हैं। इनको यदृच्छा शब्द भी कहते हैं। ये शब्द एक ही व्यक्ति के वाचक होते हैं। जहां शब्दों वा वर्णों ही का निर्देश किया जावे, वे निर्देश शब्द होते हैं। जैसे शिशुपालवध (११४२) में 'हिरण्य पद है पूर्व में जिसके ऐसा कशिपुपद' अर्थात् हिरण्यकशिपु लिखा गया है। इस पद से प्रथम केवल हिरण्य व कशिपु पदों का ही निर्देश होता है। अतः यह निर्देश पद है। ग्रन्थकार निर्देश में भी संकेत मानता है। अन्य विद्वान् ऐसे स्थल में लक्षणा से बोध मानते हैं। इस प्रकार जाति, गुण, क्रिया, वस्तुयोग, संज्ञा व निर्दे-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गौर्नीलः पाचको दण्डी डित्थः कंस इति क्रमात्
कं संहिनस्ति कंसारिर्नरं च कं समाश्रितम् ॥ ३ ॥
न योगादेरायतनं न संकेतनिकेतनम् ।

---

एषां शब्दानामुदाहरणानि प्रदर्शयिष्यन्ते ॥ २ ॥

जात्यादिशब्दानामुदाहरणानि क्रमेणाह—गौरिति । गौर्गोत्वरूपजातिवाचकशब्दः । नीलो नीलत्वरूपगुणवाचकशब्दः । पाचकः पाकत्वरूपक्रियावाचकः शब्दः । दण्डी दण्डत्वरूपवस्तुयोगवाचकः शब्दः । डित्थो डित्थत्वरूपसंज्ञावाचकः शब्दः । कंसः कंकारसकाररूपवर्णनिर्देशवाचकः शब्दः । एते शब्दाः क्रमादुदाहरणानि । निर्देशवाचकशब्दस्य लक्षणं समन्वेति किमिति । कंसारिः कृष्णः कं संहिनस्तीति प्रश्नः । उत्तरं चेदम्—कं कंकारं समाश्रितं प्राप्तं नरं पदं नरकमित्यर्थः । तथा सं संकारमाश्रितं प्राप्तं कं कंकारं कंसमित्यर्थः । हिनस्ति हन्तीति । अत्र समाश्रितं कमिति कथने सकारककारशब्दौ प्रतीयेते इति वर्णानां स्वपरत्वम् । वर्णानां स्वपरत्वे जात्यादिभिन्नविषयी निर्देशशब्दः । एवं कंसादिशब्दो यत्र व्युत्पत्त्या निर्दिश्यत इति तत्र तस्य निर्देशपदेन ग्रहणम् । यत्र तु कंसो हत इत्यादावर्थपरता तत्र तस्य जात्यादिशब्दत्वम् ॥ ३ ॥

निर्देशशब्दस्य यौगिकत्वादि निरस्यति—न योगेति । शब्दस्य स्वपरत्वं निर्देशत्वम् । तच्च न योगादेर्व्युत्पत्त्यादेरायतनमास्पदम् । न चेदं संकेतस्य डित्थादिवत्सं-

---

शब्दों में संकेत होने से अभिधा के छै भेद होते हैं ॥ २ ॥

क्रम से जात्यादि के उदाहरण दिये जाते हैं—गो शब्द गोत्वरूप जाति का बोधक है । नीलपद नीलत्वरूपी गुण का उदाहरण है । पाचकशब्द पाक क्रिया द्वारा पुरुष का बोधक होता है । दण्डीपद दण्डसम्बन्ध ( वस्तुयोग ) द्वारा अर्थबोधक होता है । डित्थ, देवदत्त आदि पद संज्ञावाचक हैं । 'कंसं हिनस्ति०' इस उदाहरण में कंसपद निर्देशवाचक है । उदाहरण के श्लोक में प्रश्न है कि कृष्ण ने किसका विनाश किया, उत्तर में लिखा गया है कि ककार से युक्त नर का अर्थात् नरक का तथा 'कंकार से युक्त स का अर्थात् कंस का विनाश किया है ।' यहां केवल अक्षरों का निर्देश किया गया अतः निर्देशवाचक शब्द है । जहां कंस आदि पद उक्त प्रकार की व्युत्पत्ति से बतलाया जावे, वहां निर्देश होता है । और जहां 'कंसो हतः' कंस मारा गया इस रीति से कंस पद का अर्थ किया जावे वहां निर्देश नहीं होता ॥ ३ ॥

उक्त निर्देश पद में जाति आदि का निरास किया जाता है. निर्देश शब्द में न तो व्युत्पत्ति होती है और न उसमें संकेत ही माना जाता है, किन्तु यहां

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वृत्त्या निर्देशशब्दोऽयं मुख्यया स्वाभिधेयया ॥ ४ ॥

केतस्य निकेतनं स्थानम् । अतोऽयं निर्देशे स्वरूपे शब्दो निर्देशशब्दः कंसादिः । स्व वर्णद्वयमेवाभिधेयं यस्यां सा, तया । मुख्यया वृत्त्या—अभिधाशक्त्या प्रतीयत इति शेषः । जात्यादिभ्यो भिन्नाभिधा स्वीकार्येति भावः । वैयाकरणमहाभाष्ये 'चतुष्टयी शब्दानां प्रवृत्तिः' इत्युक्तम् । अत्र तु सा षड्विधेति विशेषः । एवं ग्रन्थकृताभिधा निरूपिता । अथात्रोपयोगी शक्तिवादस्य विशेषकाण्डेऽभिहितः संकेतप्रकारोऽभिधीयते । यथा हि धेन्वादिपदं धानकर्मत्वगोत्वोभयादिविशिष्टार्थकम् । यथा नानाधर्मविशिष्टैकधर्मिवाचकपदाच्छक्तिप्रमातो नैकं धर्मं परित्यज्यापरधर्मबोधस्तथा पुष्पवन्तादिपदादपि विज्ञेयम् । पुष्पवन्तादिपदेनोभयविशिष्टबोधः । अत्र शक्तेरैक्यान्न नानार्थता । एवं सर्वपदानामपि बुद्धिविषयतावच्छेदकत्वेन शक्तेरैक्यान्न नानार्थता । युष्मदः स्वसम्बोध्ये, अस्मद उच्चारणकर्तरि, सर्वपदस्याशेषे, किमो जिज्ञासिते, अव्ययकिमस्तु वितर्के, यत्पदस्य तत्पदोपस्थाप्ये, तत्पदस्य यत्पदोपस्थाप्ये, इदमेतदोः प्रत्यक्षबुद्धिविषये, अदसः परोक्षबुद्धिविषये, स्वनिजादिपदानां समभिव्याहृतपदोपस्थाप्ये, एकशब्दस्य कैवल्यादिविशिष्टे शक्तिरिति । आकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानान्यपि शाब्दबोधे कारणानि । अनेकार्थस्थले तात्पर्यबोधकानि तु वाक्यपदीये

---

वर्णों का बोध मुख्य वृत्ति अभिधा से ही होता है । अतः यह जात्यादि से भिन्न अभिधा मानी गई है । व्याकरणमहाभाष्य में जाति, गुण, द्रव्य व क्रिया इन चार पदार्थों में ही संकेत माना है । प्रस्तुत ग्रन्थकार की वस्तुयोग निर्देश में भी संकेत मानना विशेष बात है । यह ग्रन्थकार के मन से अभिधावृत्ति का निरूपण हुआ । अब शक्तिवाद के विशेषकाण्ड से यहां विशेष शब्दों के संकेत का प्रकार बतलाया जाता है—धेनुपद का दुग्ध को धारण करनेवाली गौ में संकेत है । जिस प्रकार नानाधर्मों से युक्त व एकधर्मी के वाचक पद से शक्ति द्वारा अर्थ का बोध होता है, उसी प्रकार पुष्पवन्त पद से सूर्य व चन्द्रमा का बोध हो जाता है । यहां शक्ति एक ही है अतः नाना अर्थ नहीं होते । इसी प्रकार सर्व पद के बुद्धिस्थ होने से शक्ति एक हो रहती है । अत एव सर्व पद के अनेक अर्थ नहीं होते । युष्मत्पद का सम्बोद्धव्य में, अस्मत्पद का उच्चारण करनेवाले में, सर्वपद का सब में, किंपद का जिज्ञासित में, अव्यय किंपद का वितर्क में, यत्पद का तत्पद के अर्थ में, तत्पद का यत्पद के अर्थ में, इदं एतत् पदों का प्रत्यक्षस्थित वस्तुओं में, अदस् शब्द का परोक्ष वस्तु में, स्व निज पदों का सहोच्चरित पद के अर्थ में और एक शब्द का कैवल्यविशिष्ट पदार्थ में संकेत । आकांक्षा, योग्यता, आसत्ति व तात्पर्यज्ञान भी शाब्दबोध के कारण होते

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पीयूषवर्षप्रभवं चन्द्रालोकं मनोहरम् ।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम् ॥ ५ ॥
जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ।
सूक्तिपीयूषवर्षस्य जयदेवकवेर्गिरः ॥ ६ ॥

---

भर्तृहरिणोक्तानि—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' ॥ इति ।

संयोगादिभिः शब्दस्यैकस्मिन्नर्थे नियन्त्रणं भवतीति भावः । काव्यमार्गे स्वरो न गण्यते । आदिपदेन च चेष्टादीनामपि ग्रहणम् ॥ ४ ॥

ग्रन्थस्य फलं ब्रूते—पीयूषेति । विबुधा विद्वांसो देवाश्च । पीयूषवर्षाद् ग्रन्थकर्तुर्जयदेवाच्च प्रभव उत्पत्तिर्यस्य स तम् । सुधाया निधानममृतनिकेतनम् । मनोहरं मनोरमं चन्द्रालोकं प्रस्तुतग्रन्थं चन्द्रप्रकाशं चासाद्य प्राप्य । मुदं प्रीतिं श्रयध्वमाश्रयध्वम् । यूयमिति शेषः । यथा चन्द्रप्रकाशो देवानां हर्षकृत् तथायं प्रस्तुतग्रन्थो विदुषां हर्षकृदिति भावः ॥ ५ ॥

अथ ग्रन्थकारः स्ववचःप्रकर्षं ब्रूते—जयन्तीति । अंगेभ्यो जन्म यस्य सोऽङ्गजन्मापुत्रः । याज्ञिकश्चासौ श्रीमांश्चेति याज्ञिकश्रीमान् स चासौ महादेवश्चेति याज्ञिकश्रीमन्महादेवस्तस्याङ्गजन्मा पुत्रस्तस्य यथोक्तस्य । सूक्तिरेव पीयूषं वर्षतीति तस्य जयदेवकवेरेतन्नामककवेः । गिरो वाचो जयन्ति । निर्दुष्टत्वादिति भावः ॥ ६ ॥

---

हैं । वाक्यपदीय में शब्दों के संयोग आदि को तात्पर्यबोधक कहा है । संयोग, विप्रयोग, साहचर्य, विरोधिता, अर्थ, प्रकरण, लिङ्ग, अन्य शब्द का सामीप्य, सा[मर्]थ्य, औचित्य, देश, काल, व्यक्ति, स्वर व चेष्टा, शब्द के [तात्पर्यबो]धक होते [हैं] । काव्य में स्वर नहीं माना जाता वह तो वेद में ही माना जाता है ॥४॥

अ[ब] ग्रन्थकार ग्रन्थ का फल बतलाता है कि जिस प्रकार पीयूष को बरसाने वाले चन्द्रमा से उत्पन्न हुआ, अमृत का स्थान व मनोहर चन्द्रमा का प्रकाश देवताओं को हर्षित [क]रता है [उ]सी प्रकार पीयूष वर्ष ( जयदे[व] [से] निर्मित, सुधा के स्थान, मनोहर इस चन्द्रालोक ग्रन्थ से विद्वान् हर्षित [हो]वें ॥ ५ ॥

अब ग्रन्थकार अपनी सूक्ति को सर्वोत्तम बतलाता है—याज्ञिकप्रवर, श्रीमा[न् म]हादेव के पुत्र, सूक्तिरूपी अमृत को बरसानेवाले जयदेव कवि की वाणी सर्वोत्तम है

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति दशसंख्यः सुखयतु ॥ १० ॥

इति चन्द्रालोकालङ्कारेऽभिधानिरूपणो नाम दशमो मयूखः ।

---

अथ दशममयूखसमाप्तिं प्राह–महादेव इति । महादेवः सत्रेति प्रथममयूखीयः षोडशश्लोक एव पूर्ववदत्रापि समाप्तौ पठनीयः । किन्तु तस्योत्तरभागे—

'मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति दशसंख्यः सुखयतु' ॥

इति विशेषः पठनीयः। पायगुण्डोपनामकवैद्यनाथभट्टेन तु रमाव्याख्यायाम्—

'प्रणीतस्तेनासौ सुकविजयदेवेन दशम-
श्चिरं चन्द्रालोके सुखयतु मयूखो दश दिशः' ।

इत्युत्तरार्धे पाठान्तरमुक्तम् । तच्चिन्त्यम् । महति ऋतुसंख्यः, महति मुनिसंख्यः, महति वसुसंख्यः, महति नवसंख्यश्चेति पूर्वेभ्यः समाप्तिश्लोकेभ्यो भिन्नक्रमत्वात् । तेनात्रापि 'महति दशसंख्यः' इत्येव पाठः समादरणीय इति सर्वं समीचीनम् ॥ ७ ॥

## अथ समाप्तिश्लोकाः

श्रीमज्जोधपुरं विराजतितमां राज्यं, तदन्तर्गतो
ग्रामः पोकरणः प्रसिद्धविभवैः सट्ठाकुरै रक्षितः ।
ग्रामाख्याप्रथिताभिधानविलसत्तट्ठाकुरैः पूजितं

---

'महादेवः सत्र०' इस प्रथम मयूख के सोलहवें श्लोक के उत्तर भाग में

'मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति दशसंख्यः सुखयतु' ॥

यह परिवर्त्तन कर के दशम मयूख की समाप्ति की जाती है । अन्य अर्थ पूर्ववत् जानना चाहिए ॥ ७ ॥

श्रीनन्दकिशोर शर्मा साहित्याचार्य की कथाभट्टी या नाम्नी हिन्दी व्याख्या में चन्द्रालोक का दशम मयूख समाप्त हुआ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नामावालपदाङ्कतद्गुरुकुलं जागर्ति तत्रोन्नतम् ॥ १ ॥

तद्वंश्यरत्नं बुधवृन्दवन्द्यो विप्रोऽभवद् दाक्षिमथ्यग्रगण्यः ।
हरादिगोविन्दपदाङ्कनामा सौभाग्यसम्पत्सु यशः समृद्धः ॥ २ ॥

श्रीमत्पोकरणाभिधः समभवद् वीराग्रिमः सालिम-
सिंहाख्यस्तनयामसौ सुरुचिरां जज्ञे च चांपावतीम् ।
निर्माप्य व्यतरत् स्वयं जयपुरे सा मन्दिरं सुन्दरं
यस्मै चन्द्रकुमारिका जयपुराधीशस्य पत्नी वरा ॥ ३ ॥

वैदुष्यप्रतिभादिसद्गुणगणप्रीतान्महेन्द्रोपमात्
प्रापद्राजगुरोः पदं जयपुराधीशाच्च यश्चामरे ।
राज्ञीस्थापितमन्दिरेऽप्यधिकृतिं राज्ये कथाभट्टता-
मभ्युत्थानमलंकृतां च शिबिकां विद्वत्सु मूर्धन्यताम् ॥ ४ ॥

श्रीनारायणनामकः समभवत्सूनुस्ततो मध्यम-
स्तत्पुत्रो जयचन्द्र इत्यभिधया ख्यातः कृती राजते ।
तस्य स्तस्तनयौ नयेन सहितौ विद्वद्गुणे संस्तुतौ
श्रीमन्नन्दकुमारनन्दसुपदप्रोद्यत्किशोराह्वयौ ॥ ५ ॥

तत्र नन्दकिशोरेण साहित्याचार्यताजुषा ।
चन्द्रालोके कृता व्याख्या गोविन्दीगर्भजन्मना ॥ ६ ॥

दीपावलिदिने सेयं पौर्णमासीति विश्रुता ।
अग्निग्रहनिधिक्षोणीवत्सरे पूर्णतामगात् ॥ ७ ॥

इति श्रीजयपुरपुरन्दरमौजमन्दिरस्थपण्डितसभासभ्येन, राजगुरुकथाभट्ट, वेदान्तभूषणोपाधिविभूषितेन, भूतपूर्वकाशिक-गवर्नमेण्टसंस्कृतपुस्तकालयीयप्र... न्वान्वेषणपरायणेन, भूतपूर्व—काशी—हिन्दूविश्वविद्यालयीयपाठ्य... रकसमितिजुषा जयपुरराजकीयसंस्कृतकालेजसाहित्यमहाध्यापकेन, कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायाः पौर्णमासी-प्रख्यायाश्चन्द्रालोकव्याख्याया दशममयूखे पर्यवसानम् ।

## समाप्तोऽयं ग्रन्थः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

